| | | | |
|---|---|---|---|
| ग्रन् | | । | रु० |
| १ | ग | | ६ |
| २ | र | | ६ |
| ३ | पु | | ४ |
| ४ | पं | | ० |
| ५ | ईशावास्योपनिषत्—सटीकशांकरभाष्याद्युपेता । ... .... | ० | १४ |
| ६ | केनोपनिषत्— सटीकशांकरभाष्याद्युपेता । ... ... ... | १ | ० |
| ७ | काठकोपनिषत्—टीकाद्वयसहितशांकरभाष्योपेता ।.... .... | १ | ४ |
| ८ | प्रश्नोपनिषत्—सटीकशांकरभाष्याद्युपेता । .... ... .... | १ | ० |
| ९ | मुण्डकोपनिषत्—सटीकशांकरभाष्याद्युपेता । .... ... | ० | १० |
| १० | माण्डूक्योपनिषत्—सटीकशांकरभाष्य-गौडपादीयकारिकाद्युपेता । | २ | ५ |
| ११ | ऐतरेयोपनिषत्—सटीकशांकरभाष्याद्युपेता । .... .... | १ | ४ |
| १२ | तैत्तिरीयोपनिषत्—सटीकशांकरभाष्याद्युपेता । .... .... | १ | १२ |
| १३ | तैत्तिरीयोपनिषद्भाष्यवार्त्तिकम्—सुरेश्वराचार्यकृतं सटीकम् । | २ | २ |
| १४ | छान्दोग्योपनिषत्—सटीकशांकरभाष्योपेता । .... .... | ५ | ० |
| १५ | बृहदारण्यकोपनिषत्—सटीकशांकरभाष्योपेता । .... ... | ८ | ० |
| १६ | बृहदारण्यकोपनिषद्भाष्यवार्त्तिकम्—भागत्रयात्मकम् । .... | २२ | ८ |
| १७ | श्वेताश्वतरोपनिषत्—भाष्यदीपिकाद्युपेता । .... .... | २ | ४ |
| १८ | सौरपुराणम्—श्रीमद्द्वैपायनप्रणीतमुपपुराणम् । .... .... | ३ | ० |
| १९ | रसरत्नसमुच्चयः—श्रीमद्वाग्भटाचार्यविरचितः, वैद्यकग्रन्थः । | ३ | १२ |
| २० | जीवन्मुक्तिविवेकः—विद्यारण्यविरचितः सटीकः । ... | ३ | १२ |
| २१ | ब्रह्मसूत्राणि—सटीकशांकरभाष्योपेतानि भागद्वयात्मकानि । .... | १२ | ० |
| २२ | श्रीशंकरदिग्विजयः—विद्यारण्यकृतः, टीकाटिप्पणीभ्यां सहितः । | ६ | ० |
| २३ | वैयासकन्यायमालाविस्तरः—भारतीतीर्थमुनिप्रणीतः । ... | १ | १२ |
| २४ | जैमिनीयन्यायमालाविस्तरः—श्रीमाधवप्रणीतः ।... ... | ८ | ० |
| २५ | सूतसंहिता—माधवकृतटीकोपेता भागत्रयात्मिका ।... ... | ११ | ८ |
| २६ | हस्त्यायुर्वेदः—पालकाप्यमुनिविरचितः । .... .... ... | ७ | ६ |
| २७ | वृन्दमाधवः—श्रीमद्वृन्दप्रणीतः सटीकः । वैद्यकग्रन्थः । ... | ६ | १२ |

| | | |
|---|---|---|
| २८ ब्रह्मपुराणम्—[illegible] | [illegible] | [illegible] |
| २९ उपनिषदां | - | १२ |
| ३० नृसिंहपूर्वोत्तरतापनीयोपनिषत्—भाष्याद्युपेता । .... ... | १ | १२ |
| ३१ बृहदारण्यकोपनिषन्मिताक्षरा—श्रीनित्यानन्दमुनिविरचिता । | २ | १२ |
| ३२ ऐतरेयब्राह्मणम्—सायणभाष्यसमेतं भागद्वयात्मकम् । .... | १० | १० |
| ३३ धन्वन्तरीयनिघण्टुः—धन्वन्तरिविरचितः । वैद्यकग्रन्थः । .... | ६ | ४ |
| ३४ श्रीमद्भगवद्गीता—शांकरभाष्योपेता । ... .... ... | २ | ० |
| ३४ श्रीमद्भगवद्गीता—सटीकशांकरभाष्योपेता । .... .... | ६ | ४ |
| ३५ संगीतरत्नाकरः—शार्ङ्गदेवकृतः सटीको द्विभागः । गानशास्त्रम् । | १० | ४ |
| ३६ तैत्तिरीयारण्यकम्—सायणभाष्यसमेतं भागद्वयात्मकम् । .... | ९ | १ |
| ३७ तैत्तिरीयब्राह्मणम्—सायणभाष्यसमेतं भागत्रयात्मकम् । .... | १४ | ८ |
| ३८ ऐतरेयारण्यकम्—सायणभाष्यसहितम् । .... ... .... | ३ | ० |
| ३९ संस्काररत्नमाला—गोपीनाथभट्टविरचिता भागद्वयात्मिका । | १२ | ८ |
| ४० संध्याभाष्यसमुच्चयः—कण्ठराजश्रीकृष्णपण्डितादिप्रणीतः । | २ | ० |
| ४१ अग्निपुराणम्—महर्षिव्यासप्रणीतम् । महापुराणम् । .... | ९ | ४ |
| ४२ तैत्तिरीयसंहिता—सायणभाष्यसमेता भागनवकात्मिका । .... | ४८ | १० |
| ४३ वैयाकरणसिद्धान्तकारिकाः—भट्टोजिदीक्षितकृताः सटीकाः । | ० | १२ |
| ४४ श्रीमद्भगवद्गीता—पैशाचभाष्यसमेता । ... .... .... | १ | ८ |
| ४५ श्रीमद्भगवद्गीता—मधुसूदन-श्रीधरकृतटीकोपेता । ... ... | ९ | ४ |
| ४६ याज्ञवल्क्यस्मृतिः—अपरार्ककृतटीकासहिता भागद्वयात्मिका । | १२ | ० |
| ४७ पातञ्जलयोगसूत्राणि—भाष्य-वृत्तिभ्यां समेतानि । ... | ३ | ० |
| ४८ स्मृतीनां समुच्चयः—अङ्गिरःप्रभृतिसप्तविंशतिस्मृत्यात्मकः । | ५ | ० |
| ४९ वायुपुराणम्—महर्षिव्यासप्रणीतम् । महापुराणम् । .... | ४ | १२ |
| ५० यतीन्द्रमतदीपिका—श्रीनिवासदासकृता । प्रकाशटीकोपेता । | १ | ४ |
| ५१ सर्वदर्शनसंग्रहः—माधवाचार्यप्रणीतः । ... ... .... | २ | ० |
| ५२ श्रीमद्गणेशगीता—नीलकण्ठकृतटीकोपेता .... .... ... | २ | ० |
| ५३ श्रौतसूत्रम्—सत्याषाढविरचितं भागनवकात्मकम् । .... | २१ | [illegible] |
| ५४ मत्स्यपुराणम्—श्रीमद्द्वैपायनमुनिप्रणीतम् । महापुराणम् । | ६ | ० |
| ५५ पुरुषार्थचिन्तामणिः—आठवले इत्युपाह्वविष्णुभट्टकृतः । ... | ४ | ० |
| ५६ नित्याषोडशिकार्णवः—भास्कररायकृतटीकासहितः । .... | ३ | ८ |
| ५७ आचारभूषणम्—[illegible]त्र्यम्बककृतम् । | ४ | ६ |

| | | |
|---|---|---|
| ५८ आचारेन्दुः—माटे इत्युपाह्वत्र्यम्बकविरचितः । .... .... | ४ | ० |
| ५९ श्राद्धमञ्जरी—बेळकरोपाह्वबापूभट्टविरचिता । .... .... | २ | ० |
| ६० यतिधर्मसंग्रहः—विश्वेश्वरसरस्वतीकृतः । .... .... .... | १ | १२ |
| ६१ गौतमप्रणीतधर्मसूत्रम्—हरदत्तकृतटीकासमेतम् । .... .... | २ | ८ |
| ६२ ईशकेनकठप्रश्नमुण्डमाण्डक्यानन्दवल्लीभृगूपनिषदः—सटीकाः | २ | ८ |
| ६३ छान्दोग्योपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । .... | ३ | १२ |
| ६४ बृहदारण्यकोपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | ४ |
| ६५ शाङ्खायनब्राह्मणम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । .... | १ | ४ |
| ६६ काव्यप्रकाशः—उद्योतयुतप्रदीपसहितः । .... .... .... | ६ | ४ |
| ६७ ब्रह्मसूत्राणि—दीपिकासमेतानि । .... .... .... | ४ | ८ |
| ६८ बृहद्ब्रह्मसंहिता—नारदपञ्चरात्रान्तर्गता । .... .... .... | १ | १२ |
| ६९ ज्ञानार्णवतन्त्रम्—ईश्वरप्रोक्तम् । तन्त्रशास्त्रग्रन्थः । .... | १ | ४ |
| ७० स्मृत्यर्थसारः—श्रीधराचार्यविरचितः । .... .... .... | १ | १० |
| ७१ बृहद्योगतरङ्गिणी—त्रिमल्लभट्टविरचिता भागद्वयोपेता । .... | १० | १२ |
| ७२ परिभाषेन्दुशेखरः—वैद्यनाथकृतगदाख्यटीकायुतः । .... | २ | ६ |
| ७३ गायत्रीपुरश्चरणपद्धतिःश्रीमच्छंकराचार्यविरचिता । .... .... | १ | ८ |
| ७४ द्राह्यायणगृह्यसूत्रवृत्तिः—रुद्रस्कन्दप्रणीता । .... .... | १ | ० |
| ७५ ब्रह्मसूत्रभाष्यार्थरत्नमाला—सुब्रह्मण्यविरचिता । .... | ४ | ४ |
| ७६ ईशकेनकठोपनिषदः—दिगम्बरानुचरकृतव्याख्योसमेताः । .... | १ | ० |
| ७७ वेदान्तसूत्रमुक्तावलिः—ब्रह्मानन्दसरस्वतीविरचिता । .... | २ | ६ |
| ७८ त्रिस्थलीसेतुः—नारायणभट्टविरचितः । .... .... .... | ३ | १२ |
| ७९ छान्दोग्योपनिषत्—मिताक्षराख्यव्याख्यासमेता । .... .... | २ | ० |
| ८० वाक्यवृत्तिः—श्रीमच्छंकराचार्यकृता सटीका । .... .... | ० | ८ |
| ८१ आश्वलायनश्रौतसूत्रम्—नारायणकृतवृत्तिसमेतम् । .... | ४ | ११ |
| ८२ ब्रह्मसूत्रवृत्तिः—हरिदीक्षितविरचिता । .... .... .... | २ | ७ |
| ८३ संक्षेपशारीरकम्—व्याख्यासहितं भागद्वयोपेतम् । .... | ९ | १ |
| ८४ अद्वैतामोदः—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । .... .... | २ | ० |
| ८५ ज्योतिर्निबन्धः—शूरमहाराष्ट्रश्रीशिवराजविरचित. । .... | ३ | १५ |
| ८६ विधानमाला—श्रीनृसिंहभट्टविरचिता । .... .... .... | ४ | ४ |
| ८७ अग्निहोत्रचन्द्रिका श्रीवामनशास्त्रिभिः कृता । .... .... | २ | १४ |
| ८८ निरुक्तम्—दुर्गाचार्यकृतवृत्तिसमेतम् । द्वयात्मकभागम् । .... | १६ | ४ |

आनन्दाश्रमसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः ५३

# सत्याषाढविरचितं श्रौतसूत्रम् ।

महादेवशास्त्रिसंकलितप्रयोगचन्द्रिकाव्याख्यासमेतम् ।

द्वाविंशप्रभृतिपञ्चविंशपर्यन्तप्रश्नात्मको नवमो भागः ।

( महादेवदीक्षितसोमयाजिकृतप्रयोगचन्द्रिकासंवलितापस्तम्बीयहौत्रसूत्र-रूपाष्टिनीयप्रश्नसहितः ) ।

एतत्पुस्तकं

वे० शा० सं० रा० शंकरशास्त्री मारुलकर

इत्येतैः संशोधितम ।

तच्च

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८५२

खिस्ताब्दाः १९३०

# आपस्तम्बविरचितं हौत्रसूत्रम्

महादेवदीक्षितसोमयाजिकृतप्रयोगचन्द्रिकासमेतम् ।

## द्वितीयः प्रश्नः ।

गजवदनं शुभरदनं सज्जनशरणं समस्तगुणसदनम् ।
सच्चित्सुखसारघनं सदयहृदयं गणाधिपं वन्दे ॥ १ ॥
कुमदकुन्दसिताम्बरसंयुतां विमलमौक्तिकहारसुशोभिताम् ।
सकलसिद्धगणैरपि सेवितां परिणमामि भजामि च शारदाम् ॥ २ ॥
आपस्तम्बं मुनिं वन्दे मन्दधीर्हितकाम्यया ।
योऽनुष्ठेयपदार्थानां क्रमकल्पमकल्पयत् ॥ ३ ॥
श्रीमद्भगवतो धातुरवतारेण सूत्रितम् ॥
आपस्तम्बेन तद्व्याख्या महादेवेन रच्यते ॥ ४ ।

प्रथमप्रश्ने सर्वेष्टीनां प्रकृतिभूतौ दर्शपूर्णमासौ निरूपितावथेदानीमग्न्याधानादिहौत्रं द्वितीये व्याचष्टे—

अग्न्याधेयं व्याख्यास्यामः । तत्राऽऽग्नेयस्य तन्त्रं प्रक्रमयति । तस्याः पञ्चदश सामिधेन्यः । पञ्च प्रयाजाः । वार्त्रघ्नावाज्यभागावथ हविषोऽग्निर्मूर्धा भुव इति त्रिष्टुभौ संयाज्ये । आग्नेयस्य दक्षिणाकाले दक्षिणां प्रतिगृह्णाति । अपरेण गार्हपत्यं धेनुꣳ होत्रे । सिद्धमिष्टिः संतिष्ठते ॥ १ ॥

अग्नीनामाधेयमग्न्याधेयम् । तत्कर्तव्यमिति कृत्यल्युटो बहुलमिति भावे यत् । अग्निराधेयोऽस्मिन्कर्मणीति वा बहुव्रीहिः । सोऽयमाधानसंस्कारोऽग्नीनां वैदिकः । विशिष्टे काले विशिष्टे देशे विशिष्टपुरुषेण विशिष्टैर्मन्त्रैर्गार्हपत्याद्युत्पत्त्यर्थं यदरण्युत्पादिताङ्गाराणां निधानं तदग्न्याधेयमित्युच्यते । तस्य च हौत्रमिति शेषः । अथ होतारं समन्त्रकं वृत्वा मधुपर्कादिना पूजयेदिति वैखानसः । तत्राऽऽग्नेयेष्ट्यां तु प्रकृतिवत्पञ्चदश सामिधेन्यः पञ्च प्रयाजा इति बौधायनः । पौर्णमासतन्त्रत्वाद्वार्त्रघ्नौ—अग्निर्वृत्राणि, त्वꣳ सोमासि, इत्याज्यभागावथ हविषा प्रकृतिवत्समानमिति । दक्षिणाकाले देवस्य त्वा

राजा त्वा० धेनुमित्यादूहेन गृह्णाति । अपरेण गार्हपत्यमिति दर्शपूर्णमासाभ्यां सिद्धं यथा भवति तथेत्यर्थः । संतिष्ठते समाप्नोति ॥ १ ॥

पवमानहवींष्यपि सद्यो वा । समानतन्त्राणि नानातन्त्राणि वाऽऽग्नेयेन वा समानतन्त्राणि । यदि यजेदग्निना पवमानेनाग्निना पावकेनाग्निना शुचिनेति तिस्रो देवताः । अथ द्वादशसु व्युष्टासु पृष्ठ्यायां स्तीर्त्वाऽपः प्रणीयाग्निना पवमानेन यजेतेत्येके । तस्याः पञ्चदश सामिधेन्यः । पञ्च प्रयाजाः । वार्त्रघ्नावाज्यभागावथ हविषोऽग्न आयूंष्यपि पवसेऽग्ने पवस्वेति त्रिष्टुभौ संयाज्ये । सिद्धमिष्टिः संतिष्ठते ॥ २ ॥

अग्न आयूंष्यीत्याग्नेयस्य पुरोनुवाक्या । अग्ने पवस्वेति याज्या । अग्ने पावकायेत्यस्य पुरोनुवाक्या । स नः पावकेति याज्या । अग्नये शुचय इत्यस्य पुरोनुवाक्या—अग्निः शुचिव्रततम इति । उदग्ने इति (तै० स० १–३–१४) याज्या । स्विष्टकृदादि प्रकृतिवत्समानम् ॥ ५ ॥

अथ तदानीमेवाग्निना पावकेनाग्निना शुचिना यजेत । तस्याः पञ्चदश सामिधेन्यः । पञ्च प्रयाजा वार्त्रघ्नावाज्यभागावथ हविषोरग्ने पावकः स नः पावकाग्निः शुचिव्रततम उदग्ने शुचयस्तवेति त्रिष्टुभौ संयाज्ये । सिद्धमिष्टिः संतिष्ठते ॥ ३ ॥

गतार्थः ॥ ३ ॥

ऐन्द्राग्नेन यजेताऽऽदित्येन । तस्याः सामिधेन्यः । वार्त्रघ्नावाज्यभागावथ हविषोरिन्द्राग्नी रोचना दिवः श्नथद्वृत्रमित्यैन्द्राग्नस्यादितिर्न उरुष्यतु महीमू षु मातरमित्यादित्यस्य त्रिष्टुभौ संयाज्ये । अथैतं चरुमुद्धृत्य चत्वार आर्षेयाः प्राश्नन्ति । सिद्धमिष्टिः संतिष्ठते ॥ ४ ॥

उभयत्र याज्यापुरोनुवाक्ये इति शेषः । समिध्यमानवती समिद्धवती चान्तरेण पृथुपाजवत्यौ धाय्ये दधातीति वैखानसः । वृधन्वत्याज्यभागाविति बौधायनः ॥ ४ ॥

आग्नावैष्णवेन(वाभ्यां) यजेत । अग्नीषोमीयेन विष्णुना शिपिविष्टेन । तस्याः पञ्चदश सामिधेन्यः । वार्त्रघ्नावाज्यभागावथ हविषामग्नाविष्णू अग्नाविष्णू अग्नीषोमा सवेदसा युवमेता मतत्ते अग्य शिपिविष्ट किमित्ते विष्णो इति त्रिष्टुभौ संयाज्ये । सिद्धमिष्टिः संतिष्ठते ॥ ५ ॥

याज्यापुरोनुवाक्ये इत्यनुषङ्गः सर्वत्र । स्पष्टोऽर्थः ॥ ५ ॥

आदित्यं घृते चरुं सप्तदश सामिधेनीकं धेनुर्दक्षिणा सर्वेषामनुनिर्वाप्याणां स्थाने वाजसनेयिनः समामनन्ति । तस्या वार्त्रघ्नावाज्यभागावथ हविषोऽदितिर्न उरुष्यतु महीमू षु मातरमित्यादित्यस्य त्रिष्टुभौ संयाज्ये । सिद्धमिष्टिः संतिष्ठते ॥ ६ ॥

पवमानहविर्भिरस्याः कालो व्याख्यातस्तत्स्थानापत्तेः । पूर्वादित्यधर्मास्तु न भवन्ति । सप्तदश सामिधेनीकल्पस्य पुनर्विधानात् । गतार्थमन्यत् ॥ ६ ॥

अथातोऽन्वारम्भस्यैव मीमांसाऽन्वारम्भं पौर्णमास्यां समानोपवसथं करोति । अग्नाविष्णुभ्यां यजेत । सरस्वत्या सरस्वताऽग्निना भगिना च नानातन्त्रमेके । तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा वार्त्रघ्नावाज्यभागावथ हविषामग्नाविष्णू अग्नाविष्णू म णो देव्यानो दिवः पीपिवा१ंस१ं सरस्वतः स्तनं ये ते सरस्व ऊर्मय इति त्रिष्टुभौ संयाज्ये तद्विश्वा सुभग सौभगान्यग्ने वियन्ति वाजिनो वाजिनो न वयाः । श्रुष्टी रयिर्वाजो वृत्र तूर्ये ह्रष्टिरीड्यो रीतिरपाडु । त्वं भगो न आहि रत्नमिषे परिज्मेव क्षयति दस्मवर्चाः । अग्ने मित्रो न बृहत ऋतस्यासि क्षत्ता वामस्य देव भूरेरिति याज्यानुवाक्ये । मिथुनौ गावौ दक्षिणा सिद्धमिष्टिः संतिष्ठते ॥ ७ ॥

उपवसथः पौर्णमास्यां सद्यस्कालप्रयोगः । स्पष्टोऽर्थः ॥ ७ ॥

सामिधेन्यः। पञ्च प्रयाजाः। वार्त्रघ्नावाज्यभागावथ हविषोऽग्नाविष्णू अग्नाविष्णूरित्यग्नाविष्णो-स्त्रिष्टुभौ संयाज्ये। सिद्धमिष्टिः संतिष्ठते ॥ १ ॥

पशुरैन्द्राग्नः। गतार्थमन्यत् ॥ १ ॥

अथाग्निप्रणयनम्। तीर्थेन प्रपद्याऽऽहवनीयस्योपविश्य तिष्ठन्वा। यदा प्रेष्यत्यग्नये प्रणीयमानायानुब्रूहीत्युक्ते तदाऽग्निं प्रणीयाऽन्वाह मध्यमेन स्वरेण हिंकृत्य व्याहृतीर्जपित्वाऽनवानं प्र देवं दैव्या धिया इत्यष्टाभिर्ऋग्भिः प्रत्यग्निं प्रणयेत्। त्रिः प्रथमामन्वाह त्रिरुत्तमाम्। प्रक्रमस्थाने वाचं विसृजति। तिष्ठन्संप्रैषे तथैव वाचं विसृजतीत्येके ॥ २ ॥

ततः परमग्निप्रणयनं वक्ष्यत इति शेषः। क प्रपद्ये सत्यं प्रपद्य इत्यादिना वा। अनवानमनुच्छ्वासम्। यद्यपि अष्टौ ऋचः सन्ति तत्राऽऽद्यन्तयोस्त्रिस्त्रिर्द्वादश संपद्यन्ते। प्रक्रमो विक्रमः पादविन्यास इति यावत्। स्पष्टमन्यत् ॥ २ ॥

यदा यूपायाज्यमानायानुब्रूहीति संप्रेष्यति तदा चात्वालोत्करावन्तरेण प्रपद्योत्तरवेदेरुत्तरश्रोणेर्निरस्योपविशति वा। हिंकृत्य व्याहृतीश्च जपित्वा यूपाञ्जनीया अन्वाह अञ्जन्ति त्वामध्वरे देवयन्त इति सप्त। तासां त्रिः प्रथमामन्वाहोत्तमेन वचनेनार्धर्चे उपरमति। यदा जानात्युच्छ्रीयमाणायानुब्रूहीति यदूर्ध्वस्तिष्ठा[स]दिति प्रतिपद्य समर्थे आ॰॰दये वर्धमान इत्यर्धर्चे उपरमति। यदा जानाति परिधीयमाणायानुब्रूहीति पुनन्ति धीरा अपसो मनीषा इति प्रतिपद्योत्तमया त्रिः परिदधाति। यदा, यूपाय परिवीयमाणायानुब्रूहीति तदा होता युवा सुवास इत्यन्वाह ॥ ३ ॥

यद्यप्यञ्जनार्थ एको मन्त्र उच्छ्रयणार्थाः पञ्च मन्त्राः परिव्ययणार्थ एको मन्त्रस्तथाऽप्यञ्जनस्य प्राधान्याच्छत्रिन्यायेन सप्तापि मन्त्रा यूपाञ्जनीया इत्युच्यन्ते ॥ ३ ॥

तस्य सप्तदश सामिधेन्यः। समिध्यमानवतीं समिद्धवतीं चोत्तरेण पृथुपाजवत्यौ धाय्ये दधाति। पृथुपाजा अमर्त्यस्तत्सवाधो यतः स्रुच इति। त्वं वरुण इति वसिष्ठराजन्यानाम् ॥ ४ ॥

प्रस्तुतः संहिताब्राह्मणयोः ( तै० सं० २–५–७ ) सामिधेन्य ऋच एकादशैवाऽऽम्नाताः। तासु प्रथमाया अन्तिमायाश्च त्रिभिः पठेन पञ्चदश संख्या पूरणीया भवति। सप्तदशसंख्यापूरणीयत्वे तु पृथुपाजा ( तै० ब्रा० ३–५–१ ) इत्याद्यपरर्द्धयस्य तासु प्रक्षेपोऽपि विधीयते। एकविंशतिसंख्यायाः पूरणीयत्वे षण्णामप्यृचां प्रक्षेपणीयता विहिता। ताः प्रक्षेपणीयर्च एव धाय्या उच्यन्ते। तत्र धाय्ययोर्धाय्यानां वा प्रक्षेपः खलु समिद्धमानसमिद्धवत्योर्मध्य एव भवति। ते च ऋचौ दशम्येकादश्यौ ( मी० द० अ० ३–६–९–१० ) इति सूत्रयोर्द्वितीयतृतीयाधिकरणयोस्तत्रैवाधिकरणरत्नमालायां चैतद्विचारः सम्यगुक्तो द्रष्टव्यः ॥ ४ ॥

यदाऽग्नये मथ्यमानायानुब्रूहीति संप्रेष्यति हिंकृत्य व्याहृतीश्च जपित्वाऽथाभिमन्थनेऽन्वाह—अभि त्वा देव सवितरीशानमिति। त्रिः प्रथमामन्वाह। त्रिरुत्तमाम्। यदि मथ्यमानो न जायेत राक्षोघ्नीरनुब्रूयात्कृणुष्व पाज इति पञ्च। अग्नी रक्षांसि सेधतीति तिस्रः ॥ ५ ॥

यदि मथ्यमानो न जायेत तदा राक्षोघ्नीरनुब्रूयादिति बौधायनवैखानसौ ॥ ५ ॥

यदा जातायानुब्रूहीति जाते संप्रेष्यति तदा उत ब्रुवन्तु जन्तव इति द्वाभ्यां पठेत्। यदा प्रह्रियमाणायानुब्रूहीति संप्रेष्यति प्र देवं देववीतय इति षड्चः पठेत् ॥ ६ ॥

स्पष्टोऽर्थः ॥ ६ ॥

अथ मैत्रावरुणदण्डेऽध्वर्युर्यजमानं वाचयति त्वां गावो वृणत राज्याय त्वां हवन्तु मरुतः स्वर्काः। वर्ष्मन्क्षत्रस्य ककुभिः शिश्रियाणस्ततो न उग्रो विभजा वसूनीति होता वा। तमग्रे गृहीत्वा मैत्रावरुणाय प्रयच्छति मित्रावरुणयो-

वेति। यथापूर्वं यथाप्रकृतीत्यर्थः। अग्ने तमद्याश्वमिति। आदितो द्वे प्रधानस्य परतो द्वे स्विष्टकृतोऽष्टाकपालपक्षे यदि पञ्चकपालो गायत्र्यौ संयाज्ये यद्यष्टाकपालः पङ्क्त्यौ इति नियमात्। उभयीर्दक्षिणा ददाति आग्न्याधेयिकीः पौनराधेयिकीश्चेति वचनात्पुनर्निष्कृतो रथो दक्षिणा शतमानं हिरण्यम्। इत्युभयीरित्यर्थः। द्वयोरनूयाजयोर्विभक्तीरिति। तद्यथा—देवे अग्नौ बर्हिर्देवो अग्निर्नराशंस इति। नोत्तम इति वचनादुत्तमप्रयाजेन व्याख्यातः। उच्चैरुत्तमा संप्रेष्यतीति प्रदर्शनार्थम्। याज्याऽप्युच्चैरेव यथोक्तमुपांशु यजत्युत्तमादनूयाजादिति। आग्निवारुणं यजेतेति द्वितीयस्मिन्पक्षे पवमानहविषामन्ते आग्निवारुणस्तदन्त आदित्यस्तदन्ते वैष्णव इति क्रमः। पुनराधेयं समाप्तम्॥९॥

अथ वर्षासु श्यामाकाग्रयणं करिष्यन्भवति। तस्याः पञ्चदश सामिधेन्यः। पञ्च प्रयाजा वार्त्रघ्नावाज्यभागावथ हविष आप्यायस्व सं ते इति त्रिष्टुभौ संयाज्ये वासो दक्षिणा। सिद्धमिष्टिः संतिष्ठते॥ १०॥ अथ शरदि व्रीह्याग्रयणं करिष्यन्भवति। तत्राग्निना वा यजेतैन्द्राग्नेन वैश्वदेवेन द्यावापृथिव्येति। तस्याः सप्तदश सामिधेन्यः। वृधन्वत्याज्यभागावथ हविषामग्निर्मूर्धा भुवो यज्ञस्येन्द्राग्नी रोचनादिवः श्नथद्वृत्रमित्यैन्द्राग्नस्य विश्वे देवा विश्वे देवा इति वैश्वदेवस्य द्यावा नः पृथिवी प्रपूर्वजे पितर इति द्यावापृथिव्योः। त्रिष्टुभौ संयाज्ये वत्सो दक्षिणा। संतिष्ठत एषेष्टिः॥ ११॥

वर्षासु श्यामाकेन यजेत शरदि व्रीहिभिर्यजेतेति कालविधिः। यदि नानातन्त्रमेकतन्त्रे वेत्यापस्तम्बवैखानसौ। एकतन्त्रे तु वासो वत्सं च समुच्चयेन दक्षिणां प्रतिगृह्णाति॥ १०॥ ११॥

अथ सर्वेस्यैवाऽऽग्रयणस्य हौत्रे विकारमाह—

यदि नानातन्त्रं श्यामाकेष्टिं कुर्वीत श्यामाकानुद्धृत्वा इति संप्रेष्यति। तस्याः सप्तदश सामिधेन्यः। सद्वन्तावाज्यभागौ त्रिरजौ संयाज्ये। त्वमग्ने स प्रथा असि जुष्टो होता वरेण्यः। त्वया

यज्ञं वितन्वते । सोम यास्ते मयो भुवं इति सद्वन्तौ प्रेद्धो अग्ने इमो अग्न इति विराजौ । वासो दक्षिणा दधिमन्थो मधुमन्थो मधुपर्को मधुग्लुन्थो बभ्रुर्वा पिङ्गलः । सिद्धामिष्टिः संतिष्ठते ॥ १२ ॥ स प्रत्नवदिति द्वे ध्याय्ये चतस्र आज्यभागयोर्देश हविषां द्वे स्विष्टकृतः । संतिष्ठत आग्रयणम् ॥ १३ ॥

इत्यापस्तम्बहौत्रसूत्रे द्वितीयप्रश्ने प्रथमः पटलः ॥ १ ॥

यो व्रीह्याग्रयणे श्यामाकश्चरुरुक्तस्तं यदि पृथक्तन्त्रं कुर्वीत तदा वर्षासु श्यामाकसस्ये पक्वे सति श्यामाकानुद्धर्तवै उद्धार्याऽऽहरतेति कर्मकरान्यजमानः संप्रेष्यति । श्यामाकसस्य इत्यपि संप्रैषावयव इति न भ्रमितव्यम् । विपर्ययस्यैवोत्तरत्र व्यक्तत्वात् । यथा वेणुयवेषु पक्वेषु वेणुयवानुद्धर्तवा इति संप्रेष्यतीति । साप्तदश्यवचनमज्यान्यादेः सर्वस्यापि विशेषस्य प्रदर्शनार्थम् । तन्त्रं त्वस्याः पौर्णमासमग्नीषोमीयविकारत्वात् । पृथक्तन्त्रपक्षस्त्वेऽप्येवं द्रष्टव्यम् । वाससः पुनरुपादानमुत्तरैर्विकल्पार्थम् । सर्पिरादिसंयुक्ताः सक्तवो मन्थः । स दध्ना संयुक्तो दाधिमन्थः । मधुना मधुमन्थः[1] । मधुपर्को गृह्ये व्याख्यातः । अग्निश्रोतितमघुर्मधुकोशो मधुग्लुन्थः । मधुमिश्रं गुडमित्यन्ये । बभ्रुः कापिलः । पिङ्गलः पिङ्गाक्षः । एवं द्विरूपो गौः । स प्रत्नवदिति ( तै० ब्रा० २–८ )। पारसुब्रस्यानुवाकस्याऽऽदितो द्वे ध्याय्ये भवतः । ततः पराश्चतस्रो व्रीहियवाग्रयणयोराज्यभागायो अनुवाक्यास्तास्वादितो द्वे आग्नेयस्य परे द्वे सौम्यस्य । श्यामाकेष्टयां ॥ सद्वन्तावित्युक्तम् । याज्यास्तु जुषाणस्तनः । एवं सर्वत्र । परास्तु दशप्रधानहविषां याज्यानुवाक्यास्ताश्च यथालिङ्गं गृह्यन्ते न तु क्रमशः । सौम्ययोः प्राथम्यात् । ततः परे द्वे संयाज्ये । स्पष्टमन्यत् ॥ १२ ॥ १३ ॥

इति श्रीमहादेवदीक्षितसोमयाजिकृतायामापस्तम्बहौत्रसूत्रप्रयोगचन्द्रिकायां द्वितीयप्रश्ने प्रथमः पटलः ।

---

अथ द्वितीयः पटलः ।

---

अथ पशुना यक्ष्यमाणो भवति । प्रथममन्वारम्भणीया । अग्नाविष्णुभ्यां यजेत । तस्याः पञ्चदश

[1] जुषाणवायोति पाठः ।

स्त्वा प्रशास्त्रोः प्रशिषा प्रयच्छामीति । तꣳ स-
रथूरतः प्रतिगृह्य मित्रावरुणयोस्त्वा प्रशास्त्रोः
प्रशिषा प्रतिगृह्णामीति । दक्षिणोत्तर्य[म]थैनमूर्ध्वमु-
न्मार्ष्टि अवक्रो विधुरो भूयासमिति तमादाय
यजति ॥ ७ ॥

तं दण्डमादाय यजति । मैत्रावणो होतारं प्रेष्यतीत्यर्थः । तमादाय संप्रेष्यतीति बौधायनः ॥ ७ ॥

यदा जानाति समिद्भ्यः प्रेष्येति तं मैत्रावरुणः
प्रेष्यति होता यक्षदग्निꣳ समिधा सुषमिधा समि-
द्धमिति । अथ होता यजति समिद्धो अद्य मनुषो
दुरोण इति । ताविमावेव व्यतिषङ्गमुत्तरेणो-
त्तरेण मैत्रावरुणः प्रेष्यत्युत्तरेणोत्तरेण होता
यजति । याज्यान्ते वषट्करोति । एवमेकादश
प्रयाजान्यजति । दशेष्ट्वा विरमति ॥ ८ ॥

वनस्पतिमिष्ट्वा विरमतीत्यर्थः । तिष्ठति एवमेकादश प्रयाजान्यजतीति श्रुतेर्होता याज्यया यजति । आसीनो होता यजतीति वैखानसः । स्पष्टमन्यत् ॥

यदा जानाति पर्यग्नये क्रियमाणायानुब्रूहीति
तदा मैत्रावरुणः पर्यग्निकरणायान्वाह—अग्निर्होता
नो अध्वर इति । यदा जानात्युपप्रेष्य होतर्हव्या
देवेभ्य इति । तदा मैत्रावरुणः प्रेष्यत्यजैदग्नि-
रिति ॥ ९ ॥ अथ मैत्रावरुणेन प्रेषितो होताऽध्रि-
गुमन्वाह दैव्याः शमितार इति । अथाप्येतं जपं
जपत्यध्रिगुप्रेति । यदा जानाति स्तोकेभ्योऽनुब्रू-
हीति तदा मैत्रावरुणः स्तोकीया अन्वाह जुषस्व
सप्रथस्तममिति ॥ १० ॥

प्रति तां देवशो विहीत्यन्तः । होता सन्व्यावृन्मैत्रावरुणो मृते पशौ सन्व्यावृदावर्तते होतृमैत्रावरुणौ ॥ ९ ॥ १० ॥

अथ वपाश्रपणं श्रुत्वा तत्रैव निरस्योपविश्य
प्रणादापनं प्रयात । स्वाहाकृतीभ्यः प्रेष्येत्युक्ते

अथ चोदयति होता यक्षदिति- अथ यजति सद्यो जातमिति । कृताकृतावाज्यभागावित्येके । वृध-न्वत्याज्यभागौ ॥ ११ ॥

अथ वपाश्रपणानन्तरं तत्रैव निरसनमुपवेशनं च । स्रुगादापनं घृतवतीमध्वर्योरिति ब्रूयादित्यर्थः । स्वाहाकृतामिति मन्त्रवर्णादुत्तमप्रयाजदेवता लक्ष्यते । वार्त्रघ्नावाज्यभागाविति केचित् । कृताकृताविति वाजसनेयिनाम् ॥ ११ ॥

यदा जानातीन्द्राग्निभ्यां छागस्य वपाया मेदसोऽवदीयमानस्यानुब्रूहीति तदा मैत्रावरुणः पुरोनुवाक्यामन्वाहाथ होता यजति—गीर्भिरिति ॥ १२ ॥ मैत्रावरुणस्य भक्षणमेके ॥ १३ ॥

आ वृत्रहणा, होता यक्षत् , होतर्यजेति मैत्रावरुणः संप्रेष्यति । अथ होता ये यजा० गीर्भिर्विप्र इति यजति । अथ पुरोडाशस्य पुरोनुवाक्यामाह—वि ह्यख्यन्मनसा० होता यक्षदिन्द्राग्नी० होतर्यजेति मैत्रावरुणः । अथ पुरोडाशस्य याज्यामाह—मा च्छेद्म रश्मीनिति । अथ स्विष्टकृतः पुरोनुवाक्यामाह—त्वामीडते० होता यक्षदग्निं० होतर्यजेति मैत्रावरुणः । अथ स्विष्टकृतो याज्यामाह— अग्निं सुदीतिमिति विशेषः । वाग्वषट्कारेति जपः प्रकृतिवत् । मैत्रावरुणपक्षो भक्षयतीति वचनात्तस्मिन्पक्षे यजमानः सप्तम इत्यर्थः ॥ १२ ॥ १३ ॥

यदा जानाति मनोतायै हविषोऽवदीयमानस्यानुब्रूहीति तदा मैत्रावरुणो मनोतामन्वाह—त्वं ह्यग्ने प्रथम इति ॥ १४ ॥

त्रिः प्रथमामन्वाह त्रिरुत्तमामिति वैखानसः । द्वादशर्चात्मकोऽयमनुवाकः । ननु ' त्वं ह्यग्ने प्रथमो मनोता ' इत्ययं मनोतामन्त्रोऽग्नीषोमीयपशौ पठितः । वायव्यपशावप्ययं चोदकप्राप्तः । तत्र 'त्वं हि वायोः प्रथमः ' इत्येवमूहोऽस्ति । यत्तु वचनं यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्येति तत्प्रकृतौ पठितं तत्रैव च सार्थकम् । द्विदेवत्यपशावेकदेवत्यमन्त्रस्य प्रकरणपठितस्याप्ययोग्यत्वशङ्कायां पुनर्विधानार्थत्वान्नैवम् । छत्रिणो गच्छन्तीत्यादिवन्मन्त्रगताग्निशब्दस्याग्नीषोमीयलक्षकत्वेनायोग्यत्वाशङ्काया अनुदयात् । अतः प्रकृतावनर्थकं तद्वाक्यं विकृतावूहनिवारणेन चरितार्थं भवति । तस्मादूहो नास्ति ॥ १४ ॥

यदा जानातीन्द्राग्निभ्यां छागस्य हविषोऽवदीय-
मानस्यानुब्रूहीति तदा मैत्रावरुणः पुरोनुवाक्या-
मन्वाह— आभरतꣳ शिक्षतमिति । अथ होता
यजति—उपोह यद्विदथमिति ॥ १५ ॥

स्पष्टोऽर्थः । वैखानसोऽपि—आभरतꣳ होता यक्षदिन्द्राग्नी इति मैत्रावरुणो ब्रवीति । अथ होता उपोह इति यजति । अथ वनस्पतेः पुरोनुवाक्यामाह—देवेभ्यो वनस्पत इति । अथ प्रैषमाह—होता यक्षद्वनस्पतिं होतर्यजेति । अथ वनस्पतेर्याज्यामाह—वनस्पते रशनयेति । अथ स्विष्टकृतः पुरोनुवाक्यामाह पिप्रीहि देवाꣳ इतिः । अथ स्विष्टकृतो याज्यामाह—अग्निꣳ स्विष्टकृतमिति यजति ॥ १५ ॥

यदा जानाति देवेभ्यः प्रेष्येति तन्मैत्रावरुणः प्रेष्यति देवं बर्हिः सुदेवमिति । अथ होता यजति देवं बर्हिर्वसुवने वसुधेयस्य वेतु वौ इति । तमेव व्यतिषङ्गमुत्तरेणोत्तरेण मैत्रावरुणः प्रेष्यत्युत्तरेणोत्तरेण होता यजति ॥ १६ ॥

तत्र त्रयोदशानुवाके ( तै० ब्रा० ३-६-१३ ) प्रैषाः । उत्तरानुवाके याज्याः ॥ १६ ॥

यदा जानाति सूक्तवाकाय सूक्ता प्रेष्येति तन्मैत्रावरुणः प्रेष्यति—अग्निमद्येति । अथ सूक्तवाकाय प्रेषितो जपति—इदं द्यावापृथिवी इति । यथा-देवतमूहयति । यदा शंयुवाकाय प्रेष्यति तच्छंयोरिति । व्याख्याताः पत्नीसंयाजाः । वेदꣳ स्तीर्त्वा तीर्थेन बहिर्निष्क्रम्य हृदयशूलमनुमन्त्रयते शुगसि तमभिशोचेति । यथेतं प्रतिनिष्क्रामति । संतिष्ठते निरूढपशुबन्धः ॥ १७ ॥

इत्यापस्तम्बहौत्रसूत्रे द्वितीयप्रश्ने द्वितीयः पटलः ।

व्याख्यातं दर्शपूर्णमासयोः । वरुण नो मुञ्चेत्यन्तः ॥ १७ ॥

इति श्रीमहादेवदीक्षितसोमयाजिकृतायामापस्तम्बहौत्रसूत्रप्रयोगचन्द्रिकायां
द्वितीयप्रश्ने द्वितीयः पटलः ।

अथ तृतीयः पटलः ।

सर्वप्रश्नानामेष कल्पः । तस्य सप्तदश सामिधेन्यः । वायव्येन यजेतेत्यत्र पुरोनुवाक्यामाह–पीवोऽन्नाँ रयिवृध इति । अथ वपाया याज्या रायोऽनुमिति । अथ पुरोडाशस्य याज्यानुवाक्ययोः, आ वायो भयाभिरिति । अथ हविषः पुरोनुवाक्यां प्र वायुमच्छेति । अथ याज्यामा नो नियुद्भिरिति ॥ १ ॥

प्राजापत्येन यजेत । तस्य वपायाः पुरोनुवाक्यामाह—प्रजापते न त्वदेतानिति । अथ याज्यां रयीणां पतिं यजतमिति । अथ पुरोडाशस्य पुरोनुवाक्यामाह प्रजापते त्वमिति । अथ पुरोडाशस्य याज्यां वयेमे लोका इति । अथ हविषः पुरोनुवाक्यामाह–प्रजापतिं प्रथममिति । अथ हविषो याज्यां यो राय ईश इति ॥ २ ॥

सोमापूषणेन यजेत । तस्य पुरोनुवाक्यामाह–सोमा पूषणा जननेति । अथ वपाया याज्यामिमौ देवौ जायमानौ जुषन्तामिति । अथ पुरोडाशस्य पुरोनुवाक्यामाह—सोमा पूषणेति । अथ पुरोडाशस्य याज्यां दिव्यन्यः सदनमिति । अथ हविषः पुरोनुवाक्यामाह–धियं पूषा जिन्वत्विति । अथ हविषो याज्यां विश्वान्यन्य इति ॥ ३ ॥

वारुणेन यजेत । तस्य वपायाः पुरोनुवाक्यामाहोदुत्तमं वरुणमिति । अथ वपाया याज्यामस्तभ्ना द्यामृषभ इति । अथ पुरोडाशस्य पुरोनुवाक्यामाह यत्किंचेदं वरुण इति । अथ पुरोडाशस्य याज्यां कितवासो यद्रिरिपुः, इति । अथ हविषः पुरोनुवाक्यामाहाव ते हेडो वरुणेति । अथ हविषो याज्यां तत्त्वा यामि ब्रह्मणेति ॥ ४ ॥

आदित्यैर्यजेत । तस्य वपायाः पुरोनुवाक्यामाहाऽऽदित्यानामवसेति । अथ वपाया याज्यां न दक्षिणा विचिकितेति । अथ पुरोडाशस्य पुरोनुवाक्यामाह–धारयन्त आदित्यासो जगत्स्था इति । अथ पुरोडाशस्य याज्यां तिस्रो भूमीर्धारयन्निति । अथ हविषः पुरोनुवाक्यामाह यज्ञो देवानां प्रत्येतीति । अथ हविषो याज्यां शुचिरपः सूयवसा अदब्ध इति ॥ ५ ॥

अविवशैरादित्यैर्यजेत । तस्य वपायाः पुरोनुवाक्यामाह–ते शुक्रासः शुचय इति । वपाया याज्यां ते सूनवो अदितेरिति । अथ पुरोडाशस्य पुरोनुवाक्यामाहाऽऽ नः पुत्रा इति । अथ पुरोडाशस्य याज्यामाह–स्कभायत निर्ऋतिमिति । अथ हविषः पुरोनुवाक्यामाहाऽऽदित्यान्काममवसेति । अथ हविषो याज्यां स्तीर्णं बर्हिः सीदतामिति ॥ ६ ॥

आग्नेयेन यजेत । तस्य वपायाः पुरोनुवाक्यामाहाग्ने नय सुपथा राय इति । अथ वपाया याज्यां प्र वः शुक्राय भानव इति । अथ पुरोडाशस्य पुरोनुवाक्यामाहाच्छा गिरो मतय इति । अथ पुरोडाशस्य याज्यामग्ने त्वमस्मद्युय इति । अथ हविषः पुरोनुवाक्यामाहाग्ने त्वं पारयानव्य इति । अथ हविषो याज्यां प्रकारवो मननेति ॥ ७ ॥

ऐन्द्र्या यजेत । तस्या वपायाः पुरोनुवाक्यामाहैन्द्रं नरो नेमधितेति । अथ वपाया याज्यां युञ्जे रथं गवेषणमिति । अथ पुरोडाशस्य पुरोनुवाक्यामाह जगृभ्माते दक्षिणमिति । अथ पुरोडाशस्य याज्यां तवेदं विश्वमभित इति । अथ हविषः पुरोनुवाक्यामाह–समिन्द्रिणो मनसेति । अथ हविषो याज्यामाराच्छत्रुमपबाधस्वेति ॥८॥

बार्हस्पत्या यजेत । तस्या वपायाः पुरोनुवा-क्यामाहाऽऽवेधसं नीलपृष्ठमिति । अथ वपाया याज्यां स हि शुचिः शतपत्र इति । अथ पुरो-डाशस्य पुरोनुवाक्यामाह–बृहस्पतिः प्रथममिति । अथ पुरोडाशस्य याज्यां बृहस्पतिः समजयं-दिति । अथ हविषः पुरोनुवाक्यामाह–बृहस्पते परिदीया रथेनेति । अथ हविषो याज्यामेवा पित्रे विश्वदेवायेति ॥ ९ ॥

सारस्वतेन यजेत । तस्य वपायाः पुरोनुवाक्या-माहाऽऽ नो दिवो बृहत इति । अथ वपाया याज्यां पावीरवी कन्येति । अथ पुरोडाशस्य पुरोनुवाक्यामाहेमा जुह्वाना युष्मदा नमोभि-रिति । अथ पुरोडाशस्य याज्यां यस्ते स्तनः श-शय इति । अथ हविषः पुरोनुवाक्यामाह–सरस्व-त्यभिनो नेषि वस्य इति । अथ हविषो याज्या-मियꣳ शुष्मेभिर्बिसखेति ॥ १० ॥

सौम्येन यजेत । तस्य वपायाः पुरोनुवाक्या-माह–सोमो धेनुमिति । अथ वपाया याज्यामषाढं युत्सु पृतनास्विति । अथ पुरोडाशस्य पुरोनु-वाक्यामाह त्वꣳ सोम क्रतुभिरिति । अथ पुरोडा-शस्य याज्यां या ते धामानि हविषेति । अथ ह-विषः पुरोनुवाक्यामाह त्वमिमा ओषधीरिति । अथ हविषो याज्यां या ते धामानीति । वैष्णवेन यजेत । तस्य वपायाः पुरोनुवाक्यामाह विष्णो-र्नु कं वीर्याणीति । अथ वपाया याज्यां तदस्य प्रियमभिपाथो अस्यामिति । अथ पुरोडाशस्य पुरो-नुवाक्यामाह प्र तद्विष्णुस्तवते इति । अथ पुरो-डाशस्य याज्यां परो मात्रया तनुवा वृधान इति । अथ हविषः पुरोनुवाक्यामाह वि चक्रमे पृथिवी-मेष इति । अथ हविषो याज्यां त्रिर्देवः पृथिवीमेष इति ॥ ११ ॥

ऐन्द्रेण यजेत। तस्य वपायाः पुरोनुवाक्यामाहाऽऽते मह इन्द्रेति। अथ वपाया याज्यां यो जात एव प्रथमो मनस्वानिति। अथ पुरोडाशस्य पुरोनुवाक्यामाहाभि गोत्राणि सहसा गाहमान इति। पुरोडाशस्य याज्यां माभिः स्पृधो मिथुतीरिति। अथ हविषः पुरोनुवाक्यामाहाय॰ शृण्वे अध इति। अथ हविषो याज्यामनुस्वधामक्षरन्नापो अस्येति ॥ १२ ॥

इन्द्रेण मरुत्वता यजेत। तस्य वपायाः पुरोनुवाक्यामाह मरुत्वन्तं वृषभमिति। अथ वपाया याज्यां जनिष्ठा उग्र महस इति। अथ पुरोडाशस्य पुरोनुवाक्यामाह कस्याचो मरुत इति। अथ पुरोडाशस्य याज्या वृत्रस्य त्वा इव स(श्व)थेति। अथ हविषः पुरोनुवाक्यामाह वर्धा वृत्रमरुत इति। अथ हविषो याज्यां स यो वृषा वृष्णियेभिरिति। इन्द्रेण वृत्रतुरेण यजेत। तस्य वपायाः पुरोनुवाक्यामाहेन्द्रो वृत्रमतरादिति। अथ वपाया याज्यां स एव वीर इति। अथ पुरोडाशस्य पुरोनुवाक्यामाहेन्द्रो यज्ञं वर्धयान्निति। अथ पुरोडाशस्य याज्यामिमं यज्ञं वर्धयन्निति। अथ हविषः पुरोनुवाक्यामाहेन्द्रो देवाञ्छम्बरहत्येति। अथो हविषो याज्यां यः सत्यं सिंधू॰ दधदिति ॥ १३ ॥

ऐन्द्रेण यजेत। तस्य वपाया पुरोनुवाक्यामाहेन्द्रस्तरस्वानिति। अथ वपाया याज्यां हिरण्यवर्णो अभयमिति। अथ पुरोडाशस्य पुरोनुवाक्यामाहेन्द्र॰ स्तुहि वज्रिण॰ स्तोमपृष्ठमिति। पुरोडाशस्य याज्यां स्तुहि शूरं वज्रिणमिति। अथ हविषः पुरोनुवाक्यामाहेन्द्रो देवानामधिपा इति। अथ हविषो याज्यां य इमे द्यावापृथिवीति ॥ १४ ॥

इन्द्रेण वज्रिणा यजेत। तस्य वपायाः पुरोनुवाक्यामाहानवस्तं रथं वृष्ण इति। अथ वपाया याज्यां धृष्णे यचे वृषणो अर्कमिति। अथ पुरोडाशस्य पुरो-

नुवाक्यामाहेन्द्रस्य नु वीर्याणि प्रवोचमिति । अथ पुरोडाशस्य याज्यामहन्नहिमन्वप इति । अथ हविषः पुरोनुवाक्यामाहेन्द्रो यातोऽवसितस्येति । अथ हविषो याज्यामभिसिध्मो अजिगादस्येति ॥ १५ ॥
वैष्णववारुण्या यजेत । तस्या वपायाः पुरोनुवाक्यामाह विष्णुं देवं वरुणमूतयेति । अथ वपाया याज्यां मेदसा देवा वपयेति । अथ पुरोडाशस्य पुरोनुवाक्यामाह विष्णू वरुणा युवमिति । अथ पुरोडाशस्य याज्यां ययोरोजसा स्कभितेति । अथ हविषः पुरोनुवाक्यामाह विष्णू वरुणावभिशस्तिपा वामिति । अथ हविषो याज्यामश्होमुचेति ॥ १६ ॥

द्यावापृथिव्या यजेत । तस्या वपायाः पुरोनुवाक्यामाह मही नु द्यावापृथिवीति । अथ वपाया याज्यां प्र पूर्वजे पितरेति । अथ पुरोडाशस्य पुरोनुवाक्यामाह स इत्स्वपा भुवनेष्वास, इति । अथ पुरोडाशस्य याज्यां भूरिं द्वे अचरन्तीति । अथ हविषः पुरोनुवाक्यामाहेदं द्यावापृथिवी सत्यमस्त्विति । अथ हविषो याज्यामूर्वी पृथ्वी बहुल इति ॥ १७ ॥

ओषधीभिर्यजेत । तस्या वपायाः पुरोनुवाक्यामाह या जाता ओषधय इति । अथ वपाया याज्यामतिविश्वाः परिष्ठास्तेन इवेति । अथ पुरोडाशस्य पुरोनुवाक्यामाह या ओषधयः सोम राज्ञीति । अथ पुरोडाशस्य याज्यामश्वावतीꣳ सोमवतीमिति । अथ हविषः पुरोनुवाक्यामाहौषधीरिति मातर इति । अथ हविषो याज्यामन्या वोऽन्यामवत्विति ॥ १८ ॥

ऐन्द्राग्नेन पुनरुत्सृष्टेन यजेत । तस्य वपायाः पुरोनुवाक्यामाह शुचिं नु स्तोमं नवजातेति ।

अथ वपाया याज्यां अवदृत्त्रमिति । अथ पुरोडाशस्य पुरोनुवाक्यामाहोभा वामिन्द्राग्नी इति । अथ पुरोडाशस्य याज्यां प्र चर्षणिभ्य इति । अथ हविषः पुरोनुवाक्यामाहाऽऽवृत्रहणा वृत्रहाभिरिति । अथ हविषो याज्यां गीर्भिर्विमः प्रमतिमिति ॥ १९ ॥

ब्राह्मणस्पत्येन तूपरेण यजेत । तस्य वपायाः पुरोनुवाक्यामाह ब्रह्मणस्पते त्वमस्येति । अथ वपाया याज्यां स ईं सत्येभिरिति । अथ पुरोडाशस्य पुरोनुवाक्यामाह ब्रह्मणस्पतेरभवदिति । अथ पुरोडाशस्य याज्यामिन्धानोऽग्निमनवादिति । अथ हविषः पुरोनुवाक्यामाह ब्रह्मणस्पते सुयमस्येति । अथ हविषो याज्यां स इज्जनेन सविशेति ॥ २० ॥

पौष्णेन यजेत । तस्य वपायाः पुरोनुवाक्यामाह यास्ते पूषन्नावो अन्त इति । अथ वपाया याज्यां शुक्रं ते अन्यद्यजतं ते अन्यदिति । [अथ] पुरोडाशस्य पुरोनुवाक्यामाह पूषेमा आशा इति । [अथ] पुरोडाशस्य याज्यां प्रपथे पथामजनिष्ट पूषेति । अथ हविषः पुरोनुवाक्यामाह पूषा स बन्धुर्दिव इति । अथ हविषो याज्यामजाश्वः पशुपा वाजवस्त्य इति ॥ २१ ॥

मारुत्या यजेत । तस्या वपायाः पुरोनुवाक्यामाह शुची वो हव्येति । अथ वपाया याज्यां प्र चित्रमर्कमिति । अथ पुरोडाशस्य पुरोनुवाक्यामाहाऽरोप्वा मरुत इति । अथ पुरोडाशस्य याज्यां या वः शर्म शशमानायेति । अथ हविषः पुरोनुवाक्यामाहेमे तुरं मरुत इति । अथ हविषो याज्यामारा इवेदचरमेति ॥ २२ ॥

ऐन्द्रमरुत्पेन यजेत । तस्य वपायाः पुरोनुवाक्या-
माहाऽऽ तु ते दायि मह इति । अथ वपाया याज्यां
य इन्द्र शुष्मो मघवन्ते अस्तीति । अथ पुरोडाशस्य
पुरोनुवाक्यामाहेन्द्रो राजा जगत इति । अथ
पुरोडाशस्य याज्यां तमु ष्टुहि यो अभिभूत्योजा
इति । अथ हविषः पुरोनुवाक्यामाह स्थूरस्य रायो
बृहत इति । अथ हविषो याज्यामा ते शुष्मो
वृषभ इति ॥ २३ ॥

सावित्रेण यजेत । तस्य वपायाः पुरोनुवाक्या-
माहाऽऽ देवो यातु सवितेति । अथ वपाया याज्या-
मभीवृतं कृशनैरिति । अथ पुरोडाशस्य पुरोनुवा-
क्यामाह सघानो देवः सवितेति । [अथ] पुरोडा-
शस्य याज्यां विजनां छावा(?) इति । अथ हविषः
पुरोनुवाक्यामाह वि सुपर्णो अन्तरिक्षाण्यख्य-
दिति । अथ हविषो याज्यां भगं धियं वाजयन्त
इति ॥ २४ ॥

वैश्वदेवेन बहुरूपेण यजेत । तस्य वपायाः पुरो-
नुवाक्यामाहाऽऽ नो विश्वे अस्क्रागमन्त्विति ।
अथ वपाया याज्यां शं नो देवा विश्वे देवा इति ।
अथ पुरोडाशस्य पुरोनुवाक्यामाह ये सवितुः
सत्यसवस्येति । अथ पुरोडाशस्य याज्यामग्ने
याहि दूत्यमिति । अथ हविषः पुरोनुवाक्यामाह
द्यौः पितः पृथिवी इति । अथ हविषो याज्यां
विश्वे देवाः शृणुतेमꣳ हवमिति ॥ २५ ॥

मैत्रावरुण्या यजेत । तस्य पुरोनुवाक्यामाहाऽऽयां
मित्रावरुणेति । अथ वपाया याज्यां युवं वस्त्राणि
पीवसेति । अथ पुरोडाशस्य पुरोनुवाक्यामाह
तत्सुवां मित्रावरुणेति । अथ पुरोडाशस्य याज्यां
यद्बंहिष्ठं नातिविदे इति । अथ हविषः पुरोनु-
वाक्यामाहाऽऽ नो मित्रावरुणेति । अथ हविषो

याज्यां प्र वाहवा सिसृतामिति । रौद्र्या रोहिण्या यजेत । तस्या वपायाः पुरोनुवाक्यामाहेमा रुद्राय स्थिरधन्वन इति । अथ वपाया याज्यां वा दत्ते-भि रुद्र इति । अथ पुरोडाशस्य पुरोनुवाक्यामाहाह-न्बिभर्षि सायकानीति । अथ पुरोडाशस्य याज्यां मा नस्तोके तनय इति । हविषः पुरोनुवाक्या-माहाऽऽ ते पितुर्मरुतामिति । अथ हविषो याज्या-मेवा बभ्रो वृषभ इति ॥ २६ ॥

सौर्या यजेत । तस्या वपायाः पुरोनुवा-क्यामाह सूर्यो देवीमुषसमिति । अथ वपाया याज्यां भद्रा अश्वा हरित इति । अथ पुरोडाश-स्य पुरोनुवाक्यामाह तत्सूर्यस्य देवत्वमिति । अथ पुरोडाशस्य याज्यां तन्मित्रस्य वरुणस्येति । अथ हविषः पुरोनुवाक्यामाहाद्या देवा उदि-तेति । अथ हविषो याज्यां दिवो रुक्म उरु-चक्षेति ॥ २७ ॥

त्वाष्ट्रा यजेत । तस्य वपायाः पुरोनुवाक्यामाह त्वष्टा दधदिन्द्रायेति । अथ वपाया याज्यां तन्नस्तु-रीपमधपोषयित्नु इति । अथ पुरोडाशस्य पुरोनु-वाक्यामाह त्वष्टा वीरं देवकाममिति । अथ पुरो-डाशस्य याज्यां पिशङ्गरूपः सुभर इति । [अथ] हविषां पुरोनुवाक्यामाह दशेमं त्वष्टुर्जनयन्तेति । अथ हविषां याज्यामाविष्ट्यो वर्धत इति ॥ २८ ॥ अथ मैत्रेण यजेत । तस्य वपायाः पुरोनुवाक्या-माह मित्रो जनान्यातयति इति । [अथ] वपाया याज्यां प्रसमित्र मर्तो अस्त्विति । अथ पुरोडाशस्य पुरोनुवाक्यामाहायं मित्रो नमस्य इति । अथ पुरो-डाशस्य याज्यामनमीवास इडयेति । अथ हविषः पुरोवाक्यामाह मित्रं न ई९ शम्येति । अथ हवि-षो याज्यां महा९ आदित्य इति । आश्विनेन

यजेत । तस्य वपायाः पुरोनुवाक्यामाहाऽऽवां रथो रोदसीति । अथ वपाया याज्यां स पप्रथानो अभि पञ्चभूमेति । अथ पुरोडाशस्य पुरोनुवाक्यामाह स्वश्वा यशसेति । अथ पुरोडाशस्य याज्यां युवोः श्रियं परिपोषेति । अथ हविषः पुरोनुवाक्यामाह यो हस्य वां रथिरेति । अथ हविषो याज्यां युवं भुज्युमवविद्धमिति ॥ २९ ॥

अग्नीषोमीयया यजेत । तस्या वपायाः पुरोनुवाक्यामाहाग्नीषोमा यो अद्य वामिति । अथ वपाया याज्यां यो अग्नीषोमा हविषा सपर्यतेति । अथ पुरोडाशस्य पुरोनुवाक्यामाहाग्नीषोमा य आहुतिमिति । [अथ]पुरोडाशस्य याज्यामग्नीषोमा चेति । अथ हविषः पुरोनुवाक्यामाहाग्नीषोमाविमं सु मे शृणुतमिति । अथ हविषो याज्यामग्नीषोमा हविषः प्रस्थितस्येति ॥ ३० ॥

वेहतेन यजेत । तस्य वपायाः पुरोनुवाक्यामाहाहमस्मि प्रथमजेति । अथ वपाया याज्यामाह पूर्वमग्नेरपिदहत्यन्नमिति । अथ पुरोडाशस्य पुरोनुवाक्यामाह जहाम्यन्यमिति । पुरोडाशस्य याज्यां पराके अन्नं निहितमिति । अथ हविषां पुरोनुवाक्यामाह महान्तौ चरू इति । अथ हविषो याज्यामन्नं प्राणमन्नमपान इति ॥ ३१ ॥

वाचा यजेत । तस्या वपायाः पुरोनुवाक्यामाह देवीं वाचमजनयन्त देवा इति । अथ वपाया याज्यामाह यद्वाग्वदन्तीति । अथ पुरोडाशस्य पुरोनुवाक्यामाहानन्तामन्तादधिनिर्मितामिति । [अथ]पुरोडाशस्य याज्यां वाचं देवा उपजीवन्तीति । अथ हविषः पुरोनुवाक्यामाह वागक्षरं प्रथमजा इति । अथ हविषो याज्यां यामृषयो मन्त्रकृत इति ॥३२॥

श्रद्धया यजेत। तस्या वपायाः पुरोनुवाक्यामाह श्रद्धयाऽग्निः समिध्यत इति। अथ वपाया याज्यां प्रियꣳ श्रद्धे ददत इति। अथ पुरोडाशस्य पुरोनुवाक्यां यथा देवा असुरेषु इति। अथ पुरोडाशस्य याज्यां श्रद्धां देवा यजमाना इति। अथ हविषः पुरोनुवाक्यामाह श्रद्धां प्रातर्हवामह इति। अथ हविषो याज्यां श्रद्धा देवानधिवस्त इति ॥३३॥

ब्रह्माभिर्यजेत। तस्य वपायाः पुरोनुवाक्यामाह ब्रह्मजज्ञानं प्रथमिति। अथ वपाया याज्यां पिता विराजामृषभ इति। अथ पुरोडाशस्य पुरोनुवाक्यामाह ब्रह्म देवानजनयदिति। अथ पुरोडाशस्य याज्यामन्तरस्मिन्निमे लोका इति। अथ हविषः पुरोनुवाक्यामाह ब्रह्मन्देवास्त्रयस्त्रिꣳशदिति। अथ हविषो याज्यां चतस्र आशा इति ॥ ३४ ॥

सूर्याचन्द्रमोभ्यां यजेत। तयोः पश्वोः सुक्ते वपयोः पुरोनुवाक्यामाह ता सूर्याचन्द्रमसेति। वपयोर्याज्यामाहोभावन्तौ परियात अर्म्येति। [अथ] पुरोडाशस्य पुरोनुवाक्यामाह पती द्युमाद्विश्वविदेति। अथ पुरोडाशस्य याज्यां विश्ववपरी प्रतरणेति। अथ हविषः पुरोनुवाक्यामाहास्य श्रवोनद्य इति। अथ हविषो याज्यां पूर्वापरं चरताविति ॥ ३५ ॥

अद्भिर्यजेत। तस्या वपायाः पुरोनुवाक्यामाह हिरण्यवर्णेति। [अथ] वपाया याज्यां यासाꣳराजा वरुण इति। अथ पुरोडाशस्य पुरोनुवाक्यामाह यासां देवा दिवि कृण्वन्ति इति। अथ पुरोडाशस्य याज्यां शिवेन मा चक्षुषेति। अथ हविषः पुरोनुवाक्यामाहाऽऽपो भद्रा इति। अथ हविषो याज्यामादित्पश्यामीति ॥ ३६ ॥

भगेन यजेत । तस्य वपायाः पुरोनुवाक्यामाह प्रातरग्निं प्रातरिन्द्रमिति । अथ वपाया याज्यां प्रातर्जितं भगमुग्रमिति । अथ पुरोडाशस्य पुरोनुवाक्यामाह—भग प्रणेतर्भग इति । अथ पुरोडाशस्य याज्यामुतेदानीं भगवन्तः स्याम, इति । अथ हविषः पुरोनुवाक्यामाह—भग एव भगवाꣳ अस्तु देवा इति । अथ हविषो याज्यामाह समध्वरायोषसो नमन्तेति ॥ ३७ ॥ १८ ॥

सर्वेषां पशुबन्धानां साङ्गो विधिरेष एव नायमतिदेशोऽपि तु सोमाङ्ग. सवनीयोऽग्नीषोमीयसवनीयानां विधिरिति ततो निष्कृष्टो निरूढोऽतिदेशप्राप्तो निरूढ एव व्याख्यातः । स सर्वेषां समानः । औपदेशिकत्वादग्नीषोमीयादीनामितरेषामतिदेशः । एवं च निरूढौ सौर्यप्राजापत्यावपि । ये वैशेषिकमन्त्राः शाखान्तरीया इन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमीत्यादयो निरूढे श्रूयमाणास्तेऽग्नीषोमीयादौ सौर्यप्राजापत्ययोरपि चातिदेशादूह्याः । तत्राग्नीषोमीयादयोऽपि निरूढस्याशे विकृतयः । अन्या यथैते चैते प्रकृतयो निरूढो विकृतिः । उक्तमेतद्दर्शपूर्णमासप्रकृतय इष्टिपशुबन्धान्ते स्वधर्माणः सामान्याद्विकार इति येषां प्रत्यक्षाण्यङ्गानि तेषामन्ये विकारा ये त्वप्रत्यक्षाङ्गा इति । एवं चाग्नीषोमीयस्य चतुर्णां सवनीयानां निरूढस्य च षष्ठस्य सर्वपशुप्रकृतित्वमुक्तं भवति । न तु मीमांसकैरग्नीषोमीयस्यैव सर्वपशुप्रकृतित्वमुक्तं तत्रैव पशुधर्माणां प्रत्यक्षाम्नानादिति । अस्मच्छाखायां हौत्रं पशोस्तु निरूढ प्रकृत्यैवोक्त—अजनन्ति त्वामध्वरे ( तै० ब्रा० ३–६–१ ) इति प्रश्नेन । तद्देशेनान्यपशुषु चोदकेन प्राप्नोति । न च तेषु प्रत्यक्षं विधानमस्ति । तस्मादप्रत्यक्षाङ्गत्वादन्येषु नैमित्तिककाम्येषु स्वतन्त्रपशुषु निरूढो हौत्रं प्रयच्छंस्तेषां प्रकृतिर्भवत्येव । तथा चाऽऽम्नातं वैशेषिकं वेदिमानादिकं चौपदेशिकमेव । प्राप्यान्येषु प्रयच्छत( च्छन्त )ऽऽग्नीषोमीयादिषु आध्वर्यवमतिदिष्टं प्राप्य तद्विकृतेऽपि भवति । नहि भिक्षुको भिक्षुकान्याचत इति न्यायात् । एवं च तत्रान्तर्गतेषु पशुषु साहस्याद्ग्नीषोमीयादय एव प्रकृतिस्तत्रापि व्यवस्थोपमध्ये क्रियमाणानामग्नीषोमीय एव सवनेषु क्रियमाणानामाग्नेयादयस्तत्रापि व्यवस्थाऽऽग्नेयैन्द्राग्नयोस्तयोस्तुल्यत्वेऽपि पशुपुरोडाशधर्मभेदाद्व्यवस्था येषां ह्याग्नेयपुरोडाशविकाराः पशुपुरोडाशास्तेषामाग्नेयः सवनीयः प्रकृतिर्येषां तु द्विदेवत्यानां बहुदेवत्यानां वा पशुपुरोडाशा ऐन्द्राग्नपुरोडाशविकारास्तेषामैन्द्राग्न एव प्रकृतिः । येषामनेकदेवतानामग्नीषोमीय एव पुरोडाश. पशुपुरोडाशप्रकृतिस्तेऽप्याग्नेयस्यैव सवनीयस्य विकारा आग्नेयवत्तेषां धर्मसादृश्यात् । येषामेकदेवतानामैन्द्राग्नपुरोडाशधर्मका पशुपुरोडाशास्तेषामैन्द्राग्न. सवनीय. प्रकृतिर्वाऽऽ-

भ्रेयो हविःसामान्यं बलीय इत्युक्तमेव । ये त्वन्ये सरस्वतीदेवताकाः सरस्वद्देवताकास्ते प्रातिपदिकसाम्येन, ये च स्त्रीदेवताकास्ते स्त्रीदेवतासाम्येन सरस्वत्यां प्रैष्याः सवनीयाया एव विकारा इति व्यवस्था । सवनीयानां चतुर्णामग्नीषोमीयपशुवदेवोपदिष्टधर्मत्वेन नाग्नीषोमीयविकृतित्वं मीमांसकाभिमतम् । कुतः । यतस्तेषां ज्योतिष्टोमसंस्थान्तर्गतानां ज्योतिष्टोमप्रकरणगतयत्त्वङ्गोपदेशस्याविशिष्टत्वात् । नहि तत्राग्नीषोमीयादीनां देवताविशेषा विहिता सन्ति नावान्तरप्रकरणेन नियमो भवेत् । किंतु ' यदग्नीषोमीयं पशुमालभते, इत्यर्थवादादाद्यमन्नं दीक्षितस्येति विधेर्हेतुसमर्पणे प्रस्तावकाद्विधिरनुमीयते । नतु तद्विधिरस्मच्छाखायां साक्षादस्ति । तथाऽऽग्नेयादीनामप्यनुवादादेव विधय उन्नीयन्ते । वाजपेये हि श्रूयते—आग्नेयं पशुमालभते । अग्निष्टोममेव तेनावरुन्धे । ऐन्द्राग्नेनोक्थ्यम् । ऐन्द्रेण षोडशिनः स्तोत्रम् । सारस्वत्याऽतिरात्रम् । मारुत्या बृहतः स्तोत्रम् । इत्यर्थवादेन वाजपेयपशुदेवताविधिपरेणाग्निष्टोमादिसंस्थास्वाग्नेयादिपशुविधयोऽनुमीयन्तेऽतस्तु ते सर्वेऽपि पशवो ह्यविशेषेण ज्योतिष्टोमं प्राप्ता अतस्तेषां सर्वेषामप्यवान्तरप्रकरणं समानमेव । तथा चात्र प्रैषविशेषा अपि चैन्द्रे सारस्वत्यां मैत्रावरुणप्रैषाभावश्च सूत्रान्तरादेव । तथा सूत्रान्तरवशात्प्रैषविशेषनियमो वचनादेवेत्युक्तम् । तस्मादग्नीषोमीयादयः पञ्चापि सोमे तत्रान्तर्गतानां व्यवस्थिताः प्रकृतयः । सोमे तन्त्रबहिर्भूतानां तु निरूढ ऐन्द्राग्न एवेति पञ्चापि पशवः प्रत्यक्षधर्माणो हौत्रेण निरूढस्य विकृतय इतर आध्वर्यवेण वैशेषिकेण च हौत्रमतिदेशात्समानमेव प्राप्तमपि सूत्रान्तरादैन्द्रे सारस्वत्यां च मैत्रावरुणव्यापारप्रतिबन्धेनैव व्यवस्थापितमित्यलमतिप्रसङ्गेन । जैमिनीयैस्तु पञ्चपशुप्रकृतित्वमाशङ्क्य दूषितं न्यायेन तत्त्वस्मच्छाखोपदेशसूचितं न्यायव्याख्याने सूत्रतात्पर्ये दर्शितमतोऽस्मत्सूत्रेऽयमेव प्रकारो ज्ञेयः ।

*न्यायोपदेशयोः केचिद् विकल्पं ब्रुवते न तत् ।*
युक्तं न्यायोऽनुमानं तु श्रुतितुल्यं कथं भवेत् ॥ १७ ॥ १८ ॥

अग्निं चित्वा सौत्रामण्या यजेत । तस्या आश्विनं सारस्वतमैन्द्रं बार्हस्पत्यमिति चतस्रो देवताः । तस्या निरूढपशुबन्धवत्कल्पः । यदा जानाति समिद्धय: प्रेष्येति तदा तं मैत्रावरुणः प्रेष्यति-होता यक्षत्समिधाऽग्निमिडस्पद इति । अथ होता यजति—समिद्धो अग्निरश्विनेति । ताविमावेव व्यतिषङ्गमुत्तरेणोत्तरेण मैत्रावरुणः

प्रेष्यत्युत्तरेणोत्तरेण होता यजति । समानं पर्यग्निकरणमाज्यभागाविति । त्रिपशुके वपापुरोडाशहविर्योगाणां पुरोनुवाक्यास्ता एव याज्या भवन्ति । तत्र तिसृणां वपानां तिस्र ऋचस्तासां चर्कर्त्ता कस्यांचिद्वपायां पुरोनुवाक्या कस्यांचिद्याज्येत्येवं द्विरूपा । अश्विना हविरिन्द्रियमिति । यदा जानाति देवेभ्यः प्रेष्येति तं मैत्रावरुणः प्रेष्यति देवं बर्हिः सरस्वतीति । अथ होता यजति देवं बर्हिर्वसुवने वसुधेयस्य वेत्विति । यदा जानाति सूक्तवाकाय सूक्ता प्रेष्येति तं मैत्रावरुणः प्रेष्यति अग्निमद्य होतारमवृणीतेति सूक्तवाकाय प्रेषितो होता जपति । इदं द्यावापृथिवीति यथोक्ता देवता ऊहयति । यदा शंयुवाकाय प्रेष्यति तच्छंयोरिति । व्याख्यातं(ताः) संयाजाः । वेदꣳ स्तीर्त्वा तीर्थेन बहिर्निष्क्रम्य हृदयशूलमनुमन्त्र्य यथेतं प्रतिनिष्क्रामति । संतिष्ठते चरकसौत्रामणी ॥ १९ ॥

सप्तमी हविर्यज्ञसंस्था पश्वेकसाध्या सौत्रामणीशब्देनोच्यते । सा द्विविधा । एका कोकिली, अपरा चरका । अग्निं चित्वा सौत्रामण्या यजेत ( तै० सं० ५–६–३ ) इत्यादावङ्गत्वेन श्रूयमाणा चरकैव । सा तु ( तै० ब्रा० २–६–११ ) पशुबन्धेन व्याख्याता ॥ १९ ॥

कोकिल्या यक्ष्यमाणो भवति । तस्या ऐन्द्रः पशुः । तस्या निरूढपशुबन्धवत्कल्पः । यदा जानाति समिन्द्यः प्रेष्येति तदा तं मैत्रावरुणः प्रेष्यति । होता यक्षत्समिधेन्द्रमिडस्पद इति । अथ होता यजति समिद्ध इन्द्र उपसामनीक इति । तावित्थमेव व्यतिषङ्गमुत्तरेण मैत्रावरुणः प्रेष्यत्युत्तरेणोत्तरेण होता यजति । समानं पर्यग्निकरणमाज्यभागाविति । अथैन्द्रस्य पशोर्वपापुरोडाशहविषां द्वे द्वे याज्यानुवाक्ये क्रमेण भवतश्चर्षणि प्रा विवेपयन्मोति । तꣳ सध्रीचीः सत्यमिचन्न त्वावामिति ।

प्रशसाहिषे स शेवृधमधिपा इति । यदा जानाति देवेभ्यः प्रेष्येति तं मैत्रावरुणः प्रेष्यति देवं बर्हिरिन्द्रमित्यादि । अथ होता यजति देवं बर्हिरित्यादि । यदा सूक्तवाकाय प्रेष्यति तं मैत्रावरुणोऽग्निमद्योति । अथ होता यजति इदं द्यावापृथिवीति । यथोक्तां देवतामूहयति शंयुवाकमुक्त्वाऽथ संयाजयति हृदयशूलमभिमन्त्र्य निष्क्रामतः । संतिष्ठते कोकिली ॥ २० ॥

इत्यापस्तम्बीयहौत्रसूत्रे द्वितीयप्रश्ने तृतीयः पटलः ।

गतार्थः ॥ २० ॥

इति श्रीमहादेवदीक्षितसोमयाजिकृतायामापस्तम्बहौत्रसूत्रप्रयोगचन्द्रिकायां द्वितीयप्रश्ने तृतीयः पटलः ।

---

अथ चतुर्थः पटलः ।

अथातश्चातुर्मास्यानि यक्ष्यमाणो भवति । पूर्वस्मिन् पर्वण्यन्वारम्भणीया । तस्याः पञ्चदश सामिधेन्यः । पञ्च प्रयाजा वार्त्रघ्नावाज्यभागावथ हविषां वैश्वानरो न ऊत्या पृष्टो दिवीति वैश्वानरस्य याज्यानुवाक्ये । पर्जन्याय प्रगायत दिवस्पुत्राय मीढुषे । स नो यवसमिच्छतु । अच्छा वद तवसं गीर्भिराभिः स्तुहि पर्जन्यं नमसा विवासा कनिक्रदद्वृषभो जीरदानुरेतो दधात्वोषधीषु गर्भमिति पर्जन्यस्य याज्यानुवाक्ये । सिद्धमिष्टिः संतिष्ठते ॥ १ ॥

गतार्थम् ॥ १ ॥

अथ वैश्वदेवपर्व । यदा गार्हपत्यात्प्रणीयमानायानुब्रूहीत्युक्ते तदा होता पशुबन्धवदग्निं प्रणीयान्वाह । तस्य सप्तदश सामिधेन्यः । नव प्रयाजाः, चतुर्थोऽत्र(त्र)(?)प्रवान्तरेणाऽऽप्रागुकाश्चत्वारो दुरःप्रभृतयः प्रैषप्रतीकं याज्याः पशुवत्समानयनम् । निर्मन्थ्यस्याऽऽवृता निर्मन्थ्येन प्रचरति पशुवत्स-

मानयनम् । अग्नेयं यज्ञमध्वरं सोम यास्ते मयोभुव इति द्वे आज्यभागावथ हविषामग्निर्मूर्धा भुव इत्याग्नेयस्य त्वं नः सोम या ते धामानीति सौम्यस्य । तत्सवितुरचिचीति सावित्रस्योपाꣳशु सावित्रेण द्यावापृथिव्या च प्रचरति चोदयित्री सूनृतानां पावीरवी कन्येति सारस्वतस्य पूषा गा शुक्रं त इति पौष्णस्य । तेऽवर्धन्तु प्र चित्रमर्कमिति मारुतस्य । विश्वे देवा विश्व देवा इति वैश्वदेवस्य । द्यावा नः पृथिवी प्र पूर्वजे पितरेति द्यावापृथिव्योः । अग्निꣳ स्तोमेन स हव्यवाडमर्त्य इति द्वे स्विष्टकृतः । अथ नवानूयाजान्यजति । अष्टावाद्याः पाशुकाः प्रैषवर्जमुत्तमेनोत्तमम् । यदा सूक्तवाकाय प्रेषितो ब्रवीति इदं द्यावापृथिवी इति संवत्सरीणाꣳ स्वस्तिमाशास्ते दिव्यं धामाऽऽशास्त इति सूक्तवाकस्याऽऽशीःषु होताऽनुवर्तयते । यदा वाजिभ्योऽनुब्रूहीति संप्रेष्यति तदा होता शं नो भवन्तु वाजे वाजे इति । अथोर्ध्वेंजुरासीनोऽनवानं होता यजति वाजिनस्याग्ने वीहीत्यनुयजति । त्रयाणाꣳ ह वै हविषां स्विष्टकृतेन संयजति सोमस्य वाजिनस्य घर्मस्येति विज्ञायते । एद्रेकेण पशुबन्धवद्दिग्भ्यः प्रतीच्याऽन्तर्वेदि शेषं सर्वे समुपहूय भक्षयन्ति । असावसावुपह्वयस्वेति कर्मनामधेयानामामन्त्रयते । उपहूत इति प्रतिवचनम् । होता प्रथमो भक्ष[य]ति यजमान उत्तमः । वाजिनां भक्षोऽवतु वाजो अस्माꣳ रेतः सिक्तममृतं बलाय । स न इन्द्रियं द्रविणं दधातु मारिषाम वाजिनं भक्षयन्तः । तस्य ते वाजिभिर्भक्षं कृतस्य वाजिभिः सुतस्य वाजिपीतस्य वाजिनस्योपहूतस्योपहूतो भक्षयामीति भक्षयति । समानमा वेदास्तरणान्तात्सिद्धमिष्टिः संतिष्ठते ॥२॥

इत्यापस्तम्बीयहौत्रसूत्रे द्वितीयप्रश्ने चतुर्थः पटलः ।

व्याख्यातम् । ननु—वाजिनाम् ( जै० सू० १६–४–८ ) इति वैश्वदेवे पर्वणि वाजिनेज्यादेवतानां वाजिनमप्यावाहनकाले स्विष्टकृदादिदेवतानामिवाऽऽवाहनं कर्तव्यमिति प्राप्ते—परप्रयुक्तद्रव्योपजीवित्वादद्रव्यस्य चाऽऽवाहनकाले जनिष्यमाणत्वेनानिश्चितत्वात्त्विष्णोरुरुक्रमस्यैव नाऽऽवाहनम् । अत एव स वै वाजिनो नाऽऽवाहयतीति लिङ्गम् ॥ २ ॥

इति श्रीमहादेवविरचितापस्तम्बहौत्रसूत्रभाष्ये द्वितीयप्रश्ने चतुर्थः पटलः ।

अथ पञ्चमः पटलः ।

अथ वरुणप्रघासपर्व । तस्य वैश्वदेववत्कल्पः । समे प्राची वेदी भवतः । उत्तरामध्वर्युः संचरति । दक्षिणां प्रतिप्रस्थाता । अग्निप्रणयनमावृत्तिः । पशुवदग्निर्मन्थ्यो सामिधेन्यश्च । नव प्रयाजा नवानूयाजाः । आज्यभागप्रभृति पौष्णान्तं१ समानम् । वैश्वदेवेनाथ हविषामिन्द्राग्नी रोचना दिवः श्नथद्वृत्रमित्यैन्द्राग्नस्याग्न्योः प्रचर्षणिभ्य इति याज्यामेके समामनन्ति । मरुतो यस्य हि क्षये स कं भानुभिरिति मारुत्या यज्ञैर्वा यज्ञवाहस इति पुरोनुवाक्या वा । अव ते हेड उदुत्तममिति वारुणस्य । कया नश्चित्र काथ(?) इति कायस्योपांशु प्रचरति । अग्ने नय आदेवानामिति द्वे स्विष्टकृतः । शं नो भवन्तु वाजे वाज इत्यामिक्षायाः । अथावभृथस्य तन्त्रं प्रक्रमयति । अपि वा नवेयपः(?) प्रगृह्य तिष्ठन्तोऽवभृथेन चरन्ति । लुप्यन्ते प्रवराः । अपबर्हिषः प्रयाजानिष्ट्वाऽप्सुमन्तावाज्यभागौ यजति । अप्स्वग्न इत्येषा अप्सु मे सोम इत्यप्सुमन्तौ । अथ हविष इमं मे वरुण तत्त्वा यामीति वारुणस्य । त्वं नो अग्ने स त्वं नो अग्न इति द्वे स्विष्टकृतः । अन्योन्यस्य पृष्ठे प्रधावतः । उद्वयं तमसस्परीत्यादित्यमुपस्थाय प्रतियुतो वरुणस्य पाश इत्युदकान्तं प्रत्यासित्वा समिधः कृत्वाऽऽप्रतीक्षा तूष्णीमित्येधोऽस्येधिषीमहीत्याहवनीये समिधमाधायाऽऽपोऽन्वचारिषमित्युपतिष्ठते । संतिष्ठत एषेष्टिः । संतिष्ठते वरुणप्रघासम् ॥ १ ॥

१ परिपरोहीणा१ स्वस्तिमाधात इति सूक्तवाहस्याऽऽदौ तु होताऽनुवर्तयति ।

तत्राग्निप्रणयनम् । केचिदध्वर्यवेव एकवचनान्तं प्रैषं प्रयुञ्जति । केचिद्द्विवचनान्तम् । उभयत्राप्यग्निप्रणयने न कश्चिद्विरोधः । सामिधेनीषु धाय्ये भवतः । आवाहने पूषान्तं वैश्वदेववदावाह्येन्द्राग्नी । आवह मरुतो वरुणं कं देवाँ आज्यपानित्यादि । स्रुगादापने विशेषः । घृतवतीमध्वर्यो स्रुचमास्येथां देवा युवं विश्ववारा इति । घृतवतीपदस्य स्रुचमिति पदस्य च न ऊहोऽनर्थत्वात् । अत्र नव प्रधानदेवताः । तत्राऽऽद्यानां पञ्चानां याज्यानुवाक्या ( तै० सं० ४ । १ । ११ ) वैश्वदेव्यामुक्ताः । वाजिनभक्ष उपावहयाचने प्रतिप्रस्थाता तृतीयो भवति । मतार्थमन्यत् ॥ १ ॥

अथ साकमेधपर्व । द्व्यहं साकमेधैर्यजते । अग्निनाऽनीकवता यजेत । साकं रश्मिभिः प्रचरन्ति । तस्य पञ्चदश सामिधेन्यः पञ्च प्रयाजाः । वार्त्रघ्नावाज्यभागावथ हविषो भद्रा ते अग्ने भद्रं त अग्न इति द्वे प्रधानस्य सैनानीकेनेति वा । स्वस्ति नो दिवो यथा होतुर्मनुष इति द्वे स्विष्टकृतः । सिद्धमिष्टिः संतिष्ठते ॥ २ ॥

तत्र पूर्वेद्युस्तिस्र इष्टयः । अनुसवनं पूर्वाह्णे । अग्नयेऽनीकवत इष्टिः ॥ २ ॥

अथ मरुता सांतपनेन यजेत । तस्य पञ्च प्रयाजाः । अग्निमीडे पुरोहितं त्वया सोम सुमेति द्वे आज्यभागौ पुरोनुवाक्ये । अथ प्रधानस्य हविषः पुरोनुवाक्यामाह सांतपन इदमिति । अथ याज्यां यो नो मर्तो वसव इति । अथ विकल्पितां याज्यां संवत्सरीणां मरुत इति । तत्रैव स्विष्टकृतः पुरोनुवाक्यामाह पिप्रीहि देवाँमिति तत्रैव याज्यामग्ने यदद्यविश इति । सिद्धमिष्टिः संतिष्ठते ॥ ३ ॥

अपराह्णे स्पष्टम् ॥ ३ ॥

गृहमेधीयस्य तन्त्रं प्रक्रमयति । तत्राऽऽज्यभागप्रभृतीडान्तं प्रचरति । अथाऽऽज्यभागयोरग्निना रयिमश्नवत्त्वंवः स्फानो अमी वहेति । अथ प्रधानस्य पुरोनुवाक्यामाह गृहमेधास आगत इति । तत्रैव याज्यां पूर्वीभिर्हि ददाशिमेति । प्रबुध्निया ईरत इति याज्या वा । तत्रैव स्विष्टकृतः

---

१ आज्यभागयोः पुरोनुवाक्ये ।

पुरोनुवाक्यामाहोपयमेति युवतिरिति । अथ तत्रैव याज्यामिमो अग्ने वीततमानीति ॥ ४ ॥

ननु गृहमेधीये (जै० सू० ११-४-७) न सामिधेनीरन्वाहेति गृहमेधीये सामिधेनीनिषेधादावाहनमपि न कार्यम् । कौषीतके आवाहनविधिभ्यः परतोऽथ यत्परस्तात् सामिधेनीनां जपति वज्रो वै सामिधेन्य इति सामिधेनीपरामर्शेन तदवान्तरप्रकरणे पाठेन तदङ्गत्वावगतेरिति प्राप्ते—उभयोर्भिन्नकार्यार्थत्वेन गुणानां च परार्थत्वादिति न्यायेन परस्पराङ्गाङ्गिभावे मानाभावात्परस्ताज्जपविधेर्दूरस्थानुवादेनाप्युपपत्तावान्तरप्रकरणाभावान्नाऽऽवाहनबाधः । गतार्थमन्यत् ॥ ४ ॥

मरुद्भ्यः क्रीडिभ्यो यजेत । पञ्चदश सामिधेन्यः । पञ्च प्रयाजा वार्त्रघ्नावाज्यभागावथ हविषः क्रीडं वः शर्धं अत्यासो नये मरुत इति द्वे याज्यापुरोनुवाक्ये । प्रैषामज्मेषु विधुरेव उपह्वरेषु यदचिध्वमिति वा । अग्निमग्निꣳ हवीमभि तꣳ शश्वन्त इति द्वे स्विष्टकृतः । सिद्धमिष्टिः संतिष्ठते ॥ ५ ॥

गतार्थम् । पौर्णमासतन्त्रं संतिष्ठते ॥ ५ ॥

तदानीमेव महाहविर्भिर्यजते । तद्वरुणप्रघासेन व्याख्यातमष्टौ प्रधानदेवताः । अग्निः सोमः सविता सरस्वती पूषा इन्द्राग्नी इन्द्रो विश्वकर्मा चेति सप्तदश सामिधेन्यो नव प्रयाजाः । इन्द्राग्नी रोचना दिवः श्नथद्वृत्रेत्यैन्द्राग्न्योर्याज्यापुरोनुवाक्ययोः । इन्द्रं वो विश्वतस्परीन्द्रं नर इत्यैन्द्रस्य याज्यापुरोनुवाक्ययोः । विश्वकर्मन्हविषा वावृधानो विश्वकर्मन्हविषा वर्धनेनेति वैश्वकर्मणस्य याज्यापुरोनुवाक्ययोः । समानं वरुणप्रघासेन । यदा सूक्तवाकं पठति तदा इदा वत्सरीणाꣳ स्वस्तिमाशास्ते दिव्यं धामाऽऽशास्त इति सूक्तवाकस्याऽऽशीःषु होताऽनुवर्तयति । संतिष्ठते महाहविः ॥ ६ ॥

समाप्तायामिष्टौ महाहविर्नामकैर्हविर्भिर्यजेत । व्याख्यातमन्यत् ॥ ६ ॥

तदानीमेव महापितृयज्ञेन यजेत । तस्य त्रिः (तिस्रः) सामिधेन्यः । यदाऽग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीति संप्रेष्यति तदोशन्तस्त्वा

इथामह इत्येताꣳ सामिधेनीं त्रिरन्वाह । सꣳसृष्टे प्रवरं प्रवृणीते सीद होतरित्येतावान्प्रवरः । अप-बर्हिषः प्रयाजान्यजति । जीवातुमन्तावाज्यभागौ ताभ्यां प्रचर्य विस्रस्य यज्ञोपवीतं प्राचीनावीतं कुरुते होता दक्षिणा विपरिक्रामति । यदा सोमाय पितृमतेऽनुस्वधेति संप्रेष्यति द्वे पुरोनु-वाक्ये अन्वाहैकां याज्याꣳ सप्रणवे स्याताम् । यद्वाऽऽस्वधेत्याश्रावयति अस्त्याश्रावितेः सोमं पितृमन्तꣳ स्वधेति संप्रेष्यति ये स्वधामह इत्या-गूर्भवति स्वधा नम इति वषट्करोति त्वꣳ सोम प्रचिकित, त्वया हि न इति द्वे पुरोनुवाक्ये त्वꣳ सोम पितृभिरिति याज्या । अथ पितृन्बर्हिषदो बर्हिषदः पितर ऊत्ये अहं पितृन् इति द्वे पुरो-नुवाक्ये । उपहूताः पितर इति याज्या । पितृ-नग्निष्वात्तान्, अग्निष्वात्ताः पितरः, अग्निष्वात्ता-नृतुमत इति द्वे पुरोनुवाक्ये । वान्यायै दुग्धे जुषमाणा इति याज्याम् । अथैकेषामग्निं कव्यवा-हनेन यमेन वा यजेत । यदग्ने कव्यवाहनः त्वमग्न ईडित इति द्वे पुरोनुवाक्ये । मातलीकव्यैर्यमो अङ्गिरोभिरिति याज्याम् । ये तातृपुर्देवत्रेति स्विष्टकृतः पुरोनुवाक्यां हव्यवाहमजरमिति यजति । अथेडामुपहूयावान्तरेडां होताऽवजिघ्रति । अथ यज्ञोपवीतं कुरुते । अपबर्हिषावनूयाजौ यजति । सूक्तवाकं प्रति होता निवीतं कुरुते न पत्नीं संयाजयन्ति । संतिष्ठते पितृयज्ञः ॥ ७ ॥

तेन साकमेधैः सहैनस्य त्र्यम्बकस्य च समानप्रधानता । अग्नये देवेभ्य इति वाच-निकोऽयं भेदो न तूहेन । तयोहन्याप्राप्तेः । एकामन्वाह त्रिरन्वाहेति व्याख्यातम् । आ नो अग्ने सुकेतुना रयिं त्वꣳ सोम महे भगमिति जीवातुमन्तावाज्यभागौ । उत्तरतः सव्यो स्थितो दक्षिण तः सव्यमागत्य तिष्ठति । द्वे पुरोनुवाक्ये प्रणवान्ते स्याताम् । ब्रूहि श्रावय श्रौषट् ये यजामहे वौषट्, एतेषामपवादत्वेनान्ये स्वधेति पञ्चानां स्थाने विधीयते । वषट्कारस्थाने स्वधा नम इति ॥ ७ ॥

शुनासीरीयेण यजेत । तस्य सप्तदश सामिधेन्यः । नव प्रयाजाः । तस्य वैश्वदेवेन कल्पो व्याख्यातः । पञ्च संचरैरिष्ट्वाऽथैन्द्राग्नेन यजेत वैश्वदेवेनेन्द्रः शुनासीरीयेण वायव्येन सौर्येणेति । इन्द्राय शुनासीराय स्रुचा जुहुत नो हविः । जुषतां प्रतिमेधिरे । प्र हव्यानि घृतवन्त्यस्मै हर्यश्वाय भरता सजोषाः । इन्द्रर्तुभिर्ब्रह्मणा वावृधानः शुनासीरो हविरिदं जुषस्वेति शुनासीरस्य याज्यानुवाक्ये । वायो शतꣳ हरीणां प्र याभिर्यासीति वायोः । उदु त्यं जातवेदसं चित्रं देवानामिति द्वे सूर्यस्य । सूर्यमुपाꣳशु प्रचरति । अग्निꣳ स्तोमेन स हव्यवाडमर्त्य इति द्वे स्विष्टकृतः । अनुवत्सरीणाꣳ स्वस्तिमाशास्ते दिव्यं धामाऽऽशास्त इति सूक्तवाकस्याऽऽशीःषु होताऽनुवर्तयते । वाजिनवर्जं संतिष्ठते चातुर्मास्यानि ॥ ८ ॥

द्व्यहाद्यतीते पर्वणि प्रयोगो वचनात् । शुनासीरोपलक्षितत्वाच्छुनासीरीयं कर्म । उत्तरवेदेरभावाद्वैश्वदेवेनेत्युक्तम् । शुनासीरीयान्तैव संस्था चातुर्मास्यानां सोमादेरङ्गत्वात् । गतार्थमन्यत् ॥ ८ ॥

नैनमनीजानꣳ सोमेन फाल्गुनी प्राप्नुयात् ॥ ९ ॥

एनं यजमानं सोमेनानीजानं फाल्गुनी पौर्णमासी न प्राप्नुयात् । फाल्गुन्यां पौर्णमास्यां सोमेनावश्यमेष्टव्यमित्यर्थः ॥ ९ ॥

सोमाभावे पशुना ॥ १० ॥

अशक्तौ पशुना निरूढकल्पेनानन्तरे पर्वणि ॥ १० ॥

पश्वभावे पुनः प्रयोगश्चातुर्मास्यानां चातुर्मास्यानाम् ॥ ११ ॥

इत्यापस्तम्बहौत्रसूत्रे द्वितीयप्रश्ने पञ्चमः पटलः ।

इष्टिरप्युक्ता कात्यायनबौधायनवैखानसैः । तदकरणे पुनः प्रयोगः । तान्यकृत्वैव पुनः प्रयोगोऽभ्यास इत्यर्थः । ततोऽपि सोमेन पशुना वा समाप्तिः । इष्टिराग्नेयी कात्यायनीयानाम् । अन्यैः सवनेष्टिरित्युक्तम् । आग्नेयोऽष्टाकपाल ऐन्द्राग्न एकादशकपालो वैश्वदेवो द्वादशकपालो वैश्वदेवश्चरुर्वा समानतन्त्रा भिन्नतन्त्रा वैका । अभ्यासः प्रश्नसमाप्त्यर्थः ॥ ११ ॥

इति श्रीमहादेवदीक्षितसोमयाजिकृतायामापस्तम्बहौत्रसूत्रव्याख्यायां प्रयोगचन्द्रिकायां द्वितीयप्रश्ने पञ्चमः पटलः प्रश्नश्च ॥

---

# सत्याषाढविरचितं श्रौतसूत्रम् ।

महादेवशास्त्रिसंकलितप्रयोगचन्द्रिकाव्याख्यासमेतम् ।

अथ द्वाविंशप्रश्ने प्रथमः पटलः ।

विनेययुक्ताखिलसिद्धवर्यलसच्चिदानन्दसुखं मुनीन्द्रम् ।
नमामि सूत्रार्थविदे मुदाऽहं हिरण्यकेश्याख्यगुरुं कृपाब्धिम् ॥

एकविंशे निरूपितौ हौत्रप्रवरनिर्णयौ ।
द्वाविंशे चाथ वक्ष्यन्ते वायव्यादिपशुविधय ॥

**काम्यैः पशुभिरमावास्यां पौर्णमासीं वा सं-स्थाप्य यजेत । ते ब्राह्मणव्याख्याताः ॥ १ ॥**

काम्यै. पशुभिरिति । अथ काम्या पशुबन्धा उच्यन्ते। वायव्यं श्वेतमित्येवमाद्यास्ते काम्या( म्य )प्रायास्तैरमावास्याया पौर्णमास्या वा यजनीयेऽहनीति सूत्रकारः । यजेत तत्र काम्यानामेव पर्वनियमः । न तु नैमित्तिकाना मध्ये विहितानाम् । यथा—' इन्द्राय मन्युमते ,मनस्वते, सग्रामे संयत्ते ' इत्येवमादीनामाश्विनं धूम्रललाममालभेत, ऐन्द्राग्नं पुनरुत्सृष्टमालभेतेत्येवमादीना च न तु पर्वनियमः । निमित्तानन्तर कर्तव्यम् ( त्य-त्वात् ) ॥ १ ॥

**तेषां निरूढपशुबन्धेन कल्पो व्याख्यातः ॥ २ ॥**

तेषां वायव्यादीना पशूना निरूढपशुना कल्प. प्रकारो निरूपित इत्यर्थः ॥ २ ॥

**सर्वेष्वाभिचारिकेषु शरमयं बर्हिर्वैभीतक इध्मो लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरन्ति ॥ ३ ॥**

ऋत्विजः प्रचरन्तीति वचनाद्यजमानोऽपि लोहितोष्णीषादि ॥ ३ ॥

**वायव्यं श्वेतमालभेत भूतिकाम इति यथासमा-म्नातम् ॥ ४ ॥**

वायुर्देवता यस्य पशोः सोऽय वायव्य. । स च श्वेतवर्णः । तमालभेत संस्पृशेत् ।

बर्हिः प्लक्षशाखाभ्यां यागार्थमुपाकुर्यादित्यर्थः । यद्यप्यत्र यजेतेति न श्रूयते तथाऽपि द्रव्यदेवतात्मकस्य यागरूपस्य श्रूयमाणत्वादन्यथानुपपत्त्या वायव्येन यजेतेत्येवं यागः कल्पनीयः ॥ ४ ॥

तेषामावापिकेषु स्थानेषु यथादेवतं षड्टचो निदधाति पीवोऽन्नां रयिवृधः सुमेधा इति । एतानि यथारूपं यथादेवतमाम्नातानि भवन्ति ॥ ५ ॥ मरुद्दा इति मणिला इत्यर्थः ॥ ६ ॥

तेषां काम्यानां यथालिङ्गदेवतं षड्टचो निदधाति । वपायाः पुरोडाशस्य हविष इति द्वे द्वे आद्ये वपाया द्वे उत्तरे पुरोडाशस्योत्तरे हविषः । इदं याजुषं हौत्रम् ।

अथ कर्मक्रमः—पर्वण्यग्निहोत्रं हुत्वा पशुबन्धेन यक्ष्ये भूतिमवाप्नवानीति संकल्पः । अथ येन यज्ञेनेत्सेंदित्याग्नेययागः पृथक्तन्त्रेण केचिदिच्छन्ति । केचित्समानतन्त्रेण । समानतन्त्रपक्षे पशुतन्त्रमेव । संकल्प्य समारोप्य मथित्वाऽऽयतने निधाय विद्युत् पड्ढोता पश्चिष्टयादि । पशुपात्रसादनकाले स्फ्यश्च कपालानि चेत्याद्यपरतो येन यज्ञेन संसव( नेत्र्से )दित्याग्नेयस्य पुरतः पाशुकानि पात्राणि पाश्यादीनि पात्राणि संमृश्य वानस्पत्याऽसीत्याग्नेयं ( त्वाद्याग्नेय ) निरुप्य, उपसाद्य प्रोक्ष्य शुन्धध्वमित्यादिकृष्णाजिनादानादीन्याप्यलेपनियनान्तं कृत्वोत्तरपरिग्राहाद्याज्यान्यभिमन्त्र्येदमहमित्यादिपुरोडाशमासाद्य यूपावटपरिलेखनादिपशूपाकरणकाले श्वेतवर्णमज पशुमानीय वायवे त्वा जुष्टमुपाकरोमीति वायवे त्वा जुष्टं नियुनज्मि वायवे त्वा० पोक्षामि, वायवे त्वा० उत्क्रान्तामि, वायवे त्वा० अभिघारयामि, वपामासाद्योत्तमप्रयाजाद्याज्यभागाविष्ट्वाऽऽग्नेयेन प्रचर्य स्विष्टकृदिडामार्जनान्त [ कृत्वा ] ततो वपाप्रचारः पारिवप्यहोमादि । केचित्पशुस्विष्टकृदिडयोः सह पुरोडाशस्याऽऽग्नेयस्यान्ते पिष्टलेपादिसवनीयानामुत्कर्षपक्षवन्नारिष्ठान्हुत्वाऽग्निर्भूतानामित्यादि पीवोऽन्नामिति षड्टचः । ततो वपायाः पुरोडाशस्य हविष इति द्वे द्वे याज्यानुवाक्ये ।

एतमेव सन्तम् । एत भूतिफलं सन्तं वायवे नियुत्वत आलभेत । येन कर्मणेर्त्सेत्तत्र होतव्या इति वचनात् । पशुबन्धेन यक्ष्ये भूतिमवाप्नवानीति । सर्वं पूर्ववत् । वायवे नियुत्वते त्वा जुष्टमुपाकरोमीति । अग्निर्वाद्धिरण्यगर्भ इत्याहरणान्तं पूर्ववद्याज्यानुवाक्याः । शेषं पूर्ववत् ।

ज्योगामयावी ग्रामकामोऽपि एतेन यजेत प्रजाकामोऽपि । सर्वं पूर्ववत् । ज्योगामयावी चिररोगी, सोऽप्येतेन यजेत चिररोगमुक्त्यर्थमिति विशेषः ॥ १ ॥ ६ ॥

विषम आलभेतेति विषमं देवयजनमध्यवस्यति पशुं वा विषम आलभेत ॥ ७ ॥

विषमशब्दो न युग्मवाची । देवयजनमप्यसमदेश इत्यर्थः ॥ ७ ॥

धेनोः कंचिद्गुणमाह—

पर्यारिणीति परिह्रासुर्भवति ॥ ८ ॥

या गौर्गर्भिणी सती प्राप्तं प्रसवकालं परित्यज्य चिरं गर्भं धृत्वा पश्चात्प्रसूते सा पर्यारिणी । तथा च ब्राह्मणम्—'पर्यारिणी भवति ' इति ॥ ८ ॥

यूपस्य चोदकप्राप्तमष्टाश्रित्वादिरूपमपवदितुं स्फ्यसमानमाकारमाह—

स्फ्यो यूप इति स्फ्याकृतिर्यूप आग्न्यागारिको वा ॥ ९ ॥

अत्र ब्राह्मणम्—' स्फ्यो यूपो भवति, ( तै० सं० २–१–१ ) इति ॥ ९ ॥

त्वाष्ट्रं वडवमिति यं पुमांसः सन्तमारोहन्ति ॥ १० ॥

यथा मनुष्येषु यत्र क्वापि पुंसः स्तनवृद्धौ सत्यां श्मश्रुनिर्गमनात्प्राग्योषित्त्वभ्रमो भवति तद्वदश्वेष्वपि केनाप्यवयवसंनिवेशविशेषेण यस्मिन्पुंस्यश्वे योषित्त्वबुद्धिरितरेषामश्वानां भवति । अत एव ते तेऽश्वास्तदा तदा तमश्वमारोहन्ति सोऽयमीदृशोऽश्वो वडवः । स च त्वष्टुः प्रियः । रेतसः सिक्तस्य 'त्वष्टा रूपाणि विकरोति' इति श्रुतत्वान्मिथुनप्रजनयितृत्वम् । 'त्वाष्ट्रं वडवमालभेत' ( २–१–८ ) इति श्रुतेः ॥ १० ॥

अपां चौषधीनां च संधाविति प्रावृषि शरत्प्रतिपत्सौ वा । अपि वाऽपां चौषधीनां च संधौ ॥ ११ ॥

संधिशब्दं कालपरत्वेन देशपरत्वेन च द्वेधा सूत्रकारो व्याख्यातवान् । ऋत्वोर्मध्ये नदीक्षेत्रयोर्मध्य इति तस्यार्थः । ओषधीनामुपकारकत्वेन मित्रसंबन्धित्वम् । संधौ प्रयोग उभयरसोपजीवनेन प्रशस्तः । एतदेवाभिप्रेत्य संधिं प्रशंसति ब्राह्मणम्–अपां चौषधीनां च संधावालभत उभयस्यावरुद्ध्यै ( तै० सं० २–१–९ ) इति ॥ ११ ॥

यूपस्य शाखाद्वयमाह—

विशाखो यूप इति यदूर्ध्वं रशनायास्तद्विशाखं यद्वोपर्युभे शाखे अष्टाश्री सचषाले स्याताम् ॥१२॥

विविधे शाखे यस्यासौ विशाखः । तदिदं ब्राह्मणे दर्शयति-'विशाखो यूपो भवति द्वे ह्येते देवते समृद्ध्यै' ( तै० सं० २-१-९ ) इति ॥ १२ ॥

अथ परिभाषते—

ऋषभे गोषु जीर्णे यूनः कर्णमाजपेत्पिशङ्गरूप-
स्तन्नस्तुरीपमिति ॥ १३ ॥

प्राशृङ्गोऽवाक्शृङ्ग उक्षा वशा वेहद्धेनुर्वत्स ऋषभोऽनड्वान्पुनरुत्स्यूतो गोमृग इति गव्याः । अत्राव वेहतमालभते । वाचे वेहतम् । श्रद्धायै वेहतम् । ब्रह्मण ऋषभम् । आ गावो अग्मन्नित्युपहोमाः । मृत्यवे वेहतम् । तत्र मर्तारमुपजुहुयात् । सूर्याचन्द्रमोभ्यां यमौ श्वेतं कृष्णं चैकयूपे । अद्भ्यो वेहतम् । तत्र सलिलमुपजुहुयात् । भगाय वाशितामिति । य ऊर्ध्वमाश्विनात्पशवस्तेषां सूक्तक्रमेण विधिः । ऋषभे गोषु जीर्णे यूनः कर्णमाजपेत्पिशङ्गरूपस्तन्नस्तुरीपमित्येताभ्यामित्यापस्तम्बः ॥ १३ ॥

अथैनं गोष्वपिसृजत्येतं युवानमिति ॥ १४ ॥

एनमृषभं गोष्वपिसृजति । मदेमेत्यन्तः ॥ १४ ॥

जीर्णमालभते ॥ १ ॥ प्राजापत्यमैन्द्रं त्वाष्ट्रं वा
मनो महिम्न इत्युपाकरणेऽनुवर्तयते ॥ १५ ॥

हव्यमित्यन्त ॥ १५ ॥

तृतीयया वपां जुहोति । चतुर्थ्या हविः । पञ्चम्या
सौविष्टकृतम् ॥ १६ ॥

एतं युवानमित्यनुवाकादिमपेक्ष्य तृतीयादिव्यवहारः ॥ १६ ॥

आग्नेयमष्टाकपालं निरुप्याजां वशामाल-
भते ॥ १७ ॥

गतः ॥ १७ ॥

वायव्यमालभेत भूतिकाम इत्युक्तानि दैव-
तानि ॥ १८ ॥

ब्राह्मणे व्याख्यातानीति विशेषः ।

तद्यथा—यः प्रजाकामः पशुकामः स्यात् प्रजाकामो वा पशुकामो वाऽऽहारण्यवत्त्वेन स प्राजापत्यमजं तूपरमालभेत । पशुबन्धेन यक्ष्ये प्रजावान्पशुमान्स्यामिति । वाजपेय-

यन्निगमाः। प्रजापतये त्वा जुष्टमुपाकरोमीत्यादि। प्रजापते न त्वदेतानिति पङ्क्चो याज्यानुवाक्याः।

सोमापौष्णं त्रैतमालमेत पशुकामः। पशुमान्भूयासमिति संकल्पः। त्रैतं त्रयाणां सह जातानामेकं तिरस्करोति। तदुक्तं ब्राह्मणे 'सोमापौष्णं त्रैतमालभेत' (तै० सं० २-१-१) इत्यादि। त्रयाणां वत्सानां युगपज्जातानां समुदायस्त्रितं तत्र भवस्त्रै-तस्तेषामन्यतम इत्यर्थः। यूपच्छेदनकाल औदुम्बरो यूपो भवति। सोमापूषभ्यां त्वा जुष्टमुपाकरोमि। एवं प्रोक्षणादयः, न प्रेषणं पशोः सोमापूषणेमौ देवाविति पङ्कचः।

वरुणगृहीतो महोदरव्याधिगृहीतः कृष्णमेकशितिपादं श्वेतैकपादमालभेत। पशुबन्धेन यक्ष्ये महोदरव्याधिमोक्षार्थमिति विशेषः। वरुणाय त्वा जुष्टमुपाकरोमीत्यादि। उदुत्तमं वरुणमिति पङ्क्चः प्रतीकं याज्यानुवाक्याः। शेषं पूर्ववत्।

प्रजार्थी वा बहुपश्वर्थी वोत्तरेण पशुना यजेत। केचित्तु फलद्वयमिच्छन्ति। पशुबन्धेन यक्ष्ये पशुभिः प्रथनार्थं पशुमान्भूयासमिति प्रजज(न)नार्थमिति वा। आदित्येभ्यः कामाय त्वा जुष्टमुपाकरोमीति। एवमपि वशामुपाकरोति। वशा व्याख्याता। ते शुक्रास इति पङ्क्चो याज्यानुवाक्याः।

चतुर्दश्यां प्रातरग्निहोत्रं हुत्वा पशुबन्धेन यक्ष्ये ब्रह्मवर्चसमवाप्नवानीति संकल्पः। पङ्क्तोतादिप्रोक्षणान्तमुत्तरवेदेश्चतुर्दश्यामेव। पञ्चदश्यामुपव्युषमेवाग्निप्रणयनादि, पशूपा-करणं वपाहोमो वा प्रातःकाले यथा स्यात्तदनुसारेणाऽऽरम्भः। गर्भिणीं मल्हां ग्रीवायां स्तनाविव मांसपिण्डौ यस्यास्ता मल्हा गर्भिणी कृष्णग्रीवाम्, अग्नये त्वा जुष्टमुपाकरोमीति सवनीयवन्निगमाः। सर्वत्र स्त्रीलिङ्गेनोहः। अतिरात्रवत्। न मेधीशब्दः। अग्ने नयेति पङ्क्चो याज्यानुवाक्याः। ब्राह्मणभोजनान्तम्।

ततो ग्रीष्मकाले पर्वणि द्व्यहकालेन वा पशुबन्धेन यक्ष्य इति संकल्पः। पङ्ढोता पाश्विष्टचादि पूर्ववत्। (मल्हा) गर्भिणीं संहिता संश्लिष्टां माध्यंदिन उपाकरोति। उपा-करणं वपाहोमो वा यथा स्यात्तथेन्द्राय त्वा जुष्टमुपाकरोमीत्येवं निगमाः। इन्द्रं नर इति पङ्क्चो याज्यानुवाक्याः। शेषं पूर्ववत्।

शरत्काले पर्वणि द्व्यहकाले वा पूर्ववन्मल्हां श्वेतां गर्भिणीमुपाकरोति। अपराह्ण उपाकरणं वपाहोमो यथा स्यात्तथाऽऽरम्भः। बृहस्पतये त्वा जुष्टमुपाकरोमीत्येवं निगमाः। आवेधसमित्यादिपर्येवा पित्र इत्यन्ताः पङ्क्चो याज्यानुवाक्याः। आवेधसं स हि शुचिः,

बृहस्पते पर्येषा मित्र इति प्रतीकम् । त्रिषु पशुबन्धेषु न गर्भिणी प्रायश्चित्तं न वा वसन्ते प्रातरित्यादि । आरम्भप्रभृति यजमानस्य ब्रह्मचर्यादिनियमान्केचिदिच्छन्ति ।

वाचः प्रसारणसमर्थः सन्निरोधादसमर्थः स्यात्स ( अभ्यासपाटवेन वाचो वदितुं समर्थोऽपि सभाकम्पादिना संनिरोधार्थः स्यात्स) उत्तरेण पशुबन्धेन यजेत। पशुबन्धेन यक्ष्ये वाक्सौष्ठवार्थम्। अपन्नदती मेषी ( तै०सं०२।१।१ )सरस्वत्यै त्वा जुष्टमुपाकरोमीति। आनो दिवः पावीरवीति पङ्क्त्वो याज्यानुवाक्याः । आनो दिव इति पञ्च प्रतीकाः । इयं शुष्मेभिरित्यस्मिन्पठिताः ।

ज्योगामयावी, उत्तरेण द्विपशुबन्धेन यजेत । आग्नेयं कृष्णग्रीवं बभ्रुमिति । पशुबन्धेन यक्ष्ये विरोगमुक्त्यर्थम् । षड्ढोत्रादि तस्याऽऽदित्यां मल्हाम्, इतिवद्द्वेद्विमानं शम्यामात्रमुत्तरवेदियूपद्वयस्य च्छेदनमुपशयस्य च । युनज्मीति च पशुभ्यामिहि न तु मध्येऽग्ने होमः, न गृहावकाशशृतंकारधाता रातिः । शिष्टं सर्वमेकादशिनीवत् । अग्नये कामाय त्वा जुष्टमुपाकरोमीति कृष्णग्रीवं सौम्यं बभ्रुं सोमाय त्वा जुष्टमुपाकरोमीतिवच्छिष्टं । सर्वमादित्यां मल्हामितिवत्पुल्लिङ्गद्विवचनेनोहः । अग्ने नयेति पङ्क्च आग्नेयस्य । सोमो धेनुमिति पङ्कचः सौम्यस्य । अषाढं युत्सु त्वᳶ सोम या ते धामानीति प्रतीकं, प्रजाकामोऽप्येतेनैव यजेत । पशुबन्धेन यक्ष्ये प्रजामाप्नवानीति । सोमाय त्वा जुष्टमुपाकरोमीति । अग्नये त्वा जुष्टमुपाकरोमीति विशेषः । पूर्ववद्विपर्यासेन याज्यानुवाक्याः। देवताविपर्यासक्रमेणेत्यर्थः ।

यो ब्राह्मणो विद्यामर्जयित्वा न विरोचेत विद्याप्रयुक्तदीप्त्या न वर्धेत स एतेन द्विपशुना यजेत । पशुबन्धेन यक्ष्ये विद्याप्रयुक्तदीप्त्यर्थमाग्नेयं कृष्णग्रीवमालि(लभे)त भवतः सौम्यं बभ्रुमग्नये त्वा जुष्टमुपाकरोमि सोमाय त्वेति बभ्रुं शेषं पूर्ववत् । अग्ने नयेति पङ्क्च आग्नेयस्य सोमो धेनुमिति सौम्यस्य । पुंलिङ्गद्विवचनेनोहः ।

पशुबन्धत्रयस्य , निष्क्रीताविमावित्याद्याग्नेयं कृष्णग्रीवं सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवमित्यादि । एतेन त्रिपाशुकेन पुरोधाय पौरोहित्याय स्पर्धमानो मम पौरोहित्यं स्यादिति । एतेन त्रिपाशुकेन यजेत । पशुबन्धेन यक्ष्ये पौरोहित्यमवाप्नवानीति संकल्पः । पूर्ववद्वेदिमानं यूपत्रयस्य च्छेदनमुपशयस्य च यूपत्रयस्योच्छ्रयणमुपशयनिधानमाग्नेयं कृष्णग्रीवं दक्षिणे सौम्यं बभ्रुं सोमाय त्वा जुष्टमुपाकरोमीत्युपाकृत्योपशयनिर्देशः। कृष्णमृगस्ते पशव इति बहुवचनेन मन्त्राणामूहः । आग्नेयेन प्रचर्य सौम्येन प्रचर्याऽऽग्नेयेन प्रचरति अग्ने नय० सोमो धेनुं० अग्ने नय० इति । सर्वे अजाः पशवः । केचिदाग्नेययोस्तन्त्रेण प्रचारः, एकदेवतत्वात् । सर्वेषां निरूढपशुवद्दक्षिणा । स्पर्धमाने उत्तरेण

पशुबन्धेन यजेत । पशुबन्धेन यक्ष्ये स्पर्धासिद्ध्यर्थम् । विषमे देशे यजेत । निम्नोन्नतदेशे यजेतेत्यर्थः । वामनं पिण्डाकृतिं विष्णवे त्वा जुष्टमुपाकरोमीत्येवं निगमाः । विष्णोर्नु कमिति पड्चः ।

युद्धे प्राप्ते राजन्यः—उत्तरेण पशुबन्धेन यजेत । युद्धजयार्थमिति संकल्पः । ललामो श्वेतपुण्ड्रवाख्याङ्कितललाटः । प्राशृङ्गो मुखं प्रत्यानतशृङ्गो गौः । प्राशृङ्गो गौरिति भारद्वाजत्वेन वि(भारद्वाजवचनाद्वि)कल्पितः । ग्रामकाम उत्तरेण पशुबन्धेन यजेत । पृश्निसक्थ्यः पृश्नि(श्वेत)वर्णकटिप्रदेशः । पशुबन्धेन यक्ष्ये ग्राममवाप्नवानीति । इन्द्राय मरुत्वते त्वा जुष्टमुपाकरोमीति चेवं निगमाः । मरुत्वन्तमिति पड्चो याज्यानुवाक्याः ।

राज्यकाम उत्तरेण पशुबन्धेन यजेत । राज्यार्हक्षत्रियस्यान्ययेर्वा पशुबन्धेन यक्ष्ये राज्यप्राप्त्यर्थम् । सौम्यं सोमाय त्वा जुष्टमुपाकरोमीति । सोमो धेनुमिति याज्यानुवाक्याः ।

गतश्रीः प्रतिष्ठाकाम उत्तरेण यजेत । पशुबन्धेन यक्ष्ये प्रतिष्ठार्थमिति संकल्पः । ललामं प्राशृङ्गं गाम् । इन्द्राय त्वा जुष्टमुपाकरोमि । इन्द्रो वृत्रमतरदिति पड्चो याज्यानुवाक्याः ।

पापगृहीत उत्तरेण पशुबन्धेन यजेत । पशुबन्धेन यक्ष्ये पापक्षयार्थमिति । इन्द्रायाभिमातिघ्ने त्वा जुष्टमुपाकरोमीति निगमाः । अत्रापि ललामं प्राशृङ्गमालभेत । इन्द्रस्तरस्वानिति पड्चो याज्यानुवाक्याः ।

राज्यकाम उत्तरेण पशुबन्धेन यजेत । पशुबन्धेन यक्ष्ये राज्यप्राप्त्यर्थम् । इन्द्राय वज्रिणे त्वा जुष्टमुपाकरोमि । ललामः प्राशृङ्गो भवति । अनवस्ते रथमिति पड्चो याज्यानुवाक्याः ।

ब्रह्मवर्चसकाम उत्तरेण पशुबन्धेन यजेत । दशार्षभेति कर्मनाम । केचिन्नेच्छन्ति । गर्भिणीवत् । वसन्ते चतुर्दश्यां प्रातरग्निहोत्रं हुत्वा दशार्षभया यक्ष्ये ब्रह्मवर्चसमाप्नवानीति संकल्पः । केचित्पशुबन्धेन यक्ष्य इति । समारोप्य मथित्वाऽऽयतने निधाय पड्ढोत्रादि, यूपकाले यूपस्य च्छेदनमुपशयस्य चाऽऽदित्यां मल्हामालभेतेतिवद्वेदिमानम् । उत्तरवेदिप्रच्छादनान्तं कृत्वा गर्भिणीवद्विरामः । प्रातःकाल उपाकरणं वपाहोमो वा यथा स्यात्तथोपक्रमः । आदित्येभ्यस्त्वा जुष्टमुपाकरोमीति त्रीन्वृषभाल्लँलामपुण्ड्रानालभते । अथवा प्रजापतिदेवत्याने कादशिनि(नी)देवत्यान्वाऽऽद्यास्तिस्रः (स्त्रियः) । अथवा गर्भिणीदेवत्यान्वा । सर्वपक्षे त्रयाणां सह प्रचारः । गर्भिणीदेवतापक्षे ॥ ते…उस्रासः ?

प्राजापत्यपक्षे तु प्रजापते न त्वदेतानिति पङ्क्तः । एकादशिनीपक्षे बह्वृचमतिराश्रयणीया । ग्रीष्मे पर्वणि मध्यंदिने षड्ढोता, त्रीन्वृषभाञ्छ्वेतपृष्ठानादित्येभ्यः कामाय त्वा जुष्टमुपाकरोमि । प्राजापत्या वैकादशिनीदेवता वा चतुर्थाद्यास्तिस्रो गर्भिणीदेवता वा । सर्वेषां सह प्रचारः । सर्वेषामेकादशिनीवन्नियोजनम् । न ग्रहावकाशादयः । निरूढवदिति विधानात् । पूर्ववद्याज्यानुवाक्याः ।

शरदि पूर्ववत्संकल्पादि, त्रीन्वृषभाञ्छ्वेतवालानादित्येभ्यः कामाय त्वा जुष्टमुपाकरोमीति प्राजापत्या वैकादशिनीदेवता वा । सप्तम्याद्यास्तिस्रो गर्भिणीदेवता वा । सर्वेषामेकादशिनीवत् । न ग्रहावकाशादयः । पूर्ववद्याज्यानुवाक्याः ।

संवत्सरस्य पुरस्ताद्यस्मिन्पर्वण्यारम्भस्तत्प्रभृति द्वादशपौर्णमासीषु द्वादशाऽऽमावास्यासु व्यतीतासु त्रयोदशे पर्वणि संकल्पादि, षड्ढोता पश्विष्ट्यादि एक एव यूपः । एकवृषभमुपाकरोति । पशुबन्धेन यक्ष्ये । सर्वत्र दाशर्षभं हविरिदमेषां मयीति । केचित्तु प्रजापतये त्वा जुष्टमुपाकरोमीति । प्रजापते न त्वदेतानिति पङ्क्तः । गर्भिणीदेवताप्रश्न आद्या आग्नेयाः, मध्यमा ऐन्द्राः, उत्तरा बार्हस्पत्याः । सर्वत्र प्राजापत्या एवान्ततः । एवमन्तं यजमानस्य च ब्रह्मचर्यादि । केचिद्यत्कामयेत कुष्ठादिस्त्वग्दोषो विद्यत इति भीतः स उत्तरेण पशुबन्धेन यजेत । पशुबन्धेन यक्ष्य इति संकल्पः । सोमापूषभ्यां त्वा जुष्टमुपाकरोमीति । सोमापूषणेमौ देवाविति पङ्क्तः ।

भ्रातृव्यवान्स्पर्धमानश्चेदुत्तरेण पशुबन्धेन यजेत । पशुबन्धेन यक्ष्य इति संकल्प्य वैष्णव( ष्णवा )रुणीं वशां विष्णुवरुणाभ्यां त्वा जुष्टमुपाकरोमीति । अथैन्द्रमुक्षाणं वृषभमित्यर्थः । तमिन्द्राय त्वा जुष्टमुपाकरोमीति समानतन्त्रेण पुंलिङ्गाद्विवचनेनोहः । उक्तो द्विपशुबन्धो यागः विष्णुं देवं वरुणमिति पङ्क्तः । वैष्णववारुण्याम्—इन्द्रं नरो नेमधिता, युजे रथमिति पङ्क्तः ।

यः पापान्मोक्तुमिच्छेत्स उत्तरेण पशुबन्धेन यजेत । पशुबन्धेन यक्ष्ये पापक्षयार्थमिति । आग्नेयं कृष्णग्रीवम्—अग्नये त्वा जुष्टमुपाकरोमि । ऐन्द्रमृषभम्—इन्द्राय त्वा जुष्टमुपाकरोमि । अग्ने नयेत्याग्नेयस्य । इन्द्रं नर इत्यैन्द्रस्य ।

ज्योगपरुद्धः—चिरं राष्ट्रात्रि (न्नि)र्वासितः । पशुबन्धेन यक्ष्ये स्वराष्ट्रप्राप्त्यर्थमिति । द्यावापृथिवीदेवत्यां धेनुमालभेत । पर्यारिणी परिहासूः । अनि( ती )त्य प्रसवकालं याः प्रसूयन्ते ताः पर्यारिण्यः । एवंगुणविशिष्टां धेनुं द्यावापृथिवीभ्यां त्वा जुष्टमुपाकरोमीति । तत्संस्थाप्य तस्मिन्नहन्यागामिनि वा पर्वणि तस्या धेन्वा वत्समुपालभेत । वायवे त्वा जुष्टमुपाकरोमि इति । द्वौ पशुबन्धावपरुद्धस्यैव । मही नु द्यावापृथिवी इति पङ्क्तः ।

ज्योगपरुद्ध एवोत्तरेण पशुबन्धेन यजेत । पशुबन्धेन यक्ष्ये स्वराष्ट्रप्राप्त्यर्थम् । वायुदेवत्यं संवत्सर( वत्स )मालभेत । वायवे त्वा जुष्टमुपाकरोमि । पीवोऽन्नामिति षड्चः ।

पशुकाम उत्तरेण पशुबन्धेन यजेत । पशुबन्धेन यक्ष्ये पशुप्राप्त्यर्थमिति । इन्द्राय त्वा जुष्टमुपाकरोमीति । उन्नतं पशुम् । इन्द्रं नर इति षड्चः ।

अनन्तरं पशुना ( पशूनां ) सहस्र प्राप्या होरात्राणां सहस्रं स्थित्वा वैष्णवेन वामनेन यजेत । तस्य न षड्ढोता । पशुबन्धेन यक्ष्ये । विष्णवे त्वा जुष्टमुपाकरोमि । विष्णोर्नुकमिति षड्चः ।

प्रजाकाम उत्तरेण पशुबन्धेन यजेत । औपविदवत्यं वेहतं गर्भं यः परित्यजति । पशुबन्धेन यक्ष्ये प्रजामवाप्नवानीति । औषधीभ्यस्त्वा जुष्टमुपाकरोमि । या जाता ओषधय इति षड्चः ।

भूतिकाम उत्तरेण पशुबन्धेन यजेत । पशुबन्धेन यक्ष्ये भूतिमवाप्नवानीति । ऐन्द्रीꣳ सूतवशामालभेत । इन्द्राय त्वा जुष्टमुपाकरोमीति । इन्द्रं नर इति षड्चो याज्यानुवाक्याः ।

ऐन्द्राग्नं पुनरुत्सृष्टमालभेत । आ तृतीयात्पुरुषादित्यादिपूर्वमेवोक्तम् । पुनरुत्सृष्ट ऋषभार्थं गोषु युक्तः ( गालितवृषण ऋषभ उत्सृष्टः । स एव जीर्णो लाङ्गलवहनादेर्मुक्तः पुनरुत्सृष्टः । ) पुनरुत्सृष्टश्छाग इति भरद्वाजः । शुचिं नु स्तोममिति षड्चः ।

अभिचरन्परमरणकाम्युत्तरेण पशुबन्धेन यजेत । पशुबन्धेन यक्ष्ये परमरणार्थमिति फलनिर्देशः । यूपच्छेदनं कृत्वा स्म्याकारमिवाऽऽतक्ष्य कश्चि( न्नस्मि )श्वपालादयो नेति केचित् । अत्रवाऽन्यागारिको वाऽन्येन का( मं )र्यम् । यजमानेन सह सर्वेषा लोहितोष्णीषाद ।ऽपत्न्या इत्युपदेशः । लोहितोष्णीषा लोहितोत्तरीया ऋ ।।मना निवीता भवन्ति । बर्हिराहरणकाले शरमयं बर्हिर्भवति । वैभीतक इध्मो न पालाशः । क ष्म-र्यादयः परि ।यः । बृहस्पतये त्वा जुष्टमुपाकरोमि । तूपरो व्याख्यातः । बृहस्पत इति षड्चः ।

ग्रामकाम उत्तरेण पशुबन्धेन यजेत । पशुबन्धेन यक्ष्ये ग्राममवाप्नवानीति । बृहस्पतये त्वा जुष्टमुपाकरोमीति । शितिपृष्ठो व्याख्यातः ।

यः कामयेत पृष्ठं समानानाꣳ स्यामिति । समानानामुच्छ्रयणार्थं (समानानां मध्ये पृष्ठवद्युपरिवर्ती स्या )मित्येवंकामी एतेनैव यजेत । पशुबन्धेन यक्ष्ये समानानामुच्छ्रयणार्थमिति । बृहस्पतये त्वा जुष्टमुपाकरोमीति । एवं पूर्वपक्षः । एक एवाधिकार इति सिद्धान्तः ।

एतस्मिन्काले समानानामुच्छ्रितः स्यामिति संकल्पः । बृहस्पतये त्वा जुष्टमुपाकरोमि । आ वेधसामिति षड्चः ।

अन्नकाम उत्तरेण पशुबन्धेन यजेत । पशुबन्धेन यक्ष्ये । अन्नवान्भूयासमिति संकल्पः । श्यामः कृष्णवर्णः । तं पूष्णे त्वा जुष्टमुपाकरोमि । न वेक्षणं पशोः । यास्ते पूषन्ना वो अन्त इति षड्चः ।

अन्नकाम उत्तरेण पशुबन्धेन यजेत । पूर्ववत्संकल्पः । मरुद्भ्यस्त्वा जुष्टमुपाकरोमि, इति । पृश्निः । शुची वो हव्या मरुत इति षड्चः ।

इन्द्रियकामः शुक्लवृद्धिकामः । पशुबन्धेन यक्ष्ये । इन्द्रियवान् भूयासमिति । अरुणं रक्तवर्णम् । इन्द्राय त्वा जुष्टमुपाकरोमि । अनु ते दायीति षड्चः ।

सनिकामो धनकामः । यस्य भिक्षुकस्य सनिकामित्थं स उत्तरेण पशुबन्धेन यजेत । सनिमान्भूयासमिति संकल्पः । उपध्वस्तो व्याख्यातो राजसूये । सावित्रे त्वा जुष्टमुपाकरोमीति । आ देवो यात्विति षड्चः ।

अन्नकाम उत्तरेण पशुबन्धेन यजेत । पशुबन्धेन यक्ष्ये, अन्नमवाप्नवानीति । विश्वेभ्यो देवेभ्यस्त्वा जुष्टमुपाकरोमीति । बहुरूपं नानावर्णम् । आ नो विश्वे अस्क्रा गमन्त्विति षड्चः ।

एतेनैव पशुबन्धेन ग्रामकामो यजेत । पशुबन्धेन यक्ष्ये । ग्राममवाप्नवानीति । शेषं पूर्ववत् ।

यस्यानाज्ञातमिव ज्योगामयेत् । अनाज्ञातरोगविशेषश्चिरकालवृत्तो रोग इति ज्ञायते न स्वभुक इति, स उत्तरेण यजेत । पशुबन्धेन यक्ष्ये । अविज्ञातरोगविमुक्त्यर्थम् । तूपरम् । प्रजापतये त्वा जुष्टमुपाकरोमीति । तूपरो व्याख्यातः । प्रजापते न त्वदेतानिति षड्चः ।

ब्रह्मवर्चसकाम उत्तरेण पशुबन्धेन यक्ष्ये। ब्रह्मवर्चसमवाप्नवानीति । बृहस्पतये त्वा जुष्टमुपाकरोमीति । शितिपृष्ठां श्वेतपृष्ठां वशाम् । बृहस्पत इति षड्चो याज्यानुवाक्याः।

वृष्टिकाम उत्तरेण यजेत । पशुबन्धेन यक्ष्ये । वृष्ट्यर्थमिति संकल्पः । शुक्लकृष्णां द्विवर्णामित्यर्थः । मित्रावरुणाभ्यां त्वा जुष्टमुपाकरोमीति । आ नो मित्रावरुणा हव्यदातिमिति षड्चः ।

प्रजाकामोऽप्येतेनैव यजेत । पशुबन्धेन यक्ष्ये प्रजावान्भूयासमिति । शेषं पूर्ववत् ।

अन्नकाम उत्तरेण पशुबन्धेन यजेत । पशुबन्धेन यक्ष्ये । अन्नमवाप्नवानीति । वैश्व-

देवीं बहुरूपामालभेत। शुक्लकृष्णपीताम्। विश्वेभ्यो देवेभ्यस्त्वा जुष्टमुपाकरोमि। आ नो विश्वे अस्क्रा गमन्त्विति पड्चः।

ग्रामकाम एतेनैव यजेत। पशुबन्धेन यक्ष्ये। ग्राममवाप्नवानीति। शेषं पूर्ववत्।

ब्रह्मवर्चसकाम उत्तरेण यजेत। पशुबन्धेन यक्ष्ये। ब्रह्मवर्चसमवाप्नवानीति। बार्हस्पत्यमुक्षवशामालभेत। प्रजननासमर्थ उक्षा, इत्यर्थः। तं बृहस्पतये त्वा जुष्टमुपाकरोमीति। बृहस्पतय उक्षवशस्य वपाया मेदस इति निगमाः। बृहस्पते परिदीया रथेन इति पड्चः।

अभिचरन्नुत्तरेण पशुबन्धेन यजेत। पशुबन्धेन यक्ष्ये परमरणार्थम्। रुद्राय त्वा जुष्टमुपाकरोमीति। रोहिणीं वशाम्। स्फ्यो यूप इत्याद्युक्तं लोहितोष्णीषादि च। पारि णो रुद्रस्येति पड्चः।

बार्हस्पत्यां शितिपृष्ठामित्यादि। उत्तरेण ब्रह्मवर्चसकामो यजेत। पशुबन्धेन यक्ष्ये ब्रह्मवर्चसमवाप्नवानीति। बार्हस्पत्यां शितिपृष्ठामालभेतेत्यादि रोहिण्यन्ता वशा गावः।

उत्तरेण पशुबन्धेन ब्रह्मवर्चसकामो यजेत। यूपकाले प्रकृतिवद्यूपो भवति। सौरीं सूर्यदेवत्यां वशां सूर्याय त्वा जुष्टमुपाकरोमि। अत्रापि स्फ्यो यूप इति भाष्यकृत्। ब्रह्मणस्पत इति पड्चः। सूर्यो देवीमिति पड्चः।

-उत्तरेण पशुबन्धेनाभिचरन्यजेत। पशुबन्धेन यक्ष्ये। परमरणार्थम्। समारोप्य मथित्वा निधाय विद्युत्। अयेष्ट्या यक्ष्य इत्यादि वारुणं दशकपालं निर्वपेत्। अव ते हेड, उदुत्तममिति याज्यानुवाक्याः। ब्राह्मणतर्पणान्ता। तत्र वरुणाय कपालोपधानकाले चतुर्थाष्टमयोरावृत्तिः। एवमिष्टिं समाप्य परित्यज्याग्नी। प्रणीय पड्ढोतादि, येन यज्ञेनेत्याग्नेयेन सह ब्रह्मणस्पतये त्वा जुष्टमुपाकरोमीति। तूपरो भवति। अत्रापि स्फ्यो यूप इत्यादि गतम्। ब्रह्मणस्पत इति पड्चः।

उत्तरेण पशुबन्धेन यज्ञकामो यजेत। पशुबन्धेन यक्ष्ये यज्ञप्राप्त्यर्थमिति संकल्पः। यज्ञशब्देन हविर्यज्ञः सोमसंस्थाः पाकयज्ञो नित्ययज्ञ उच्यते। विष्णवे त्वा जुष्टमुपाकरोमि। वामनो व्याख्यातः। विष्णोर्नु कमिति पड्चो याज्यानुवाक्याः।

उत्तरेण पशुकामो यजेत। पशुबन्धेन यक्ष्ये। पशुमान्भूयासमिति संकल्पः। मन्थवं (वडवं)त्वष्ट्रे त्वा जुष्टमुपाकरोमि। त्वष्टे मन्थवस्य(वडवस्य) मन्द्रस्य(वपाया) मेदसोऽनुब्रूहीति। एवं निगमाः। त्वष्टा दधच्छुष्मतुरीपमिति पड्चो याज्यानुवाक्याः॥ वडवोऽश्वः स्याद्यं पुमांसं सन्तं वडवामिवाश्वा आरोहन्ति। नहि अविद्यमाने स्त्रीगुणे (यथा मनु-

च्येषु यत्र क्वापि स्तनवृद्ध्यां सत्यां श्मश्रुनिर्गमनात्पूर्वे योषित्त्वभ्रमो भवति तद्वदश्वेष्वपि केनाप्यवयवसंनिवेशाविशेषेण यस्मिन्पुंस्येवाश्वे योषित्त्वबुद्धिरितरेषामश्वाना भवति। अतएव ते तेऽश्वास्तदा तदा तमारोहन्ति। सोऽयमीदृशोऽश्वो वडवः। स च त्वष्टुः प्रियः। तै. सं. मा. का. २।१।८) संग्रामे संयत्ते युद्धे प्रसारिते समयकामः परस्परं प्रसादकामः स उत्तरेण पशुबन्धेन यजेत। पशुबन्धेन यक्ष्ये, परस्परशुद्धय (संध्य)र्थं युद्धे। श्वेतमजं मित्राय त्वा जुष्टमुपाकरोमि। मित्रो जनानिति पङ्‌क्तः।

उत्तरेण वृष्टिकामो यजेत। पशुबन्धेन यक्ष्ये वृष्ट्यर्थमिति। कृष्णवर्णमवाशृङ्गं प्रजापतये त्वा जुष्टमुपाकरोमीति। प्रजापते न त्वदेतानिति पङ्‌क्तः।

उत्तरेणान्नाद्यकामः पशुबन्धेन यक्ष्ये। अन्नाद्यमवाप्नवानीति। वरुणाय त्वा जुष्ट-मुपाकरोमि। यत्किंचेदमिति पङ्‌क्तः।

उत्तरेणान्नाद्यकामोऽपा चौषधीना च संधो (धाविति) कालोपदेशो वा देशोपदेशो वा। प्रावृषि शरदि प्रतिपत्तिथौ वा पर्वणि यजेत कालोपदेशपक्षे। देशोपदेशपक्षे यस्मिन्देश आप ओषधयश्च विद्यन्त एकतो देश आप एकतो देश ओषधयस्तयोर्मध्ये देशे यष्टव्य-मित्यर्थः पर्वणि च पशुबन्धेन यक्ष्ये। अन्नाद्यावाप्त्यर्थम्। यूपच्छेदनकाले विशाखो यूपो भवति। रशनादेशस्योर्ध्वं विशालः स्यात्तदाऽपि रशनाद्वित्वम् यद्वोपर्युभे शाखे अष्टाश्री सचषाले स्यातामुभयत्र द्वे रशने। एकादशिनी प्रकृतित्वात्। उपशयमपि के-चित्। एकस्मिन्दक्षिणे विशाखे श्वेतमजं मित्राय त्वा जुष्टमुपाकरोमि। उत्तरेण वरुणाय त्वा जुष्टं० कृष्णम्। आम्नानिर्देशः। द्विवचनेनोहः। मित्रो जनानिति पङ्‌क्तो मित्रस्य। यत्किंचेदं वरुणमिति पङ्‌क्तो वरुणस्य।

उत्तरेण ज्योगामयावी यजेत। पशुबन्धेन यक्ष्ये चिररोगमुक्त्यर्थम् मित्राय त्वा जुष्टमुपाकरोमीति। श्वेतं वरुणाय त्वा जुष्टमुपाकरोमि। कृष्णं त्वपा चौषधीनां च संधौ। शिष्टं सर्वं पूर्ववत्। याज्यानुवाक्याश्च मित्रो जनानिति पङ्‌क्तः। यत्किंचेद-मिति पङ्‌क्तः।

वृष्टिकाम उत्तरेण पशबन्धेन यजेत। पशुबन्धेन यक्ष्ये वृष्ट्यर्थमिति। यमीं वशां सहजातानामन्यतमाम्। अश्विभ्यां त्वा जुष्टमुपाकरोमि। आ यौं रथो रोदसी इति पङ्‌क्तः।

उत्तरेण पशुबन्धेन (दुर्ब्राह्मणः सोमपानार्थी) तेन यक्ष्ये। 'यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम्। स वै दुर्ब्राह्मणो नाम यश्चैव वृषलीपतिः'॥ इति बौधायनीयवचनं

नियतौपासनिकस्य न दौर्ब्राह्मण्यमिति । एवं भूतो दर्वीखणो यजेत । पूर्वोक्ता एव आ वाँ रथो रोदसी इति पङ्कृचः ।

यमजघ्नीवाश्वं पुरुषं मृषा जघ्निवानिति शंसन्ति जनाः, स उत्तरेण पशुबन्धेन यजेत । पशुबन्धेन यक्ष्ये अघ्निवानित्यभिशंसनपापक्षयार्थम् । गोमृगो गौश्चासौ मृगः । वायवे त्वा जुष्टमुपाकरोमीति । वायवे गोर्वपाया मेदसः शब्देन प्रयोगः । पीवोऽन्ना- मिति पङ्कृचः ।

यस्याऽऽश्विने शस्यमाने सूर्यो नाऽऽविर्भवति सौर्यं बहुरूपमालभेत । पूर्वमेवोक्ताः सूर्यो देवीमिति पङ्कृचो याज्यानुवाक्याः । य ऊर्ध्वमाश्विनात्पशव- स्तेषां सूक्तक्रमेण विधिः । सूक्ते याज्यानुवाक्याकाल आश्विनपशोर्याज्यानुवाक्ये । याज्यानुवाक्यानामूर्ध्वं सूक्तक्रमेणैव देवता उन्नेयाः । आश्विनयाज्यानुवाक्याना- मनन्तरमग्नीषोमीया ऋचः पठ्यन्ते, प्रकृताग्नीषोमीयार्थम् । अथवाऽजां वशामग्नीषो- मीयामालभेतेत्यत्र निवेशः । सा तूपरिष्टाद्वक्ष्यते ।

अथाग्नये वेहतमित्यादि । वेहद्या परित्यजति गर्भं न धारयति तामालभेत । पशु- बन्धेन यक्ष्ये स्वर्गं लोकमवाप्नवानीति । अग्नाय त्वा जुष्टमुपाकरोमीति । अहमस्मीति पङ्कृचो याज्यानुवाक्याः ।

वाचे वेहतम् । पूर्ववत्संकल्पादि । वाचे त्वा जष्टमपाकरोमीति । देवीं वाचमिति पङ्कृचो याज्यानुवाक्याः ।

श्रद्धायै वेहतम् । पूर्ववत्संकल्पादि । श्रद्धायै त्वा जुष्टमुपाकरोमि । श्रद्धयाऽग्निः समिध्यत इति पङ्कृचो याज्यानुवाक्याः ।

ब्रह्मण ऋषभम् । पूर्ववत्संकल्पादि । ब्रह्मणे त्वा जुष्टमिति । ब्रह्मजज्ञानमिति पङ्कृचः । ब्रह्मण उत्सृष्टस्य वपाया मेदसः । नारिष्ठान्हुत्वा आ गावो अग्मन्नित्युपहोमः । अष्टर्चं ( प्रत्यृचम् ) ।

मृत्यवे वेहतम् । पूर्ववत्संकल्पादि । मृत्यवे त्वा जुष्टमुपाकरोमीति । तत्र नारिष्ठा- न्हुत्वा मर्तो सन्तित्युपहोमाः प्रत्यृचमनुवाकेन । हरिं हरन्तमान्विति पङ्कृचो याज्या- नुवाक्याः ।

सूर्याचन्द्रमोभ्यां यमौ सहोपितगर्भौ तयोः श्वेत एकः कृष्ण एकः । एकयूपो नोप- शयः । तस्य द्वे रशने । सूर्याचन्द्रमोभ्यां त्वां जुष्टमुपाकरोमि । श्वेतमेकं कृष्णमेकमे-

मैको द्विदेवत्य. । सहप्रचार उभयो । सूर्याचन्द्रमोभ्या छागाभ्या वपाभ्या मदसः । ता सूर्या चन्द्रमसेति पङ्‌चो याज्यानुवाक्या. ।

अद्भ्यो वेहतम् । पूर्ववत्संकल्पादि । अद्भ्यस्त्वा जुष्टमुपाकरोमि । तत्र सलिलमुपजुहोति । नाग्निष्ठान्हुत्वा जलेन नासदासीदिति सूक्तमुपजुहुयात् । हिरण्यवर्णा इति पङ्‌चो याज्यानुवाक्याः ।

भगाय वाशितामिति पुंस्कं मरुत्वतीयं ( पुंस्कामामरुत्वतीं ताम् । ) पूर्ववत्संकल्पादि । भगाय त्वा जुष्टमुपाकरोमीति । प्रातरग्निमिति पङ्‌चो याज्यानुवाक्याः । अग्नाय वेहतमित्यादिभगाय वाशितामित्यन्ताः षट्स्वर्गफलाः । तदुक्तं स स्वर्गः स्यादिति । ताः सूक्तक्रमेणोन्नेयाः । प्राशृङ्गोऽवाशृङ्ग उस्रोक्षा वशा वेहद्धेनुर्वत्स ऋषभोऽनड्वान्पुनरुत्सृष्टो गोमृग इत्येतैः शब्दैश्चोद्यमाना गोपशव इति विज्ञायन्ते । तदुक्तं भगवता भरद्वाजेन—ऋषभे गोषु जीर्णे यून कर्णमाजपेत्तासु गोषु ऋषभे जीर्णे पूर्वोत्सृष्टे सति संवन्त्ये(त्स्वस्य) वाऽन्यस्यर्षभस्योत्सृष्टव्यस्य यूनः कर्णस्योपरिष्टाज्जपेत् । पिशङ्गरूपस्तन्नस्तुरीपमिति द्वे । अनन्तरमेतासु गोष्वविसृजति । एत युवानमिति ऋचा । अथ पूर्वोत्सृष्टेन जीर्णेन यजेत प्रजापतिदेवत्येनेन्द्रदेवत्येन त्वष्टृदेवत्येन वा । पशुबन्धेन यक्ष्य इति संकल्पो नैमित्तिकः । केचित्स्वर्गार्थमिति । केचिन्नित्यमिति । प्रत्यविसर्गो न पशुबन्धार्थ. । अनाहिताग्नेरप्येवमेवाविसर्गः । पश्वालम्भस्त्वाहिताग्नेरेव । संकल्पादि । जीर्णमृषभमुपाकरोति । उपो देवानित्यादिप्राकृतास्त्रीनुक्त्वा नमो महिम्न इत्यृचमुक्त्वा प्रजापतये त्वा जुष्टमुपाकरोमीत्यादि । उपाकृत्य पञ्चहोमादि । देवनामेष उपनाह इत्युपहोमः । जातवेद इत्यस्य प्रत्याम्नायः । पिता वत्सानामिति हविषः प्रतिनिगद्य होममन्त्रा अप्राकृताः । त्वा गाव इति स्विष्टकृत. । शेषमुक्तम् । प्रजापते न त्वदेतानिति पङ्‌चः ।

आग्नेयमष्टाकपालं निरुप्याजा वशामालभेत । सा वा एषा त्रयाणामेवावरुद्धा, इति । सा वशा त्रयाणामेव नान्येषाम् । संवत्सरसद. सवत्सरसत्रयाजिनो गवामयनादिनेष्ट्वा (एवतः)। सहस्रयाजिनः सहस्रदक्षिणक्रयाजिन. । गृहमेधिनो गृहपतेरेव संवत्सरसत्रयाजिनः । ऋतूनामेकादशारत्नि( शरात्रि )प्रभृतिभिरिष्टवतः । एवं विधाना पुरुषाणा भूतिकामादियुक्तानां त्रयाणामेव । अजावशाकर्म, तस्यायं प्रयोगः—

पशुबन्धेन यक्ष्ये भूतिमवाप्नवानीति संकल्प्य समारोप्य मथित्वाऽऽयतने निधाय विघुर्दसीत्यादि । पुनरिष्ट्या यक्ष्य इत्यादि । आग्नेयेनाष्टाकपालेन यजेत । अग्निर्मूर्धा, भुव इति याज्यानुवाक्ये इति ॥ १८ ॥

अजां वशामालभमान आ वायो भूषेति वायव्या योपाकरोति ॥ १९ ॥

अथान्यमाहवनीयं प्रणीय षड्ढोता पश्विष्ट्यादि । उपाकरणकाले आ वायो भूष शुचिपा इत्युपाकरोति । प्राकृताना प्रत्याम्नायः । वायवे त्वा जुष्टमुपाकरोमीति ॥ १९॥

आकूत्यै त्वा कामाय त्वेति पर्यग्नौ क्रियमाणेऽपाव्यानि जुहोति ॥ २० ॥

उपाकृत्य पञ्चहोमादि । पर्यग्निकरणकाले आकूत्यै त्वा कामाय त्वेति अपाव्यप्रत्याम्नाता प्राकृतानिवृत्तिः । समृधेत्येवमन्तं पञ्चस्वनुषज्यते । एवमनुषङ्गः । केचित्तु—आकूत्यै त्वा कामाय त्वा समृधे त्वा किक्किटा ते मन इत्येवमादिस्वाहाकारान्ता मन्त्राः । किक्किटाकारमिति मन्त्रनाम ॥ २० ॥

त्वं तुरीया वशिनी वशाऽसीत्युदीचीं नीयमानामनुमन्त्रयते ॥ २१ ॥

यजमानस्य धामा इत्यन्तः । अन्तरा चात्वालोत्करावुदीचीं नीयमानामनुमन्त्रयते ॥ २१ ॥

अजाऽसि रयिष्ठेति निहन्यमानाम् ॥ २२ ॥

अनुमन्त्रयत इत्यनुवर्तते । बृहद्वा इत्यन्तः । अध्वर्युर्नानाप्राण इति जपित्वाऽजाऽसि रयिष्ठेति मार्यमाणामनुमन्त्रयते ॥ २२ ॥

तन्तुं तन्वन्निति वपां जुहोति ॥ २३ ॥

कृतानित्यन्तः । अयं वपाहोममन्त्रो जातवेद इत्यस्य प्रत्याम्नायः ॥ २३ ॥

अनुल्बणं वयतेति हविः ॥ २४ ॥

जनमित्यन्तः । जुहोतीत्यनुवर्तते ॥ ॥ २४ ॥

मनसो हविरसीति हविःशेषान्प्राश्नन्ति ॥ २५ ॥

भूयास्मेत्यन्तः । हविःशेषान्भक्षयन्ति । अत्रैवार्त्विज इति । अत्र पश्वालम्भात्पूर्वमग्निः स्यात् । पशूपाकरणात्पूर्वमित्यर्थः । तदेवं विरम्यान्यत्रैवं पर्वणि यजेत । संज्ञाया चेत्प्राक्प्रधानादग्निः स्यात्सर्वामेवाप्सु क्षिपेत् । यजमानो वा अहन्यहनि प्राश्नीयाद्यजमान एव नान्यः । एतदन्तं कर्म समाप्यते । अनधिकारादसंभोपने मे दोषः । न प्रायश्चित्तम् । इतरथा सर्वं प्रकृतिवत् । पीवोऽन्नामिति षड्ढ्व । एतस्या वशाया देव-

ताविकल्पो विशेषकामसंयोगेन । भूतिकामो वायुदेवत्यां कुर्वाणस्तस्याः समृद्धिमिच्छन् ।

केचित्प्रतिष्ठाकामो वा द्यावापृथिव्यामालभेत । मही नु द्यावापृथिवीति षड्टचो याज्यानुवाक्याः ।

अग्नीषोमीयामालभेत । य इच्छेदन्नवानन्नवेयमिति । अग्नीषोमीयाः षड्टचो याज्यानुवाक्याः ।

सरस्वतीदेवत्यामालभेत । यो वाचं वदितुं समर्थः सन्न तां वदेत् । देवीं वाचमजनयन्त देवा इति षड्टचो याज्यानुवाक्याः ।

प्रजापतिदेवत्यामालभेत । योऽनभिजितमभिजेतुमिच्छेत् । प्रजापते न त्वदेतानिति षड्टचो याज्यानुवाक्याः ।

सर्वेषु संकल्पेषु संकल्प्याऽऽग्नेयमष्टाकपालं निरुप्य ब्राह्मणतर्पणान्तं कृत्वाऽग्निं परित्यज्य पुनः प्रणीय षड्ढोतारमित्यादि । येन यज्ञेनेत्सेदित्याग्नेयेन सह समानतन्त्रेण । केचित्संकल्प्य येन यज्ञेनेत्याग्नेयेनेष्ट्वाऽजां वशामालभेतेति । षड्ढोतारमित्यादि । अभ्यातानादि ॥ २५ ॥

एतस्यां वशायां मुख्याधिकारिणो दर्शयति—

सा वा एषा त्रयाणामेवावरुद्धेति विज्ञायते ॥ २६ ॥

सेयं वशा त्रयाणामेवाधिकारिणामधीता । कस्य कस्येति तदुच्यते—गवामयनादिरूपं संवत्सरसत्रं योऽनुतिष्ठति सोऽयं संवत्सरसत्रसत्तस्य । सहस्रसंख्याकदक्षिणायुक्तेन यज्ञेन यो यजते सोऽयं सहस्रयाजी तस्य । संवत्सरसदर्वाचीनेष्वपि सत्रेषु यो गृहपतित्वेन दीक्षितो भवति सोऽयं गृहमेधी तस्य । त एव त्रयोऽधिकारिण एतया वशया यजेरंस्तेषामेवैषा वशा युक्तेति सूत्रार्थो ब्राह्मणे विज्ञायते ॥ २६ ॥

एतस्या वशाया आलम्भे वर्जनीयं दिनं दर्शयति—

तस्यै वा एतस्या एकमेवादेवयजनं यदालब्धायामभ्रो भवति ॥ २७ ॥

अस्यां वशायामालब्धायां सत्यां गगने मेघावरणेन यद्दुर्दिनं भवति तदेवैकं दिनमेतस्या वशाया देवयागानर्हम् । तस्माद्यदा मेघो न भविष्यतीति निश्चयो मनसि जायते तदानीमेवैतामालभेत ॥ २७ ॥

तथाकृतेऽपि प्रमादादश्वदर्शने सति नैमित्तिकं प्रयोगविशेषमाह—

यदालब्धायामश्वः स्यादप्सु वा प्रवेश-
येत्सर्वां वा प्राश्नीयात् ॥ २८ ॥

तत्र जलप्रवेशः पूर्वः पक्षः। सर्वस्याः प्राशनं राद्धान्तः । तदुभयं स्पष्टीकरोति ब्राह्मणम्—'यदप्सु प्रवेशयेद्यज्ञवेशसं कुर्यात्सर्वामेव प्राश्नीयादिन्द्रियमेवाऽऽत्मन्धत्ते (तै० सं० ३–४–४ ) इति । यज्ञवेशसं यज्ञविघातम् । यजमानः सर्वप्राशनेनेन्द्रियमात्मनि धारयति। एतदेवाभिप्रेत्याऽऽपस्तम्बेनोक्तम्—सर्वां वा यजमान एवान्वहं प्राश्नीयादिति ॥ २८ ॥

जयाभ्यातानान्राष्ट्रभृत इति ब्राह्मणव्याख्याताः ॥ २९ ॥

जयन्त्येभिरिति जयाः । अभ्यातन्वत एभिरित्यभ्यातानत्वम् । जयन्त्येभिरिति जयत्वम् । राष्ट्रं भ्रियते स्वी क्रियत एभिरिति राष्ट्रभृत्त्वम् । समुचितैरेतैस्त्रिभिर्होमैर्देवा 'विजयिनोऽभवन् । 'असुरास्तु पराभूताः । यज्ञैरजयन्' ( तै० सं० ३–४–६ ) इति 'ब्राह्मणम्'।

क्रत्वर्थपुरुषार्थविचारप्रसङ्गात्पूर्वाधिकरणेऽनारभ्यवादः प्रस्तुतः । तत्प्रस्तावादेवा-नारभ्याधीतानां जयादीनां वाक्येनैव कर्माङ्गत्वे सिद्धे तद्विशेषश्चिन्त्यते—' येन कर्मणेर्त्से-त्तत्र जयाञ्जुहुयात्' ( तै० सं० ३–४–६ ) इति । किं सर्वेषां लौकिकवैदिककर्मणा-मङ्गं जयादय उत वैदिकानामेव येषामाहवनीयोऽस्तीति विचारः—

तत्राविशेषतः सर्वकर्मार्थत्वं प्रतीयते ।
तस्मात्कृष्यादिनाऽपीर्त्सेत्तत्राग्नौ जुहुयाज्जयान् ॥

दर्शादि कृष्यादीनामाहवनीयो नास्ति जयादयश्चाऽऽहवनीये होतव्यास्तथाऽपि ने दृयमेव होमस्त्वाहवनीयप्रयोजना इति । तदर्थमेवाऽऽहवनीयं प्रणीय तेषु हूयमाना न लुप्यन्ति।

तस्मात्तत्राप्यवैगुण्यात्सर्वार्थाः स्युर्जयादयः ।
नैवं प्रधानवैदेश्याद्वैगुण्यं जायते यतः ॥

यद्यप्याहवनीयाभावकृतं नास्ति वैगुण्यं तथाऽपि प्रधानदेशात्स्वमङ्गानामवगतं तदुत्क्रा-न्तात्कृष्यादिषु क्रियमाणा विगुणा भवेयुः । क्षेत्रे कृषिराहवनीये च होम इति वैदेश्यं, वैदि-केषु त्वाऽऽहवनीयादिस्थेषु प्रधानमादेश्यं लभ्यत इत्यवैगुण्यात्तेष्वेव जयादयः ॥ २९ ॥

(तै. सं. ३-४-८) इत्यादि । ज्येष्ठबन्धुः सन्योऽपभूत. स्वयं ततो निकृष्टस्तत्पराभूत इति यावत् । तं स्थल उच्चप्रदेशेऽवसाय्योपवेश्य तस्मै तत्फलसिद्धये होतव्या राष्ट्रभृतः स्थलं च वर्ष्म शरीरमुभयविधेन वर्ष्मणैव यजमानं स्वसमानानां पुरुषाणां शरीरस्थानीयं करोति । असौ शरीरवत्प्रधानभूत इतरे हस्तादिवदुपसर्जनभूता यथा भवन्ति तथा करोतीत्यर्थः । शरावसंख्यां विधत्ते—चतुःशरावो भवति, इति । पाकसाधनद्रव्यं विधत्ते—क्षीरे भवति, इति । पच्यमानस्यौदनस्यापक्वत्वपरिहारार्थं दर्व्योद्धरणं विधत्ते—उद्धरतीति । पक्वस्य घृताप्लुतत्वं विधत्ते—सर्पिष्मान्भवतीति । हुतशेषस्य ऋषिसमानैरेवान्यैः प्राशनं विधत्ते—चत्वार आर्षेयाः प्राश्नन्ति, इति । अस्मिन्ब्रह्मास्मित्यभ्यातानेऽनुषङ्गः सर्वत्र । तत्र श्लोकः—

जयाश्चित्तं तथाऽग्निर्भूताभ्यातानाश्च राष्ट्रभृत् ।
ऋतापाणमानधुकेध्मस्तु बन्धुजीवः प्रकीर्तितः ॥ ३१ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां
प्रयोगचन्द्रिकाया द्वाविंशप्रश्ने प्रथमः पटलः ।

---

अथ द्वाविंशप्रश्ने द्वितीयः पटलः ।

---

काम्याभिरिष्टिभिरमावास्यां पौर्णमासीं वा
सन्स्थाप्य यजेत । ता ब्राह्मणव्याख्याताः ॥ १ ॥

एतत्सूत्रारम्भ उभयत्र प्रवृत्त्यर्थः । अथवा काम्यानामेव पर्वनियमः । मिश्रप्रकाराणां ( करणानां ) नक्षत्रेष्ट्यादीनां च ग्रहणम् । ता इति ब्राह्मणादनुसंधेया इति भावः । काम्यानां सामान्यनिर्णयानुसारेणानुष्ठानम् । विशेषस्तु मानवसूत्रे—इष्टीः कुर्यादमावास्यायां पौर्णमास्यां वाऽऽपूर्यमाणपक्षस्य पुण्यनक्षत्रे वाऽन्यत्र नवम्या इति । जातेष्टेः शैघ्यविशेषेण निमित्तानन्तरं संभवाच्चातुर्थिकन्यायेनोचितकालप्रतीक्षाया उचितत्वात्पितुर्मातुश्च दशरात्रविंशतिरात्रात्मकाशौचनिवृत्तौ सत्यां पर्वण्यनुष्ठानम् । गृहदाहेष्ट्यादीनां निमित्तानन्तरमनुष्ठाने पर्वाद्यनपेक्षा । तदसंभवे जातेष्टिवदस्येत्र तदपेक्षा । नित्यकर्तव्यानामारम्भणीयादीक्षणीयाप्रभृतीना प्रधानपरतन्त्रत्वात्तदविरोधेनैव पर्वापेक्षा, हविर्दोषमाग्निदेशादिनिमित्तककर्तव्यं इष्टयस्तु स्विष्टकृदनन्तरं समिष्टयजुषः प्राङ्निमित्तस्मरणे तत्तन्त्रमुपजीव्य निर्वापप्रभृति तदानीमेव कार्या । समिष्टयजुषोऽनन्तरं स्मरणे तत्प्रयोगसमाप्त्यनन्तरं पुनरन्वाधानादिविधिना कार्या इति ॥ १ ॥

चित्तं च स्वाहा चित्तिश्च स्वाहेति जयाञ्जुहोति ।
चित्ताय स्वाहा चित्तये स्वाहेति वा ॥ ३० ॥

तत्राऽऽदौ जयसंज्ञकांस्त्रयोदश मन्त्राञ्जुहोति ॥ ३० ॥

अग्निर्भूतानामधिपतिः स माऽवत्वित्यभ्यातानाननस्मिन्ब्रह्मन्नस्मिन्क्षत्र इत्यभ्यातानेष्वनुषजति । पितरः पितामहा इति प्राचीनावीती जुहोत्युपतिष्ठते वर्ताषाडृतधामेति राष्ट्रभृतः । पर्यायमनुद्रुत्य तस्मै स्वाहेति पूर्वामाहुतिं जुहोति । ताभ्यः स्वाहेत्युत्तराम् ॥ २ ॥ ३१ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे द्वाविंशप्रश्ने प्रथमः पटलः ।

अभ्यातानाः—अग्निर्भूतानाम् । राष्ट्रभृत ऋताषाडृतधामेति ता ब्राह्मणव्याख्याताः—स्पर्धमानेन संग्रामं जिगीषुणा क्षत्रियेण होतव्या जयार्थम् । जयत्येव तामिति (३–४–४) वाक्यशेषात् । येन कर्मणेर्त्सेद्येन कर्मणार्द्धिमिच्छेत्तस्मिन्कर्मणि होतव्या अभ्यातानाः । सर्वकर्मसु होतव्या इत्यर्थः । यो भ्रातृव्यवान्त्स्यात्सोऽभ्यातानाञ्जुहोति आहवनीये जयानपि राष्ट्रभृतः । राष्ट्रकामाय होतव्या (तै० सं० ३–४–८) इत्यादि । ग्रामकामस्याधिदेवने द्यूतक्रीडास्थान आहवनीयविकारे होतव्याः । रथमुख ओजस्कामस्य । यो राष्ट्रादपभूतस्तस्मा अपि होतव्याः । अपभूतोऽपगतः । अपभूतस्यैवं होमः । यावन्तोऽस्य रथा स्युस्तान्ब्रूयाद्युङ्ग्ध्वमिति स्वान्परिचारकान्प्रत्याह । रथयोगे कृते दक्षिणं चक्रं प्रवृह्य ( प्रबीय ) अपनीयाक्षमभिजुहुयात् । राष्ट्रभृत इति संग्रामे संयत्ते होतव्याः । क्षत्रियस्यैव मान्धुको बन्धुजीवकः । उज्ज्वलितबन्धुजीवेनेध्मेनाग्निमिद्ध्वा यस्योन्मादः स्यात्तदर्थमपि होतव्याः । न्यग्रोधादिभिरग्निमिद्ध्वाऽभिचरता प्रतिलोमं होतव्याः । स नो भुवनस्य पत इति हुत्वा चारुः कृपणकाशीति जुहुयात् । एवं विपरीतैर्द्वाविंशतिमाहुतीर्जुहोति । स्वकृत इरिणे जुहोति श्रुति । इरिणे प्रदरे देशे वा यद्वाचः क्रूरं खट्फट्जहि इत्येवमादि तेन स्वाहाकारस्थेनानेन जुहोति । क्षत्राय महि शर्म यच्छ तस्मै खट् ताभ्यः खडिति प्रतिलोमं ततोऽभिचारणीयं येन केनचित्प्रकारेण नाशयति । शत्रुं दृष्ट्वा प्यापारेण तृणेन लोष्टेन वा हन्यात्तेन हतो म्रियेत । यस्यान्नाद्यमादातुमिच्छेत्तस्य सभायामुत्तानं पतित्वा तृणानि गृह्णीयात् । स नो भुवनस्य पत इति षड्भिराद्यैः पर्यायैरिह देवदत्तस्य गार्ग्यायणस्यान्नाद्यं हरामीति वाऽनेन मन्त्रेण गृह्णीयात् । यो ज्येष्ठबन्धुरपभूतः स्यात्

एतयोश्च लक्षणमाज्यभागब्राह्मणे तु—' पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति जातानेव भ्रातृव्यान्प्रणुदते । उपरिष्टाल्लक्ष्मा याज्या जनिष्यमाणानेव प्रतिनुदते' इति समाम्नातम्। यस्या ऋचः पूर्वार्धे देवतालिङ्गं सा परोनुवाक्या । उत्तरार्धे तल्लिङ्गं चेद्याज्या सा भवति । एतस्य लक्षणस्य प्रदर्शनार्थत्वात्कचिदेतद्व्यभिचरति । तत्र सर्वत्राऽऽम्नानक्रमो नियामकः । पुरस्तादाम्नाताः पुरोनुवाक्याः । पश्चादाम्नाता याज्याः । तस्मादिष्टिक्रमं मन्त्रक्रमं च परीक्ष्यैकैकस्यामिष्टावेकैकं मन्त्रयुग्मं प्रयोज्यम् । ननु यत्र युग्मादधिकस्त्युग्मसमानलिङ्गको मन्त्र आम्नायते तत्र क्रमानुसारेणोत्तरेष्टौ मन्त्रयोजने लिङ्गं बाध्येत, पूर्वेष्टौ तद्योजने क्रमो बाध्येतेति चेन्न । बाध्यतां नाम क्रमोऽस्य दुर्बलत्वात् । यदि न पूर्वेष्टौ तृतीयमन्त्रस्य पृथक्प्रयोजनता तर्हि तत्र याज्या विकल्पताम् । यत्र तु युग्मान्तरं पूर्वयुग्मेण समानलिङ्गं तत्र याज्यापुरोनुवाक्यायुग्मस्यैव विकल्पोऽस्तु । यद्वदिष्ट्यैक्ये मन्त्रयुग्माधिक्ये युग्मविकल्पस्तद्वन्मन्त्रयुग्मस्यैकत्वे सति तदीयदेवताविषयाणामिष्टीनामाधिक्ये ता इष्टयोऽपि विकल्पन्ताम् । तद्यथा—इहैव तावत्ताद्दृशमुपलभ्यते । उभा वामिन्द्राग्नी ( तै० सं० १–३–१४ ) इत्यादय इन्द्राग्निलिङ्गकाश्चत्वारो मन्त्राः । ऐन्द्राग्नेष्टयस्तु फलभेदेन षडाम्नाताः । तत्र प्रथममन्त्रयुग्मविषये तिस्र आद्या इष्टयो विकल्प्यन्ते ॥ ५ ॥

ऐन्द्राग्नमेकादशकपालं निर्वपेदिति तासामुभा
वामिन्द्राग्नी इति चतस्रो याज्यानुवाक्या द्वे पूर्वा-
सां तिसृणां द्वे उत्तरासामेवमत ऊर्ध्वं कर्मातिरेके
समशः प्रतिविभज्य पूर्वा पूर्वासामुत्तरोत्तरासां
मन्त्रातिरेकेऽत्रशिष्टा विकल्पार्था उपहोमा वा॥६॥

तासां कर्मणामैन्द्राग्न्यः षडिष्टयः । इष्ट्या यक्ष्ये प्रजामवाप्नवानीति संकल्पः । सद्यस्कालाः । अग्नीनन्वाधाय व्रतप्रवेशः । अमावास्यातन्त्रं वेदं कृत्वा वेदिं सद्यः सामिधेन्यः । येन यक्ष्येनेत्सैदित्याग्नेयस्य च समानतन्त्रत्वादाग्नेयस्याष्ट कपालान्यैन्द्राग्नस्यैकादश । केचिद्द्वितन्त्रेणैवं कपालानि प्रयुनक्ति । निर्वापकाल आग्नेयं निरुप्यैन्द्राग्नं निर्वपति । एवं प्रचारः । उभा वामिन्द्राग्नी इत्यादि याज्यापुरोनुवाक्या इत्युक्तम् । इदं याजुषं हौत्रम् । अगन्म सुवरित्यत्रोहः—अगन्म प्रजां प्रजामगन्मेत्यादि । एवं सर्वासु काम्येष्टिष्वाग्नेयेन समानतन्त्रम् । सिद्धमिष्टिः संतिष्ठते । एतया स्पर्धमानो यजेत । इष्ट्या यक्ष्ये भ्रातृव्यजयार्थम् । शेषं पूर्ववत् । संग्राममुपप्रयास्यन्नेतयेष्ट्या यजेत । इष्ट्या यक्ष्ये युद्धजयार्थमिति संकल्प्य(ल्पः) । शेषं पूर्ववत् ।

सद्यस्काला उपांशुतन्त्रा यथाप्रकृति चैः-
का दक्षिणाः सांनाय्यवत्यस्तु द्व्यहकालाः ॥२॥

उपांशु काम्या इष्टयः क्रियन्त इति तत्र यावत्प्रधानमुपांशु (आप० परि० २–२०) इत्यापस्तम्बः । आथर्वणा वै काम्यास्ता उपांशु कर्तव्याः, इति । या विकृतय उपांशु क्रियन्ते, तत्र यावत्प्रधानं प्रधानदेवतावाचकं पदमुपांशु प्रयोक्तव्यं याज्यानुवाक्ययोश्च ॥ २ ॥

अथ सामिधेनीं प्रकृत्याऽऽह—

समिध्यमानवतीं समिद्धवतीं चान्तरेण पृथुपा-
जवत्यौ धाय्ये ॥ ३ ॥

तासां सर्वासामिष्टीनां च सप्तदश सामिधेन्यः सार्वत्रिकाः । ननु पृथुपाजवत्यौ धाय्ये भवतः, अनुपदावाज्यभागावित्यादयोऽनारभ्यवादाः प्रकृतौ निविशेरन्निति प्राप्ते—पञ्चदशसंख्याक्षरसंख्यादिविरोधाद्वार्त्रघ्नीवृधन्वत्यवरोधाच्च विकृतावुत्कृष्येरन् ॥ ३ ॥

अनुपदावाज्यभागौ यत्कामेष्टिस्तत्प्रवादौ स्यातां
तदर्थत्वात्तद्देवतौ प्राकृतौ वाऽनादेशे प्रकृतिः प्रत्ये-
तव्या त्वां चित्रश्रवस्तमेत्यनुष्टुभौ संयाज्ये ॥४॥

यथादिष्टं वा मानवी ऋचावित्याद्यनुपदावाज्यभागौ । अनुपदाविति यत्कामाय यत्फलेष्टिः क्रियते, तं कामं यौ प्रवदतस्तौ स्याताम् । प्रजाफलायामिष्टौ यस्त्वा हृदा, सोमो धेनुं, इति । पशुफलायामायुःफलायां जीवन्तावेवमन्यत्रापि द्रष्टव्याः । अथवा तद्देवतौ सौर्ये कर्मणि सूर्यदेवत्यौ । अथवा प्राकृतौ । त्वां चित्र इत्येतौ विकल्पेनान्यौ, वाऽनुष्टुभौ संयाज्ये । ननु—अनुपदावाज्यभागाविति विकृतौ निविशमानमपि काम्येष्टिष्वेव तदीयफलार्थत्वात् । अत एवाऽऽदि( ति )देशिकमन्त्रकार्योऽपि काम्येष्टिषु । वस्तुतोऽनुपदसंज्ञकमन्त्राणामभावात्पदं स्वस्थानमनुगताविति व्युत्पत्त्या प्राकृतावेवेत्यर्थः । एवमुक्तिश्च पौर्णमास्यमावास्याविकृतिषु, वार्त्रघ्न्यादिव्यवस्थासिद्ध्यर्था । तस्याः सर्वस्या न्यायेनैव सिद्धत्वान्नित्यानुवादोऽयमिति प्राप्ते—कौषीतके, सर्वासु विकृतिषु सद्वन्तावाज्यभागाविति विधिभिरपोदितानां प्राकृतमन्त्राणां प्रतिप्रसवार्थोऽयं विधिः । तेन विकृतिषु सद्वन्तौ वा प्राकृतौ वेति विकल्पः ॥ ४ ॥

पुरस्ताल्लक्ष्मा पुरोनुवाक्योपरिष्टाल्लक्ष्मा याज्ये-
त्यद्वा विपरीतम् ॥ ५ ॥

एतयोश्च लक्षणमाज्यभागब्राह्मणे तु—' पुरस्तात्लक्ष्मा पुरोनुवाक्या भवति । जातानेव भ्रातृव्यान्प्रणुदते । उपरिष्टाल्लक्ष्मा याज्या जनिष्यमाणानेव प्रतिनुदते, इति समाम्नातम् । ' यस्या ऋचः पूर्वार्धे देवतालिङ्गं सा पुरोनुवाक्या । उत्तरार्धे तल्लिङ्गं चेद्याज्या सा भवति । एतस्य लक्षणस्य प्रदर्शनार्थत्वात्क्वचिदेतद्व्यभिचरति । तत्र सर्वत्राऽऽम्नानक्रमो नियामकः । पुरस्तादाम्नाताः पुरोनुवाक्याः । पश्चादाम्नाता याज्याः । तस्मादिष्टिक्रमं मन्त्रक्रमं च परीक्ष्यैकैकस्यामिष्टावेकैकं मन्त्रयुग्मं प्रयोज्यम् । ननु यत्र युग्मादधिकस्त्र्युग्मसमानलिङ्गको मन्त्र आम्नायते तत्र क्रमानुसारेणोत्तरेष्टौ मन्त्रयोजने लिङ्गं बाध्येत, पूर्वेष्टौ तद्योजने क्रमो बाध्येतेति चेन्न । बाध्यतां नाम क्रमोऽस्य दुर्बलत्वात् । यदि न पूर्वेष्टौ तृतीयमन्त्रस्य पृथक्प्रयोजनता तर्हि तत्र याज्या विकल्प्यताम् । यत्र तु युग्मान्तरं पूर्वयुग्मेन समानलिङ्गं तत्र याज्यापुरोनुवाक्यायुग्मस्यैव विकल्पोऽस्तु । यद्वदिष्टेरैक्ये मन्त्रयुग्माधिक्ये युग्मविकल्पस्तद्वन्मन्त्रयुग्मस्यैकत्वे सति तदीयदेवताविषयाणामिष्टीनामाधिक्ये ता इष्टयोऽपि विकल्प्यन्ताम् । तद्यथा—इहैव तावत्तादृशमुपलभ्यते । उभा वामिन्द्राग्नी ( तै० सं० १–१–१४ ) इत्यादय इन्द्राग्निलिङ्गकाश्चत्वारो मन्त्राः । ऐन्द्राग्नेष्टयस्तु फलभेदेन पञ्चाम्नाताः । तत्र प्रथममन्त्रयुग्मविषये तिस्र आद्या इष्टयो विकल्प्यन्ते ॥ ५ ॥

ऐन्द्राग्नमेकादशकपालं निर्वपेदिति तासामुभा।
वामिन्द्राग्नी इति चतस्रो याज्यानुवाक्या द्वे पूर्वा-
सां तिसृणां द्वे उत्तरासामेवमत ऊर्ध्वं कर्मातिरेके,
सवशः प्रतिविभज्य पूर्वा पूर्वासामुत्तरोत्तरासां
मन्त्रातिरेकेऽवशिष्टा विकल्पार्था उपहोमा वा॥६॥

तासां कर्मणामैन्द्राग्न्यः पञ्चेष्टयः । इष्ट्या यक्ष्ये प्रजामवाप्नवानीति संकल्पः । सद्यस्कालाः । अग्नीनन्वाधाय व्रतप्रवेशः । अमावास्यातन्त्रं वेदं कृत्वा वेदिः सप्तदश सामिधेन्यः । येन यज्ञेनेत्यैन्द्रित्याग्नेयस्य च समानतन्त्रत्वादाग्नेयस्याष्ट कपालान्यैन्द्राग्नस्यैकादश । केचिद्भिन्नतन्त्रेणैवं कपालानि प्रयुनक्ति । निर्वापकाल आग्नेयं निरुप्यैन्द्राग्नं निर्वपति । एवं प्रचारः । उभा वामिन्द्राग्नी इत्यादि याज्यापुरोनुवाक्या इत्युक्तम् । इदं याजुषं हौत्रम् । अगन्म सुवरित्यत्रोहः—अगन्म प्रजां प्रजामगन्मेत्यादि । एवं सर्वासु काम्येष्टिष्वाग्नेयेन समानतन्त्रम् । सिद्धमिष्टिः संतिष्ठते । एतया स्पर्धमानो यजेत । इष्ट्या यक्ष्ये भ्रातृव्यजयार्थम् । शेषं पूर्ववत् । संग्राममुपप्रयास्यन्नेतयेष्ट्या यजेत । इष्ट्या यक्ष्ये युद्धजयार्थमिति संकल्प्य(ल्पः) । शेषं पूर्ववत् ।

संग्रामं जित्वैतयेष्ट्या यजेत । इष्ट्या यक्ष्ये । इन्द्रियवीर्यप्रतिष्ठापनार्थामिष्टिः । पूर्ववत्संकल्पादि । सिद्धमिष्टि. संतिष्ठते ॥ ६ ॥

यथोक्तकर्मप्रयोगान्तःपातिनमपरं यागमाह—

पौष्णं चरुं निर्वपेद्वयमु त्वा पथस्पत इति पूर्वा पुरोनुवाक्योत्तरा याज्यैवमत ऊर्ध्वं पूर्वयोत्तरा प्रतिष्ठा ॥ ७ ॥

इन्द्रियवीर्यसहितः सज्जनतां प्राप्य व्यवहारसमाप्तौ पौष्णं चरुमनुनिर्वपेत् । इन्द्रियवीर्योद्रिकार्थमिष्ट्या यक्ष्ये । इन्द्रियवीर्योद्रिकार्थम् । व्याख्यातः पौष्णः ॥ ७ ॥

इष्ट्यन्तरमाह—

क्षेत्रपत्यं चरुं निर्वपेत्क्षेत्रपत्यस्य क्षेत्रस्य पतिनेति ॥ ८ ॥

क्षेत्राणां भूमागत्वाद्भूमेः क्षेत्रपतित्वम् । इष्ट्या यक्ष्ये प्रतिष्ठापनार्थं, अस्यामेव प्रतितिष्ठति ( तै० सं० २-२-१ ) इति वाक्यशेषात् । क्षेत्रपतये जुष्टं० क्षेत्रपते हव्यं रक्षस्वेत्यादि क्षेत्रपतयेऽनुब्रूहि क्षेत्रपतिं यज । क्षेत्रस्य पतिना० क्षेत्रस्य पते इति याज्यापुरोनुवाक्ये । क्षेत्रपतेरूहमन्त्रादः । केचित्क्षैत्रपत्यं नैमित्तकमिति । केचिदस्यामेव प्रतितिष्ठतीति वाक्यशेषादस्यां भूमौ प्रतिष्ठार्थमिति ।

एवं क्षैत्रपत्यं समाप्यैन्द्राग्नेष्टिमेकादशकपालामुपरिष्टान्निर्वपेदिति पूर्वमेवास्माभिर्व्याख्यातम् । इष्ट्या यक्ष्ये । इन्द्रियवीर्यप्रतिष्ठापनार्थम् । सग्राममुपप्रयास्यन्नित्यादिपौष्णान्तानां न पर्वनियमः । केचित्क्षैत्रपत्यन्तानामिति । केचिदैन्द्राग्नान्तानाम् । सर्वासां काम्येष्टीनामुपांशुत्वमाश्रवणादेः प्रधानार्थस्य । यज्ञा(या)पर्वणन्यायात् । सर्वासां नारिष्ठान्हुत्वा—अग्निर्भूतानामित्यादि ॥ ८ ॥

इष्ट्यन्तरमाह—

अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेदिति प्रवृत्तस्य कालातिनये प्रवृत्ते वैश्वानरयेग्ने नयाऽऽदेवानामिति याज्यानुवाक्ये यद्वाहिष्ठमिति संयाज्ये । अनड्वान्दक्षिणा । अग्नये व्रतपतये पुरोडा

श्चमष्टाकपालं निर्वपेत्। त्वमग्ने व्रतपा असीति
याज्यानुवाक्ये ॥ ९ ॥

पथिकृती वैश्वानरी व्रतपती च व्याख्याताः प्रायश्चित्ते। पर्वणि पर्वण्यप्रमादेन तद्दिष्टेरनुष्ठानं विद्यमानं पन्थाः। कस्मिंश्चित्पर्वणि प्रमादेनानुष्ठानाभावोऽपथः। अस्मिन्विषये प्रायश्चित्तरूपेयमिष्टिः। यस्मादेषोऽनड्वान्भारं वहति (अनड्वांन्दक्षिणा वही ह्येष समृद्ध्यै, (तै० सं० २-२-२) इति। तस्मात्समृद्ध्यै भवति। अग्ने नयाऽऽदेवानामिति। यद्वाहिष्ठं, अग्ने त्वं पारयेति स्विष्टकृतः। अग्नये व्रतपतय इत्यादि। अव्रत्यं यागव्रतविरोध्यनृतवादादिकम्। तस्मादियमिष्टिः। त्वमग्ने व्रतपा असि, यद्वो वयमिति द्वे व्रतपतेः ॥ ९ ॥

अथ रक्षोघ्नेष्टिमाह—

अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यꣳ रक्षाꣳसि सचेरन्निति। अमावास्यायां निशि परिश्रित्य निर्वपेत्। कृणुष्व पाजः प्रसितिमिति पञ्चदश सामिधेनीरन्वाह नित्यया परिदधाति। अया ते अग्ने समिधा विधेमेति याज्यानुवाक्ये। परे संयाज्ये ॥ १० ॥

सचेरन्समवेयुर्बाधेरन्नित्यर्थः। अमावास्यायां निशितायां तस्यां वेलायां निर्वपेदित्यर्थः। यागभूमेः परितो वेष्टनं कुर्यात्। अस्यामिष्टौ कृणुष्व पाज इत्यनुवाकः कृत्स्नो विनियुक्तः। तस्मिन्नृचोऽष्टादश। तासु पञ्चदश सामिधेन्यः। एका पुरोनुवाक्या, द्वे याज्ये विकल्पिते।

अथेयं पद्धतिः—अमावास्यायां निशायाममावास्यामुक्तर्पः निशीष्टेः। साद्गुण्यसामर्थ्ये। दुस्स्पृष्टं सर्वप्रायश्चित्तं करोति रक्षोगणैः पीडितश्चेदेतत्कर्म कुर्यात्। सायमग्निहोत्रं हुत्वा—इष्ट्या यक्ष्ये, इत्युक्त्वा रक्षोहननार्थमिति संकल्पः। अन्वाधानादि। अग्नये रक्षोघ्ने जुष्टं निर्वपामि, अग्ने रक्षोहन्निदं रक्षस्व। अग्नये रक्षोघ्नेऽनुब्रूहि। अग्निं रक्षोहणं यज। अग्ने रक्षोहन्नमदः ॥ १० ॥

अथेष्ट्यन्तरमाह—

अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेदभिचरन्निति। चरमयं बर्हिर्भवतीत्क इध्मो सौरि-

तोष्णीषा लोहितवसना निवीता ऋत्विजः
प्रचरन्ति । सर्वास्वाभिचरणिकास्वेवम् ' ॥ ३ ॥
त्वमग्ने रुद्र इति याज्यानुवाक्ये ॥ ११ ॥

रुद्रवते घोरतनूयुक्ताय । अभिचरञ्शत्रुं मारयन् । तस्मै रुद्रवतेऽग्नये । परमरणकामो यजेत । इष्ट्या यक्ष्ये परमरणार्थमिति (अग्नये पथिकृत (तै० सं० २–२–२) इत्यनुवाके या इष्टयः श्रूयन्ते ताः सर्वा अष्टाकपाला आग्नेयविकाराश्च) । अग्नये रुद्रवते जुष्टं निर्वपामि । अग्ने रुद्रवन्हव्यꣳ रक्षस्वेत्यादि । लोहितोष्णीषादि सर्वर्त्विजां यजमानस्य च । अग्ने रुद्रवते—त्वमग्ने रुद्र, आ वो राजानमिति याज्यानुवाक्ये । प्राकृतावाज्यभागौ । अनुपदौ वा । त्वां चित्रश्रवस्तमेति द्वे संयाज्ये । एवं सर्वकाम्येष्टिष्वैन्द्राग्नप्रभृतिषु ॥ ११ ॥

इष्ट्यन्तरमाह—

'( अग्नये सुरभिमते पुरोडाशमष्टाकपालं निर्वपेद्यस्य
गावो वा पुरुषा वा प्रमीयेरन्यो वा बिभीयादेषा
वेति) '। अग्नये सुरभिमतेऽग्निर्होता साध्वीमकर्देववी-
तिमिति स्वयं यजमानो याज्यानुवाक्ये कुर्वीत ॥ १२ ॥

सुरभिमते भेषज्यतनूयुक्ताय । यस्य यजमानस्य गावो वा भृत्या वा दैविकरोगबाहुल्येन बहवो म्रियेरन्स्वयं वा कदाचिदपमृत्योर्भीतो भवेत्तादृशो निर्वपेत्पूतीगन्धस्य शावगन्धस्य निवृत्तये सुगन्धयुक्ताय कुर्यात् । यद्वा—यस्य गावो वा पुरुषा वा प्रमीयेरन् यो वा बिभीयादिति पृथगधिकारमिति केचित्स एवेति । इष्ट्या यक्ष्ये गवादीनां मरणनिवृत्त्यर्थम् । पूतीगन्धस्यापहत्यै ( तै० सं० २–२–२ ) इति वाक्यशेषात् । पूती-( ति, )गन्धो दुर्गन्धः । *अत्र शावगन्धस्यापहत्या इत्यर्थः । पूतिगन्धस्यापहननार्थमिति* फलनिर्देशः । अत्रार्थवादोऽपि फलं रात्रिसत्रन्यायादवगन्तव्यम् । अग्नये सुरभिमते जुष्टं निर्वपामि । अग्ने सुरभिमन्हव्यꣳ रक्षस्वेत्यादि । अग्निर्होता निषसादा, साध्वीमकर्देववीतिमिति याज्यानुवाक्ये ॥ १२ ॥

इष्ट्यन्तरमाह—

अग्नये क्षामवत इति तिस्रः क्षामवत्यस्तासामक्रन्ददग्निरिति याज्यानुवाक्ये ॥ १३ ॥

क्षामवते क्षुधायुक्ताय । युद्धे प्रत्यासन्ने सति जयार्थी निर्वपेत् । यथा जयार्थिन एवेष्टिस्तथा बहुबन्धुमरणनिवारणार्थिनोऽप्येतामिष्टिं कुर्यात् । गृहदाहादि निमित्ती-

कृत्यापि तामेवेष्टिमिति त्रिस्रः क्षामवत्य इति । संग्रामे संयत्ते ( तै. सं. २–२–२ ) इति । उत्तरयेष्ट्या यजेत । इष्ट्या यक्ष्ये संग्रामजयार्थमिति । अग्नये क्षामवते जुष्टं निर्वपामीत्यादि । अक्रन्ददग्निस्त्वे वसूनीति याज्यानुवाक्ये । येषा पूर्वापरा (२–२–२) इत्यादि । येषा यजमानाना पूर्वापरा ज्ञातयः सततं यथाक्रमं म्रियन्ते स एतया क्षामवत्या यजेत । इष्ट्या यक्ष्ये । ज्ञातीना शिष्टाना मरणनिवृत्त्यर्थम् । उक्ते याज्यानुवाक्ये । यस्य यजमानस्य गृहदाहः स्यात्स एतया क्षामवत्या यजेत । इष्ट्या यक्ष्ये । अपरगृहदाहनिवृत्त्यर्थम् । शेषं पूर्ववत् ॥ १३ ॥

इष्ट्यन्तरमाह—

अग्नये कामायेत्यष्टौ । तासां तुभ्यं ता अङ्गिर-
स्तमेत्यानुपूर्वेण याज्यानुवाक्याः ॥ १४ ॥

फलार्थकृते काम्ये कर्मणि फलसिद्धिर्यस्य नास्ति तद्विरोधात् । स उत्तरया यजेत । केचिद्वैदिकं कर्म नियतफलमिति कृष्या(वृष्ट्या)दिविषयमुपदिशन्ति । केचित् 'एनं कामो नमति' (२–२–३) इति सर्वार्थमिति वदन्ति । आहारपृथक्त्वेनेति न्यायात् । इष्ट्या यक्ष्ये यथेष्टफलनिर्देशः । अग्नये कामाय ( २–२–३) इत्यनुवाके या इष्टयस्ता आग्नेयविकारा अष्ट कपालानि च । अग्नये कामाय जुष्टं निर्वपामि । अग्ने काम हव्यं रक्षस्वेत्यादि । तुभ्यं ता अङ्गिरस्तम, अश्याम तं काममग्न इति याज्यानुवाक्ये । उत्तरया क्षेत्रेषु वा 'सजातेषु वेष्ट्या यजेत । इष्ट्या यक्ष्ये भ्रातृव्यजयार्थमिति संकल्पः । अग्नये यविष्ठाय जुष्टं निर्वपामि । अग्ने यविष्ठ हव्यं रक्षस्वेत्यादि । श्रेष्ठं यविष्ठ भारताग्ने, स श्वितानस्तन्यतुरिति याज्यानुवाक्ये । एतयेष्ट्याऽभिचर्यमाणो यजेत । इष्ट्या यक्ष्ये । परेणाभिचारदोषनिवृत्त्यर्थम् । श्रेष्ठं यविष्ठ, स श्वितान इति याज्यानुवाक्ये । उत्तरया सर्वायुष्यकामो यजेत । शतायुष्यार्थमिति । इष्ट्या यक्ष्ये । सर्वायुष्यसिद्ध्यर्थम् । अथवा श्रुत्युक्तायुष्यार्थं वा । छान्दोग्योपनिषदि 'पुरुषो वाव यज्ञ.' इत्यत्र यदुक्तं सहषोडशं वर्षशतमिति तदर्थं वा । अग्नय आयुष्मते जुष्टं० । अग्न आयुष्मन्हव्यं रक्षस्वेत्यादि । आयुष्टे विश्वतो दधत्, आयुर्दा अग्ने, इति याज्यानुवाक्ये । भूतिकाम उत्तरया यजेत । इष्ट्या यक्ष्ये । भूतिमवाप्नवानीति । अग्नये जातवेदसे जुष्टं निर्वपामि । अग्ने जातवेदो हव्यं रक्षस्वेत्यादि । तस्मै ते प्रतिहर्यते, दिवस्पर्यारीति याज्यानुवाक्ये । । उत्तरया रुक्कामो यजेत । इष्ट्या यक्ष्ये । रुक्मान्भूयासमिति । अग्नये रुक्मते जुष्टं निर्वपामि । अग्ने रुक्मन्हव्यमित्यादि । शुचिः पावक वन्द्यो, द्युतानो रुक्म इति याज्यानुवाक्ये । उत्तरया तेजस्कामो यजेत ।

इष्ट्या यक्ष्ये। तेजस्वी भूयासमिति । अग्नये तेजस्वते जुष्टं निर्वपामि। अग्ने तेजस्वि-न्हव्यꣳ रक्षस्वेत्यादि । आ यदिषे नृपतिं स तेजीयसेति याज्यानुवाक्ये । उत्तरया सीक्षमाणः सोढुमभिभवितुमिच्छुः । इष्ट्या यक्ष्ये । मर्षोर्षमिति । अग्नये साहन्त्याय जुष्टं निर्वपामि । अग्ने साहन्त्य हव्यꣳ रक्षस्वेत्यादि । अग्ने सहन्तमा भर, तमग्ने पृतनासहमिति याज्यानुवाक्ये ॥ १४ ॥

अन्नवतेऽन्नादायान्नपतय इत्येतासामुक्षान्नाय वशा-न्नाय वद्मा हीति याज्यानुवाक्ये ॥ १५ ॥

अन्नवते बह्वन्नयुक्ताय । अन्नकामो यजेत । अग्नयेऽन्नवत ( तै० सं०–२–२–४ ) इत्यनुवाके या इष्टय आम्नातास्ताः सर्वा अष्टाकपाला आग्नेयविकाराश्च । अग्नये रस-वत इति वर्जयित्वा । इन्द्राय पुत्रिण इत्येकादश कपालानि । इष्ट्या यक्ष्ये । अन्नवान्भू-यासमिति । अग्नयेऽन्नवते जुष्टं निर्वपामि । अग्नेऽन्नवन्हव्यꣳ रक्षस्वेत्यादि । उक्षान्नाय वशान्नाय, वद्मा हीति याज्यापुरोनुवाक्ये । उत्तरयाऽन्नादकामो यजेत । इष्ट्या यक्ष्ये। अन्नादनसमर्थो भूयासमिति । अग्नयेऽन्नादाय जुष्टं निर्वपामि । अग्नेऽन्नाद हव्यमित्यादि। उक्षान्नाय, वद्मा हीति याज्यानुवाक्ये। अग्नेरन्नादस्याहमिति । अन्नपतित्वकाम उत्तरया यजेत । इष्ट्या यक्ष्ये । अन्नपतिर्भूयासमिति । अग्नयेऽन्नपतये जुष्टं निर्वपामी-त्यादि । उक्षान्नाय वशान्नाय, वद्मा हि सून इति याज्यानुवाक्ये ॥ १५ ॥

अथेष्ट्यन्तरं हविस्त्रयोपेतमाह—

अग्नये पवमानायेति त्रिहविरग्न आयूꣳषि पवस इति याज्यानुवाक्याः ॥ १६ ॥

उत्तरया त्रिहविष्कया ज्योगामयावी यजेत । इष्ट्या यक्ष्ये । चिररोगमुक्त्यर्थम् । अग्नये पवमानाय जुष्टं० । अग्नये पावकाय जुष्टं० । अग्नये शुचये जुष्टं० इत्यादि । अग्न आयूꣳषि पवसेऽग्ने पवस्वेति पवमानस्य । अग्ने पावक, स नः पावक इति पावकस्य । अग्निः शुचिव्रततमः, उदग्ने शुचयस्तवेति शुचेः । अथैतया त्रिहविष्कया चक्षुष्कामो यजेत । तिमिरपटलाद्यभिभूतः। इष्ट्या यक्ष्ये । तिमिरादिदोषविघातार्थम् । शेषं पूर्ववत् ॥ १६ ॥

अग्नये पुत्रवत इति द्विहविर्यस्त्वा हृदा कीरिणा यस्मै त्वमिति याज्यानुवाक्याः ॥ १७ ॥

उत्तरया द्विहविष्कया प्रजाकामो यजेत । इष्ट्या यक्ष्ये । प्रजावान्भूयासमिति ।

एकोनविंशतिः कपालानि । अग्नये पुत्रवते जुष्टं निर्वपामि । इन्द्राय पुत्रिणे जुष्टं निर्वपामीत्यादि । अमावास्यातन्त्रम् । यस्त्वा हृदा, यस्मै त्वमित्यग्नेः पुत्रवतः । त्वे सु पुत्र, उक्थउक्थ इतीन्द्रस्य पुत्रिणो याज्यानुवाक्ये । यत्र [ यत्र ] कपालसंख्या विहिता तत्र [ तत्र ] येन यन्नेनेत्तैदित्याग्नेयवर्गानामेव तत्र [ सर्वत्र ] तैः सा गण्यते ॥ १७ ॥

अग्नये रसवतेऽजक्षीरे चरुमित्येतासामग्ने रसेनेति याज्यानुवाक्याः ॥ १८ ॥

रसवानन्नवान् । उत्तरया रसवत्कामो यजेत । इष्ट्या यक्ष्ये रसवान् स्यामिति । स्थाली स्रुच्यश्च द्वंद्वम् । अग्नये रसवते जुष्टं निर्वपामि । अजक्षीरे श्रपणम् । तस्य प्रणीताधर्माः । अग्ने रसेन, अपो अन्वचारिषमिति याज्यानुवाक्ये । उत्तरया वसुकामो यजेत । वस्विति धननाम । अग्नये वसुमते जुष्टमित्यादि । वसुर्वसुपतिस्त्वामग्ने वसुपतिमिति याज्यानुवाक्ये । संग्रामे संयत्त उत्तरया यजेत । इष्ट्या यक्ष्ये । संग्रामजयार्थमिति । अग्नये वाजसृते जुष्टं० । त्वामग्ने वाजसातममयं नो अग्निर्वरिव इति याज्यानुवाक्ये । अग्नयेऽग्निवते जुष्टं० । अग्निनाऽग्निः समिध्यते, त्वꣳ ह्यग्ने अग्निनेति याज्यानुवाक्ये । अग्नये ज्योतिष्मते जुष्टमित्यादि । उदग्ने शुचयस्तव, विज्योतिषेति ज्योतिष्मतः ॥ १८ ॥

त्रिहविष्कां कांचिदिष्टिमाह—

वैश्वानरं द्वादशकपालमिति त्रिहविः पतनीयेन कर्मणा कृतेनाभिशस्यमानस्य द्वादश वैश्वानर्यस्तासां वैश्वानरो न ऊत्येत्यष्टौ याज्यानुवाक्या द्वे द्वे तिसृणामव ते हेडो वरुणेति वारुणस्य दधिक्राव्णो अकारिषमिति दधिक्राव्णः ॥ १९ ॥

अभिशस्यमान उत्तरया यजेत । त्रिहविष्कया पतनीयेन कर्मणा तेनाभिशस्यमानस्येति सूत्रकारमतिः । इष्ट्या यक्ष्ये । अभिशंसदोषनिवृत्त्यर्थम् । अन्वाधानादि । पात्रसादनकाले द्वादश कपालानि स्थालीद्वयं चेत्यादि । अग्नये वैश्वानराय जुष्टं० । वरुणाय जुष्टं० । दधिक्राव्णो जुष्टं० इत्यादि । उत्करे त्रिर्निनीय यथाभागं व्यावर्तध्वमिदमग्नेर्वैश्वानरस्येदं वरुणदधिक्राव्णोरिति पर्यवर्यान् । अस्यामिष्टौ हिरण्यं दक्षिणा । अग्नये हिरण्यमिति प्रतिग्रहः । अत्र द्वादश वैश्वानरकर्माणि अनुवाकद्वय आम्नातानि । अष्टौ वैश्वानरीया ऋचः । तत्र त्रयाणां कर्मणा द्वे द्वे याज्यानुवाक्ये । अल्पीयास इति

न्यायात् । अस्मिन्यागे—वैश्वानरो न ऊत्या०, ऋतावानमिति वैश्वानरस्य । अव ते हेड उदुत्तममिति वरुणस्य । दधिक्राव्ण आ दधिक्रा इति दधिक्राव्णः ।

एतया त्रिहविष्कया प्रजाकामो यजेत । इष्ट्या यक्ष्ये । प्रजामवाप्नवानीति । पूर्ववद्याज्यानुवाक्ये च ॥ १९ ॥

उद्वासनेष्टावाग्नेयस्याग्निर्मूर्धा भुव इति याज्यानुवाक्ये ॥ २० ॥

अग्निमुद्वासयिष्यन्नुत्तरया द्विहविष्कया यजेत । संकल्पप्रकारः पूर्वमेवोक्तः । आग्नेयमष्टाकपालं निर्वपेत् । वैश्वानरं द्वादशकपालमिति । सूत्रान्तरोक्ततया विकल्पः । या ते अग्ने उत्सीदत इत्यादयो न भवन्ति । शाखान्तरोक्तत्वाद्विकल्प इति केचित् । अन्वाहार्यो दक्षिणेति भाष्यकृत् ॥ २० ॥

प्रजाभिः समृद्धं ग्रामं कामयमानस्य द्विहविष्कामिष्टिमाह—

वैश्वानरं द्वादशकपालं निर्वपेन्मारुतꣳ सप्तकपालं ग्रामकामः ॥ २१ ॥

उत्तरया द्विहविष्कया ग्रामकामो यजेत । इष्ट्या यक्ष्ये । ग्राममवाप्नवानीति संकल्पः । एकोनविंशतिः कपालानि, शूर्पद्वयं वानस्पत्यादि । वेषाय वां, अग्नये वैश्वानराय जुष्टं० । अन्यस्मिन्शूर्पे मरुद्भ्यस्त्वा जुष्टं निर्वपामीत्यादि ॥ २१ ॥

प्रकृतावष्टाकपालैकादशकपालयोरेकस्मिन्नेवाग्नावधिश्रितत्वादत्रापि तत्प्राप्तावपवदति—

आहवनीये वैश्वानरमधिश्रयति । गार्हपत्ये मारुतम् ॥ २२ ॥

अपरेणाऽऽहवनीयं वैश्वानरस्योपसादनम् । अपरेण गार्हपत्यं मारुतस्य । उपसादनोर्ध्वं मिश्रणम् । केचिद्वैश्वानरस्य मुख्यत्वान्मुख्यधर्मेण कर्तव्यमिति तदाऽऽहवनीयस्यापरेणोपसादनमुभयोस्तदेकमेव शूर्पं पात्री च । सहैव निर्वापः । पेषणान्तं कृत्वाऽऽहवनीये वैश्वानरस्य कपालान्युपधाय गार्हपत्ये मारुतस्याऽऽद्यैः सप्तभिः । संवापस्तन्त्रेण । आहवनीये गार्हपत्ये वा पिण्डं कृत्वा विभज्याऽऽहवनीये वैश्वानरमधिश्रयति । मारुतं गार्हपत्य इति । अन्तरितमित्यादिक्रमेण आप्यलेपाद्विपुरोडाशद्वयम् ॥ २२ ॥

---

१—क. पुस्तकेऽयमधिकः—वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात इति सर्वेष्वेव यथाह्वा· दर्शपूर्णमिष्ट्या यक्ष्ये । जात पुत्रः पूतस्तेजस्व्यन्नाद इन्द्रियावी पशुमान्भवत्विति संकल्पः । उभयं वैश्वानरी । वैश्वानरो न ऊत्या०, । ऋतावानमिति याज्यानुवाक्ये । अन्वाहार्यो दक्षिणा । अत्रापि येन यज्ञेनेत्याग्नेयं केचिदिच्छन्ति । एतया वैश्वानर्या दर्शपूर्णमासव्रतिपत्ते पुत्रमेव । तस्य प्रयोग उक्त प्रत्यधिसप्तमे । वैश्वानरस्य दस्सनाभ्यो बृहत०, पृष्ठो दिवीति याज्यानुवाक्ये इति ।

अलंकृत्य वैश्वानरमासादयति । अनूच्यमानासु
सामिधेनीषु मारुतो मरुतो यद्वत इति याज्यानुवाक्ये ॥ २३ ॥

पुरोडाशावलंकृत्याऽऽसादयति । वैश्वानरेण प्रचर्य मारुतेन प्रचरति । वैश्वानरस्य दृश्सनाम्यो बृहत्, पृष्टो दिवीति वैश्वानरस्य । मरुतो यद्ववो दिवः, या वः शर्मेति मारुतस्य ॥ २३ ॥

इष्ट्यन्तरमाह—

आदित्यं चरुं संग्राममुपप्रयास्यन्निरवपदि-
तिर्न उरुष्यतु महीमू षु मातरमिति याज्यानुवाक्ये ॥ २४ ॥

उत्तरया संग्राममुपप्रयास्यन्निर्वपति । इष्ट्या यक्ष्ये । प्रतिष्ठार्थम् । उपप्रयास्यन्निति भिक्षुः । अन्यन्वाधानादि । प्याष्टी भ्यश्च द्वंद्वम् । अदित्ये जुष्टं निर्वपामीत्यादि । अदितिर्न महीमू षु मातरमित्यदितेः । संग्रामस्य संबन्धीनि यानि कर्माणि श्रूयन्ते तानि क्षत्रि-यस्यैव । केचिद्द्विजातिमात्रस्यैवायं विधिरिति मन्यन्ते । उत्तरया संग्रामयितनं गत्वा संग्रामभूमि गत्वाऽग्नीन्समाधाय दार्शिकीं वेदिं कृत्वा, इष्ट्या यक्ष्ये संग्रामजयार्थमिति । शेषमुक्तम् ॥ २४ ॥

युद्धभूमिं प्राप्तस्य जयार्थिन इष्टिं विधत्ते—

वैश्वानरं द्वादशकपालं निर्वपेदायतनं गत्वेति
यत्र युयुत्समाना भवन्ति ॥ २५ ॥

यस्मिन्नायतने युद्धं भविष्यति तत्प्राप्य तस्मिन्देशे निर्वपेत् । जातो यदग्ने, त्वमग्ने शोचिषेति वैश्वानरस्य । विद्विषाणयोः परस्परं तयोरन्यतरस्याग्निं हु(ह)त्वा वैश्वानर्या यजेत । केचिदुभयस्याग्निमिति । इष्ट्या यक्ष्य इत्यादि । जातो यदग्ने त्वमग्ने शोचि-षेति । आन्यं श्लेष्मरोगः ।

योऽपि प्रतिगृह्णाति स वैश्वानर्या यजेत । इष्ट्या यक्ष्ये । तव (मम) श्लेष्मरोगदो-षपरिहारार्थम् । शेषं पूर्ववत् । अस्माकमग्ने वैश्वानरस्य सुमताविति याज्यानुवाक्ये । आत्मनो वा एषमात्रामाप्नोति, आयुः परिसमाप्ति श्रूयत इत्यर्थः । मात्रा माने परिच्छेद इत्यर्थः । अश्वं वा पुरुषं वा प्रतिगृह्णीयात्स वैश्वानर्या यजेत । इष्ट्या यक्ष्ये । आत्मनो मात्रानिवृत्त्यर्थम् । अस्माकमग्ने वैश्वानरस्य समतौ स्यामेति याज्यानुवाक्ये ॥ २६ ॥

धनलाभमुद्दिश्य दातृसमीपं गमिष्यत इष्टिमाह—

वैश्वानरं द्वादशकपालं निर्वपेत्सनिमेष्यन्नयया रज्ज्वोत्तमां गामजेत्तां भ्रातृव्याय प्रहिणुयादिति भ्रातृव्यगवीं वाऽभिदध्याद्गोष्ठे वा न्यसेत् ॥४॥२६॥

इति सत्याषाढहिरण्यकेशिसूत्रे द्वाविंशप्रश्ने द्वितीयः पटलः ।

---

सनिं धनलाभम् । सनिमेष्यन्भिक्षमाणो यास्यन्नित्यर्थः । सोऽपि वैश्वानर्या यजेत । इष्ट्या यक्ष्ये । भिक्ष्यमाणद्रव्यासिद्ध्यर्थं मां प्रति दानकामाः प्रजा भवन्त्विति वा फलनिर्देशः । शेषं पूर्ववद्याज्यानुवाक्ये च । भिक्षणं कृत्वा पुनरेत्य प्रतिनिवृत्य वैश्वानर्या यजेत । इष्ट्या यक्ष्ये प्रतिष्ठार्थमिति । शेषं पूर्ववत् । अनुवाकद्वयेन वैश्वानरकर्माण्याम्नातानि ।

अभिशस्यमानस्य प्रजाकामस्य जातपुत्रस्य दर्शाद्यतिपन्नस्याग्निमुद्वासयिष्यतो ग्रामकामस्य संग्रामायतनं गच्छतो विद्विषाणयोरन्नं भुक्तवतः समानयोः पूर्वमभिद्रोग्धुरविं प्रतिग्रहीतुरश्वपुरुषयोर्वा प्रतिग्रहीतुः सनिमेष्यतः पुनरागतस्यैवं त्रयोदश । तत्र संशयः—किं वैश्वानरकर्माणि द्वादश आहोस्विदेकादश अथवा त्रयोदशेति पूर्वः पक्षः । समाम्नानादधिकारभेदादेकादशेत्यपरः पूर्वः पक्षः । कुतः—प्रथमां त्रिहविष्कामुक्त्वैता वै निर्वपेत् । इत्युक्तत्वात्सूत्रकारेण सनिमेष्यन्नित्यादिवैश्वानरकर्मैकमुक्त्वा—एतमेव वैश्वानरमित्युक्तम् । तस्मात्कर्मैक्यमुभयत्रैकस्य कर्मणोऽधिकारभेदत्वमेव न कर्मभेदः । एतयाऽन्नाद्यकामवद्द्वादश कर्माणीति सिद्धान्तः । कुत एतामेव एतमेवेत्युभयत्रोक्तेऽ-
८५ प्येतामेवेत्यस्य भेदः, । पुनरुत्पत्तिपरामर्शनात् । ‘ यद्वैश्वानरो द्वादशकपालो भवति वारुणेनैवैनं वरुणपाशान्मुञ्चति दधिक्राव्णा पुनाति, इति । तस्मात्पूर्वस्यैव कर्मभेदः । दक्षिणाविधानाच्च । एतामेवेत्युक्तेऽपि हिरण्यं दक्षिणेति विधानात् । तस्मात्पूर्वस्यैव भेदः । तस्माद्द्वादश कर्माणि । तदा याज्यानुवाक्याना कल्पनमेव । तत्र—अल्पीयांसो मन्त्रा इति न्यायेन प्रवृत्तिलिङ्गदर्शनाच्च । कथं लिङ्गं कपालदर्शनात् । यत्र यत्राग्निभेदः सिद्धस्तत्र तत्र सकपालं कर्म श्रुतं तस्मात्तस्यैव कर्मैक्यं पूर्वस्य भेदः । वैश्वानरमिति कर्म, न पुरोडाशः प्रैवाऽऽग्नेयेनेत्यत्र संधितानि हवींषीति वचनाद्धविःपरत्वमेव । एतामेवेत्यत्रैतं न दृष्टम् । तस्मात्कर्मैक्यमेव ।

प्रकृतमनुसरामः । यया रज्ज्वा काम्यमानाना सर्वासां गवां पृष्ठतो गच्छन्त्याहे यत्तया रज्ज्वा शत्रोर्गां बध्नीयात् । एवं निर्ऋतिमेवास्मै प्रहिणोति ( तै० सं० २-२-

१ ) इति । दातृभ्यो लब्धासु गोषूत्तमां गां यया रज्ज्वा बद्ध्वा समानयति तां रज्जुं भ्रातृव्यविनाशार्थं तदीयगोष्ठे प्रक्षिपेत् ॥ ४ ॥ २६ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगवैजयन्त्या द्वाविंशप्रश्ने द्वितीयः पटलः ।

---

अथ द्वाविंशप्रश्ने तृतीयः पटलः ।

---

ऐन्द्रं चरुं निर्वपेत्पशुकाम इत्येतस्यानुवाकस्येष्टीनां याज्यानुवाक्या इन्द्रं वो विश्वतस्परीत्येषोऽनुवाकः ॥ १ ॥

उत्तरया पशुकामो यजेत । ऐन्द्रं चरुं निर्वपति (तै० सं० २–२–७) इत्यादि । इष्ट्या यक्ष्ये पश्वर्थमिति संकल्पः । अमावास्यातन्त्रम् । अन्वाधाय व्रतप्रवेशः । स्थाली स्फ्यश्च द्वंद्वम् । निर्वापकाल इन्द्रायेन्द्रियावते जुष्टं निर्वपामि । इन्द्रेन्द्रियावन्हव्यꣳ रक्षस्वेत्यादि । इन्द्रं वो, इन्द्रं नर इति याज्यानुवाक्ये ।

उत्तरया पशुकामो यजेत । इष्ट्या यक्ष्ये पशुमान्भूयासमिति । अमावास्यातन्त्रम् । इन्द्रायेन्द्रियावते जुष्टमित्यादि । इन्द्रियाणि शतक्रतो, अनु ते दायीति याज्यानुवाक्ये । ब्रह्मवर्चसकाम उत्तरया यजेत । इष्ट्या यक्ष्ये ब्रह्मवर्चसी भूयासमिति । इन्द्राय घर्मवते जुष्टं० । इन्द्र घर्म हव्यꣳ रक्षस्वेत्यादि । आ यस्मिन्, आमासु पक्कमिति याज्यानुवाक्ये । अन्नकाम उत्तरया यजेत । इष्ट्या यक्ष्ये । अन्नवान्स्यामिति । इन्द्रायार्कवते जुष्टं० । इन्द्रार्कवन्हव्यꣳ रक्षस्वेत्यादि । इन्द्रमिद्गाथिनो बृहद्, गायन्ति त्वेति याज्यानुवाक्ये । उत्तरया त्रिहविष्कया भूतिकामो यजेत । भूतिमवाप्नवानीति । त्रयस्त्रिंशत्कपालानि स्फ्यश्च द्वंद्वम् । [इन्द्राय घर्मवते जुष्टं० । इन्द्रायेन्द्रियावते जुष्टं० । इन्द्रायार्कवते जुष्टमित्यादि । [ आ यस्मिन्निन्द्रियाणि शतक्रतो इति इन्द्रस्य घर्मवतः, अनु ते इन्द्रमिद्गाथिन इतीन्द्रस्येन्द्रियावतः । गायन्ति त्वाऽन्या वा, इतीन्द्रस्यार्कवतः । ] अत्र घर्मवतो हविषि—आ यस्मिन् इत्यादिके याज्यानुवाक्ये । इन्द्रियावतो हविषि इन्द्रियाणि शतक्रतो इत्यादिके । अर्कवतो हविषि—इन्द्रमिद्गाथिनो बृहदित्यादिके इति भाष्यानुसारिपक्षः । यः पाप्मना गृहीतः स उत्तरया यजेत । इष्ट्या यक्ष्ये पापक्षयार्थमिति । इन्द्रायाꣳहोमुचे जुष्टं० । इन्द्राꣳहोमुगित्यमित्यादि । अꣳहोमुचे प्र भरेमा, विवेष यन्मेति याज्यानुवाक्ये । यं मृधोऽभिप्रवेपेरन् ।

मृधो वैरिणो ग्रं यजमानमभितः प्रवेपेरन्प्रकर्षेण कम्पयेयुर्भीतिमुत्पादयेयुः । अथवा राष्ट्राणि देशानभितो विनाशयितुं समीयुः संगता भवेयुः । तस्य यजमानस्य रक्षार्थे वैमृधाय शत्रुविनाशकायेन्द्राय निर्वपेत् । इष्टया यक्ष्येऽपहननार्थम् । शेषमुक्तं प्रकृतौ । इन्द्राय वैमृधाय जुष्टमित्यादि । अत्रापि केचिद्यथाशु(श्र)द्धं दक्षिणामिच्छन्ति । श्रद्धवत्यौ च । इतरथाऽन्वहार्यमेव । वि न इन्द्र मृधो जहि, इन्द्र क्षत्रमभीति याज्यानुवाक्ये । मृगो न भीमः, वि शत्रून्वि मृध इति बौधायनीये दर्शनात् । अथवाऽन्यत्र काम्यप्रकरणे विवेष यन्मा वि न इन्द्र, इति दर्शनात् । वि न इन्द्रेन्द्र क्षत्रमिति वा । अवशिष्टा विकल्पार्थाः ।

बद्धो वा परियत्तो वेति । बद्धः शृङ्खलया निगडितः । परियत्तः शृङ्खलामन्तरेण परितो भटैरवरुद्धः । उत्तरया यजेत । इष्ट्या यक्ष्ये । त्राणार्थमिति बधनान्मोक्षार्थमिति वा परिवारान्मोक्षार्थमिति वा । इन्द्राय त्रात्रे जुष्टं निर्वपामि । इन्द्र त्रातर्हव्यं रक्षस्वेत्यादि । इन्द्रस्य त्रातुरहं देवयज्यया त्रातो भूयासमिति । त्रातारमिन्द्रं मा ते अस्यामिति याज्यानुवाक्ये ।

महायज्ञकाम उत्तरया यजेत । महायज्ञं नामाग्निहोत्रं व्रतमकुर्वत दार्श्य(र्शं) यज्ञमाग्नेयं व्रतमकुर्वत, इति ब्राह्मणविहितं बोधायनेन भगवता व्याख्यातम् । इष्ट्या यक्ष्ये महायज्ञसिद्ध्यर्थम् । इन्द्रायार्काश्वमेधवते जुष्टं० । इन्द्रार्काश्वमेधवन् हव्यं रक्षस्वेत्यादि । अर्कवते वृष्णे यत्त इति याज्यानुवाक्ये ॥ १ ॥

काम्येष्टिकाण्डे काचिदिष्टिरेवमाम्नायते—

इन्द्रायान्वृजव इत्यन्वह मासा इति ॥ २ ॥

अनुकूलश्चासावृजुश्चेत्यन्वृजुः । साहाय्यकरणमानुकूल्यं, विरोधाचाचरणमृजुत्वं ग्रामणीः । उत्तरया ग्रामकामो यजेत । इष्ट्या यक्ष्ये । ग्राममवाप्नवानीति । इन्द्रायान्वृजवे जुष्टं० । इन्द्रान्वृजो हव्यमित्यादि । अन्वह मासा, अनु ते दायीति याज्यानुवाक्ये ॥ २ ॥

इष्ट्यन्तरं विधत्ते—

इन्द्राण्यै चरुं निर्वपेद्यस्य सेनाऽसंशितेव स्यात्-
धृतेवेत्यर्थो वल्वजानिध्म उपसंनह्य सन्नध्येना-
प्यादध्यादुनया धाय्या । रेवती पुरोनुवाक्या
भवति शक्वरी याज्या ओप्यस्मै पुरोरथमिति ॥ ३ ॥

यस्य सेना असंशिता तीक्ष्णा न भवेत्स्वकार्यक्षमा न भवेदित्यर्थः । स उत्तरया यजेत । इष्ट्वा यक्ष्ये सेनासिद्ध्यर्थमिति । स्थाली स्फ्यश्च द्वंद्वम् । इन्द्राण्यै जुष्टं० । इन्द्राणि हव्यꣳ रक्षस्वेत्यादि । आग्नेयविकारः । इन्द्राण्यहमत्वात् । केचि दैन्द्राग्नविकार इति । तन्नेष्यते । तस्यामिष्टौ कंचिदङ्गविशेषमाह—बल्बजानपीध्मे संनह्ये-दिति । बल्बजास्तृणविशेषाः । तानपि चोदकप्राप्त इध्मे सम्यग्बध्नीयात् । प्रोक्षेत । इन्द्राणीमासु, नाहमिन्द्राणीति याज्यानुवाक्ये । उत्तरया यजेत संग्रामे संयत्ते । इष्ट्वा यक्ष्ये संग्रामजयार्थम् । इन्द्राय मन्युमते मनस्वते पुरोडाशमेकादशकपालम् । इन्द्र मन्युमन् हव्यꣳ रक्षस्वेत्यादि । यो जात एव, आ ते महेति याज्यानुवाक्ये । एतामेव निर्वपेद्यो हतमनाः स्वयं पाप इव स्यात् ( तै०सं०२–२-८ ) इति । यः पुरुषो रोगेर्ण द्रव्यहा-न्यादिना वा हतमना नष्टचित्तः सन्स्वयं पाप इव भ्रान्त इव स्यात् । एतस्मात्पुरुषादेता-नीन्द्रियमन्युधैर्याणि अपक्रान्तानि । अथेदानीमेष पुरुषो नष्टचित्तः स्वयं भ्रान्तो भवति तादृश एतामेव निर्वपेदिति पूर्वत्रान्वयः । एतस्यामपीष्टौ पूर्वोक्ते एव याज्यानुवाक्ये ।

यद्वा—हतमनाः स्वपापकर्मणः । इष्ट्वा यक्ष्ये । न हतमना भवामि न स्वयं पापो भवानीति वा फलनिर्देशः । शेषं पूर्ववत् । मे प्रजाः स्युरिति यः कामयेत स उत्तरया यजेत । इष्ट्वा यक्ष्ये । मां प्रति जना दानकामाः स्युरिति फलनिर्देशः । इन्द्राय दात्रे जुष्टं०, इत्यादि । मा नो मर्धीरा, आ तू भरेति याज्यानुवाक्ये । यस्मै प्रत्तमिव सन्न प्रदीयेत । प्रदात्रे प्रदापयिता । पालयस्यान्ते प्रदापयति ( तै० सं० २–२–८ ) इति श्रवणात् । यस्मा उत्तमर्णाय प्रतिग्रहीत्रे दायादाय वाऽधमर्णादिः पुरैव प्रकर्षेण दत्तमि-त्येवं दातव्यं धनमपलपति तद्धनं स्वस्मै न व्यवह्रियते । वस्तुतस्तु नैव प्रत्तं, तादृश उत्तम-र्णादिर्निर्वपेत् । इष्ट्वा यक्ष्ये । मां प्रति दत्तद्रव्यसिद्ध्यर्थमिति । इन्द्राय प्रदात्रे जुष्टं० । इन्द्र प्रदातर्हव्यमित्यादि । इन्द्रियाव्यत्वादः । प्रदातारꣳ हवामहे प्रदाता वज्रीति या-ज्यानुवाक्ये । अपरुद्धो वाऽपरुध्यमानो वोत्तरया यजेत । सुत्राम्णे सुष्ठु त्रात्रे । अप-रुद्धश्चिरं राज्याद्भ्रष्टः । अपरुध्यमान इदानीमेव भ्रश्यमानः । अनपरुद्धो भ्रंशा-विषयः । इष्ट्वा यक्ष्ये । अपरुद्धो वाऽपरुध्यमानो वा मोचनार्थमिति । इन्द्राय सुत्राम्णे जुष्टं० । इन्द्र सुत्रामन्हव्यमित्यादि । इन्द्रः सुत्रामा, स्ववाꣳ० तस्य वयꣳ सुमतौविति याज्यानुवाक्ये ।

योऽलꣳ श्रियै सन्त्सदृङ्समानैः स्यात् (२–२–८) स उत्तरया यजेत । इष्ट्वा यक्ष्ये । समानेभ्योऽधिकां श्रियमाप्नवानीति । इन्द्राय जुष्टमित्यादि व्याख्यातम् । रेवतीर्नः प्रोग्नमे पुरोरथमिति रेवती पुरोनुवाक्या । शाक्वरी याज्या । अनुवाक्द्वये या इष्टयस्ताः सर्वाः पुरोडाशवत्यः । एकादशकपालाः पुरोडाशाः ॥ ३ ॥

अथ त्रिहविष्का काचिदिष्टिमाह—

आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्त्सरस्वत्याज्यभागेत्याज्यहविरित्यथो बार्हस्पत्यश्चरुरिति त्रिहविर्द्वे द्वे पुरोनुवाक्ये कुर्यात् । अग्नाविष्णू सजोपसाऽऽग्नाविष्णू इत्याग्नावैष्णवं स्यात् । प्र णो देव्या नो दिवः पावीरवी कन्येति सारस्वतस्य । बृहस्पते जुषस्व न इति बार्हस्पत्यस्य ॥ ४ ॥

अभिचरन्नुत्तरया यजेत । इष्ट्या यक्ष्ये । भरमरणार्थमिति । एकादश कपालानि स्थाली स्रुग्श्च द्वंद्वमित्यादि । अग्नाविष्णुभ्या जुष्टं० । पूर्वमेवोक्तं सरस्वत्याज्यभागा स्यात् प्रधानदेवता । बार्हस्पत्यश्चरुः । आग्नावैष्णव निरुप्य बृहस्पतये जुष्टं० । आग्नावैष्णवेन प्रचर्य आज्येन सरस्वतीं यजति । न दभ्भिरसीत्यनुमन्त्रणम् । सरस्वत्या अहं० । ततो बार्हस्पत्येन प्रचरति । एव त्रिहविष्कास्तेषा च द्वे द्वे पुरोनुवाक्ये । अग्नाविष्णू सजोपसा, अग्नाविष्णू महीति पुरोनुवाक्ये । अग्नाविष्णू महि धामेति याज्या । सारस्वतस्य प्र णो देव्या नो दिव इति पुरोनुवाक्ये । पावीरवीति याज्या । बार्हस्पत्यस्य बृहस्पते जुषस्व न, एवा पित्र इति पुरोनुवाक्ये । बृहस्पते अति यदर्यो अर्हादिति याज्या । लोहितोष्णीषादि ॥ ४ ॥

प्रथममभिचरतः शत्रोस्त्रिहविष्केष्टिर्विहिता । इदानीं तदीयादभिचारादूर्ध्वं प्रत्यभिचरतस्तामेवेष्टिं विहितामभिप्रेत्य तत्र विशेषमाह—

एतयैव यजेताभिचर्यमाण आग्नावैष्णवोऽयं यज्ञो नोपनमेदाग्नावैष्णवो घृते चरुश्चक्षुष्कामस्याग्नाविष्णू अग्नाविष्णू इत्येव याज्यानुवाक्ये ॥ ५ ॥

केचित्—एतया त्रिहविष्कयाऽभिचर्यमाणो यजेत । इष्ट्या यक्ष्ये । मां प्रत्यभिचरतोऽभिचारयागजन्यफलमकिंचित्कर भवत्विति संकल्प । शेष पूर्ववत् ।

उत्तरया यज्ञकामो यजेत । इष्ट्या यक्ष्ये । यज्ञसिद्ध्यर्थमिति । अग्नाविष्णुभ्यां जुष्टं०, इत्यादि । शेष पूर्वमेवोक्तम् । एकहविष्का । न द्वे द्वे पुरोनुवाक्ये । चक्षुष्काम उत्तरया यजेत । आग्नावैष्णवं घृते चरुम् । इष्ट्या यक्ष्ये । तिमिरादि(दि)दोषनिवृत्त्यर्थम् । द्वे द्वे पुरोनुवाक्ये । इन्द्रियं वीर्यं वृङ्क्ते भ्रातृव्यो यजमानोऽयजमानस्याध्वरकल्पां प्रति निर्वपेत् ( तै० स० २-२-९ ) इत्यादि । अध्वरकल्पया यजेत । अध्वरकल्पेति इष्टिचतुष्टयसमुदायनाम । प्रातरनुवाककाले निर्वापो यथा स्यात्तथा संकल्पः ।

अध्वरकल्पया यक्ष्ये इन्द्रियवीर्यविच्छेदनिवृत्त्यर्थमिति -। अन्वाधानादि । अध्वरकल्पं हविरिदमेषां मयीति । पूर्ववत्त्रिहविष्का 5ऽऽग्नावैष्णवमष्टाकपालं सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुः । पूर्ववद्याज्यानुवाक्याः । न द्वे द्वे । मध्यंदिनकाले पूर्ववत्संकल्पादि । आग्नावैष्णवमेकादशकपालं सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुः। पूर्ववद्याज्यानुवाक्याः । न द्वे द्वे । तृतीयसवनकाले पूर्ववत्संकल्पादि। आग्नावैष्णवं द्वादशकपालं सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुः । पूर्ववद्याज्यानुवाक्याः । न द्वे द्वे ॥ ५ ॥

एतस्यैवाध्वरकल्पानुष्ठायिनः प्रतिवाद्यनुष्ठितानूबन्ध्याख्यानीयामिष्टिमाह—

मैत्रावरुणमेककपालं निर्वपेदा नो मित्रावरुणेति मैत्रावरुणस्य ॥ ६ ॥

भ्रातृव्योऽवभृथं कृत्वा गृहे समागत्योदवसानीयामनुष्ठायानूबन्ध्यां, वशामुपाकरोति । तस्मिन्काले मित्रावरुणदेवताकमेककपालं पुरोडाशं निर्वपेत् । भ्रातृव्यस्य साऽनूबन्ध्या वशा यैवास्ति एतस्याध्वरकल्पस्याधिकारिणोऽयमेककपालः सैवैषा वशा भवति । ननु—पूर्वोक्तैः कपालैर्यथा छन्दांसि प्राप्तानि तथाऽनूबन्ध्याख्यः पशुरपि प्राप्यतामिति चेन्न । संख्यासाम्येन छन्दसां प्राप्तुं शक्यत्वात् । नहि पशावष्टत्वादिसंख्याऽस्ति । अतः पूर्वोक्तैः कपालैरिमं पशुमाप्तुं न शक्नोति । मैत्रावरुणस्य तु कपालैकत्वात्संख्यासाम्येन पशुमेकं प्राप्तुमर्हति । पूर्ववत्संकल्पादि । मित्रावरुणाभ्यां जुष्टं निर्वपामीत्याद्येककपालधर्मः । न पशुधर्माः । प्रयाजादि । आ नो मित्रावरुणा, प्र बाहवा, इति याज्यानुवाक्ये ॥ ६ ॥

तिष्यापूर्णमासे सोमारौद्रं ब्रह्मवर्चसकामस्य परिश्रिते याजयन्ति । श्वेतायै श्वेतवत्सायै दुग्धं मथितमाज्यं भवति । आज्यं प्रोक्षणमाज्येन मार्जयन्ते,तूष्णीकेन । प्रोक्षणमार्जने । मानवी ऋचौ धाय्ये कुर्यात् । मधु देववत इत्येतासां द्वे । पञ्च सोमारौद्रीयं,सोमारुद्रेति सर्वासां याज्यानुवाक्ये ॥ ७ ॥

उत्तरया ब्रह्मवर्चसकामो यजेत । तिष्या पौर्णमास्यां प्रातरग्निहोत्रं हुत्वा, इष्टया यक्ष्ये । ब्रह्मवर्चसमवाप्नवानीति संकल्पः । श्वेतायै श्वेतवत्सायै दुग्धं मथितमाज्यं भवति ( तै० सं० २–२–१० ) इति ब्राह्मणमपि द्रष्टव्यम् । तेनैवाऽऽज्येन सर्वप्रोक्षणं हविःप्रोक्षणं मार्जनं च । मनो ज्योतिरित्यादि तेनैवाऽऽज्येन । सोमारुद्राभ्यां जुष्टं० । सोमा-

रुद्रौ हव्यं रक्षेथाम् । सोमारुद्रा इति केचित्प्राकृता एव मन्त्रा इति । केचिदूहमिच्छन्ति । मानवी ऋचौ धाय्ये कुर्यादग्निं वः, मरुत् देववतो रथ इत्येतासां द्वे । विकल्पिताः पङ्क्तः । सोमारुद्रा वि, सोमारुद्रा युवमिति आज्यानुवाक्ये । आज्यभागप्रभृत्याप्रधानयागान्तं कटादिभिः परिश्रयणं, विहारस्य । स्विष्टकृतादि अपरिश्रिते प्रधानार्थे परिश्रयणं, यज्ञाथर्वणन्यायेन । मनो ज्योतिरित्यविकारेण मार्जनम् ॥ ७ ॥

इष्ट्यन्तरमाह—

यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णं चरुं निर्वपेत्सोमापूषणा इमौ देवाविति याज्यानुवाक्ये ॥ ८ ॥

कुष्ठादित्वग्दोषो मम भविष्यतीति यो बिभीयात्स उत्तरया यजेत । इष्ट्या यक्ष्ये । न दुश्चर्मा भवामीति । सोमापौष्णं चरुं निर्वपेत् । व्याख्यातं राजसूये । सोमापूषणेमौ देवाविति याज्यानुवाक्ये ॥ ८ ॥

सोमारौद्रं ज्योगामयाविनः ॥ ९ ॥ होताऽनड्वाहं दक्षिणां ददाति । सोमारौद्रं चरुं निर्वपेद्यः कामयेत स्वेऽस्मा आयतने भ्रातृव्यं जनयेयमिति भ्रातृव्यक्षेत्रे यजेत । वेदिं परिगृह्य दक्षिणमर्धमुद्धत्य तदेवार्धेन बर्हिषस्तृणीयादर्धमिध्मस्याभ्या दध्यात् ॥ ९ ॥

( केचित्—प्रजाकाम उत्तरया यजेत । सोमारौद्रं चरुं निर्वपेत् । प्रजामवाप्नवानीति । पूर्वोक्ते याज्यानुवाक्ये । आज्यं प्रोक्षणमित्यादि न भवत्युत्तरेषु (रासु) । अभिचरन्नुत्तरया यजेत । इष्ट्या यक्ष्ये । परमरणार्थमिति । शेषं पूर्ववत् । )

ज्योगामयावी उत्तरया यजेत । इष्ट्या यक्ष्ये । चिररोगनिवृत्त्यर्थमिति । सोमारौद्रं चरुं निर्वपेत् । शेषं पूर्ववत् । अस्मिन्कर्मणि अनड्वान्होत्रे देयः । यजमानस्य स्वं (धन) दद्यात् । होता दक्षिणत एव ब्राह्मणा अयं वोऽनड्वानिति होत्राऽभिमर्शनम् । अथवाऽनिर्दिष्टदक्षिणा । न यद्यनड्वांस्तदाऽन्वाहार्यमेव । यः कामयेत स्वेऽस्मा आयतने भ्रातृव्यं जनयेयमिति ( तै॰ सं॰ २–२–१० ) यो यजमानः शत्रोरायतने शत्रो शत्रुमुत्पादयेयमिति यः कामयेत स उत्तरया यजेत । इष्ट्या यक्ष्ये । शत्रोरायतने तस्य (तेन) शत्रुं वधे(जनये)यमिति । द्वितीयं फलं निर्दिष्ट (द्वितीयफलनिर्देशः) । शेषमुक्तम् ।

भ्रातृव्यक्षेत्रं गत्वाऽथैतामिष्टिं निर्वपेत । भ्रातृव्यक्षेत्रं गृहम् । अथवा कृषिभूमिः । अन्यतरदेशं गत्वा दार्शिकीं वेदिं कृत्वा भाविन्यऽऽयतने निधाय, इष्ट्या यक्ष्ये । पूर्ववत्फलनिर्देशः । सोमारौद्रं चरुं निर्वपेत् । वेदिं परिगृह्यार्धमुद्धन्यादर्धमिति ब्राह्मणम् । बर्हिस्तरणकालेऽर्धं दक्षिणतस्तृणाति । अर्धमुत्तरे त्यजेत् । इध्माधानकालेऽर्धमिध्मस्याद-धाति । अर्धमुत्करे त्यजेत् । समिष्टयजुषा वा बर्हिषः प्रतिपत्तिः स्तीर्णेन सह नोत्करे । उक्ते याज्यानुवाक्ये । वेदिं परिगृह्येत्यादि पूर्ववत्स्यात् । अस्याश्च ब्रह्मवर्चसफलार्थे सोमारौद्रचरौ यान्यङ्गानि श्रूयन्ते तिष्यापूर्णमास इत्यादीनि तान्युत्तरासु न सन्ति । याज्यानुवाक्यावर्जमिति ॥ ९ ॥

तस्मिंश्च काम्येष्टिप्रकरणे पूर्वोदाहृतात्सोमारौद्रचरोरूर्ध्वं द्विहविष्का काचिदिष्टिरे-वमाम्नायते—

ऐन्द्रमेकादशकपालं निर्वपेन्मारुत१सप्तकपालं ग्राम-कामः ॥ १० ॥

ग्रामकाम उत्तरया यजेत । इष्ट्या यक्ष्ये । ग्राममवाप्नवानीति । अन्वाधानादि । अमावास्यातन्त्रम् । अन्वाधानं कृत्वा व्रतप्रवेश इति भाष्यकृत् । वेदं कृत्वा वेदिः । अष्टादश कपालानि स्फ्यश्च द्वन्द्वं पात्रीद्वयं वानस्पत्याऽसि वेषाय त्वाम् । इन्द्राय जुष्टं० । मरुद्भ्यो जुष्टमित्यादि ॥ १० ॥

प्रकृतौ सह प्रयुज्यमानयोरपि द्वयोः पुरोडाशयोरेकस्मिन्नेवाधिश्रयणम् । इह तु तद्बाधितुं विधत्ते—

आहवनीय ऐन्द्रमधिश्रयति । गार्हपत्ये मारु-तम् ॥ ११ ॥

ऐन्द्रस्य तद्धविषो विभागेनावधारणार्थं भिन्नाग्नावधिश्रयणम् । यद्वा, आहवनीयस्य पश्चादुपसादयत्यैन्द्रं गार्हपत्यस्य पश्चान्मारुतं भिन्नाश्रयणाद्युक्तमुख्यधर्मेण वा प्रतिपत्तिस्तदा एकमेव शूर्पं न पात्रीद्वयम् । एकस्मिन्शूर्पे एव निर्वापादयः । आहवनीयस्य पश्चादेवोपसादनम् । प्रोक्ष्यावहत्य पिष्ट्वा समोप्य संयुज्य पिण्डं कृत्वाऽऽहवनीय ऐन्द्रमधिश्रयति गार्हपत्ये मारुतम् (२-२-११) । एकादशस्वैन्द्रं सप्तसु मारुतम् । अन्तरितमित्यादि । उत्तरः परिग्राहः । पृथगेवोद्वासनं द्वयोः ॥ ११ ॥

अलंकृत्यैन्द्रमासादयति अनूच्यमानासु सामि-

१ मुरुतं ।

धेनीषु मारुतम् ॥ १२ ॥ इन्द्रं वो विश्वतस्परीन्द्रं नरो मरुतो यद्धव इति याज्यानुवाक्याः ॥१३॥

अलंकृत्य । अस्मिन्काल ऐन्द्रमासादयति । सामिधेनीष्वनूच्यमानासु मारुतमासादयति । शेषमुक्तम् । इन्द्रं वो विश्वतस्परीन्द्रं नरो मरुतो यद्धवो दिवो या वः शर्मेति याज्यानुवाक्या इन्द्रमरुतोः ॥ १२ ॥ १३ ॥

एतामेव निर्वपेद्यः कामयेत क्षत्राय च विशे च समदं दध्यामित्यैन्द्रस्यावद्यन्ब्रूयादिन्द्रायानुब्रूहीत्यैन्द्री पुरोनुवाक्याऽऽश्राव्य ब्रूयान्मरुतो यजेति मारुती याज्या मारुतस्यावद्यन्ब्रूयान्मरुद्भ्योऽनुब्रूहीति मारुती पुरोनुवाक्याऽऽश्राव्य ब्रूयादिन्द्रं यजेति ऐन्द्री याज्या ॥ १४ ॥

एतामेव निर्वपेद्यः कामयेत क्षत्राय च विशे च समदं दध्यामिति क्षत्रियाणां वैश्यानां च संग्रामो भवत्वेवेति यः कामयेत स एतया यजेत । इष्ट्या यक्ष्ये । क्षत्रियवैश्ययोः कलहार्थमिति । सर्वं पूर्ववत् । तत्र विशेषः—ऐन्द्रस्यावद्यन्निति । ऐन्द्रं पुरोडाशमवद्यन्निन्द्रायानुब्रूहीति ब्रूयात् । इन्द्रं वो विश्वतस्परीति पुरोनुवाक्यामन्वाह होता । आश्रुतप्रत्याश्रुते । मरुतो यजेत्याह । या वः शर्मेति याज्यामाह होता । वषट्कारान्ते प्रक्षेपः । मारुतस्यावद्यन्ब्रूयादिति । मारुतं पुरोडाशमवद्यन्मरुद्भ्योऽनुब्रूहीति ब्रूयात्—मरुतो यद्धवो दिव इत्यन्वाह होता । आश्रुतप्रत्याश्रुते । इन्द्रं यजेत्याह—इन्द्रं नर इति याज्या । वषट्कृते प्रक्षेपः । उत्तमप्रयाजादिषु चेन्द्रो मरुतो वा मुख्यः । देवतापनयनं भयमेव ( नमत्र ) ॥ १४ ॥

कलहसमाधानकामस्यैतामेवेष्टिमाह—

एतामेव निर्वपेद्यः कामयेत कल्पेरन्निति यथादेवतमवदाय यथादेवतं यजेत ॥ १५ ॥

कल्पेन्परस्परकलहरहिता भवेयुः । एतयैन्द्रमारुत्या यजेत । इष्ट्या यक्ष्ये । क्षत्रियवैश्ययोः समाधानार्थम् । यथादेवतमवदाय यथादेवतं यजेत । शेषं पूर्ववत् ॥१५॥

इष्ट्यन्तरमाह—

ऐन्द्रमेकादशकपालं निर्वपेद्वैश्वदेवं द्वादशकपालं ग्रामकाम इति ॥ १६ ॥

ग्रामकाम उत्तरया यजेत । इष्ट्या यक्ष्ये । ग्राममवाप्नवानीति । अमावास्यातन्त्रम् । त्रयोविंशतिः कपालानि भ्रष्टश्च द्वेद्वामित्यादि । इन्द्राय जुष्टं० । विश्वेभ्यो देवेभ्यो जुष्टं० । ऐन्द्रमेकादशकपालेष्वाधिश्रयति । वैश्वदेवं द्वादशसु ॥ १६ ॥

प्रकृतौ हविर्द्वयस्य सहावदानं नास्ति । अत्र तु तद्विधत्ते—

ऐन्द्रस्य पूर्वमवदानमवदाय वैश्वदेवस्यावद्येदुपरिष्टादुत्तरमैन्द्रस्येन्द्राय विश्वेभ्यो देवेभ्योऽनुब्रूहीन्द्रं विश्वान्देवान्यजेति संमेष्याचि भरेष्विन्द्रमिति याज्यानुवाक्ये ॥ १७ ॥

अवदानकाल ऐन्द्रस्य प्रथममवदानमवदायोमे वैश्वदेवस्यावदायाथैन्द्रस्य द्वितीयमेवं चतुरवत्तिनः । पञ्चावत्तिनस्तु ऐन्द्रस्य प्रथममवदानमवदाय वैश्वदेवस्य त्रीण्यवदाय, अथैन्द्रस्य द्वे । इन्द्राय विश्वेभ्यो देवेभ्योऽनूब्रूहि इन्द्रं विश्वान्देवान्यज । भरेष्विन्द्रं, ममत्तु न इति याज्यानुवाक्ये । तन्त्रेण प्रक्षेपः । इन्द्रस्य विश्वेषां देवानामहं देवयज्ययेन्द्रियाव्यन्नादो भूयासं, प्राणैः सायुज्यं गमेयमिति वा ॥ १७ ॥

अथ दक्षिणामाह—

उपाधाय्यपूर्वयं वासो दक्षिणा ॥ १८ ॥

वस्त्रस्योभयपार्श्वान्तयोरपानीय स्थापनीयं रक्तसूत्रमुपाधाय्यं, तच्च पूर्वमेवोपानयनकाले वस्त्रं याति प्राप्नोतीति पूर्वयम् । उपाधाय्यं पूर्वयं यस्मिन्वाससि तदुपाधाय्यपूर्वयम् । सोमाय वासः । ब्रह्मन्ब्रह्मासि० । दिवं च तेन वाससा० । ब्राह्मणा इदं वो वास इत्याद्यूहेन प्रतिग्रहः ॥ १८ ॥

(द्विगुणान्संज्ञान्यां संगच्छध्वं समानो मन्त्रः समानी वः संज्ञानं नः संज्ञानं मे इति पञ्च होमाष्टीकाः । अत्र धूनुथ द्या प्रवेपयन्ति पर्वतानित्युपहोमो ) टीकायां ( द्विगुणं जी ) तु प्रयाणे चित्रान्तमित्येकेषां मारुतस्य प्रिया वो नाम हुवे तुराणामिति ॥ १९ ॥

ग्रामकाम उत्तरया यजेत । पृश्नियै दुग्धे प्रैयंगवं चरुं निर्वपेत् । पृश्निर्व्याख्याता । तस्याः पयसि चरुं श्रपयित्वा मरुद्भ्यो जुष्टं० । प्रियवनि याज्यानुवाक्ये भवतः ( तै०

सं० ३–३–११ )। प्रिया वो नामेति द्विपदा पुरोनुवाक्या। श्रियसे कमिति याज्या। उपहोमादि व्यक्तं सर्वम् ॥ १९॥

संज्ञान्ये समवदाय प्रचरेदग्नये वसुमते सोमाय रुद्रवते इन्द्राय मरुत्वते वरुणायाऽऽदित्यवतेऽनुब्रूह्यग्निं वसुमन्तꣳ सोमꣳ रुद्रवन्तमिन्द्रमरुत्वन्तं वरुणमादित्यवन्तं यजेति संप्रेष्यति। अग्निः प्रथमो वसुभिरिति याज्यानुवाक्ये। नाना वा प्रचर्याः समानी याज्यानुवाक्ये उत्तरे संयाज्ये॥६॥२०॥

.. यः समानैर्मिथो विप्रियः स्यात्समानैः पुरुषैस्त्वन्नाद्यैश्वर्यानिबन्धना विप्रतिपत्तिर्यस्य स्यात्स उत्तरया यजेत। संज्ञान्या यक्ष्ये। समानेभ्यः श्रेष्ठो भूयासमिति। संज्ञानꣳ हविः। एकोनविंशतिः कपालानि स्फ्यश्च द्वंद्व स्थालीद्रेयेन सह। पौर्णमासं तन्त्रम्। अग्नये वसुमते जुष्टं०। सोमाय रुद्रवते जुष्टं०। इन्द्राय मरुत्वते जुष्टं०। वरुणायाऽऽदित्यवते जुष्टं०। अग्ने वसुमन्हव्यं० सोम रुद्रवन्हव्यं० इन्द्र मरुत्वन्हव्यं०वरुणाऽऽदित्यवन्हव्यम्, इत्यादि। उत्करे त्रिर्निनीय यथाभागं व्यावर्तध्वमिदमग्नेर्वसुमत इदमिन्द्रस्य मरुत्वत इति पेषणार्थान्। इदꣳ सोमस्य रुद्रवतो वरुणस्याऽऽदित्यवत इति चर्वर्थान्। अष्टासु प्रथमं पुरोडाशमधिश्रयति। अथ चरुमधिश्रयति। अथ पुरोडाशमेकादशसु। अथ चरुम्। एवं प्रधानादिपुरोडाशयोः प्रचरणकालेऽञ्जलावुपस्तीर्य सर्वेभ्यो हविर्भ्यो यथाक्रमं द्विरवदाय चतुरवत्तिनः, त्रिस्त्रिः पञ्चावत्तिनः। अभिघार्याग्नये वसुमते सोमाय रुद्रवते इन्द्राय मरुत्वते वरुणायाऽऽदित्यवतेऽनुब्रूहि। अग्निं वसुमन्त सोमं रुद्रवन्तमिन्द्रं मरुत्वन्तं वरुणमादित्यवन्तं यज। अग्नि प्रथम इति पुरोनुवाक्या। सं नो देव इति याज्या। अग्नेर्वसुमतः सोमस्य रुद्रवत इन्द्रस्य मरुत्वतो वरुणस्याऽऽदित्यवतोऽह देवयज्ययाऽन्नादो, वृत्रहा, इन्द्रियाव्यन्नादो भूयासमिति हुतानुमन्त्रणम्। अग्नीषोमीयवदिति भाष्यकृत्। उत्तरयोः कुत्रा चिद्यस्ये सं यदिष इति स्विष्टकृद्याज्यानुवाक्ये ॥ ६ ॥ २० ॥

इष्ट्यन्तरं विधत्ते—

आदित्येभ्यो भुवद्वद्भ्यश्चरमिति यज्ञो देवानां प्रत्येतीति याज्यानुवाक्ये ॥ २१ ॥

नुदन्तामित्यैन्द्राग्नविकारपक्षे । आदित्यानां भुवद्वतामहमिन्द्रियाण्यन्नादः, वृत्रहा वा । यज्ञो देवानाꣳ शुचिरप इति याज्यानुवाक्ये ॥ २१ ॥

इष्ट्यन्तरमाह—

अपरुद्धो वाऽपरुध्यमानो वाऽभ्यधारयद्वर्ती निरु-
प्शाऽऽस्ते यावदेनं नापरुन्ध्युर्धारयन्त आदि
त्यास इति याज्यानुवाक्ये ॥ २२ ॥

यो राजा पूर्वं स्वराष्ट्राद्वैरिणा निःसारितः सोऽपरुद्धः । यस्त्विदानीं निःसार्यते सोऽपरुध्यमानः । तयोरन्यतरस्येयमिष्टिः । इष्ट्वा वक्ष्ये । अस्मद्राष्ट्रप्राप्त्यर्थम् । आदित्येभ्यो धारयद्वद्भ्यो जुष्टं० । आदित्या धारयद्वन्तो हव्यꣳ रक्षध्वमित्यादि । धारयन्त आदित्यासो, तिस्रो भूमीरिति याज्यानुवाक्ये । एवमिष्टिं कृत्वाऽऽसीत यावदेनं नापरुन्ध्युर्यावदेनमिष्टिं कृतवन्तं न निर्वासयेयुः शत्रवः । निर्वासादुपसादनान्तमेके स्वदेशं शत्रोरेतरं क्रमम् ( कर्म ) ॥ २२ ॥

अत्र पूर्वमपरुद्धस्य नास्ति विशेषाङ्गोपदेशः । अपरुध्यमानस्य तु प्रयोगे सोऽस्ति । तत्र कंचिन्मन्त्रमुत्पाद्य विनियुङ्क्ते—

अपरुध्यमानोऽदितेऽनुमन्यस्वेति ॥ २३ ॥
अपरोद्धुः पदमादाय गच्छति ॥ २४ ॥

मन्त्रमुच्चारयन्नस्य शत्रोः पदाङ्कितभूरज आददीत । इयं वा अदितिरियमेवास्मै राज्यमनुमन्यते (तै० सं० २-३-१) इति हि ब्राह्मणम् । २३ ॥ २४ ॥

यां जनतां गच्छेद्यस्तत्र मुख्यप्रवादो भवति ॥ २५ ॥

जनतां समूहलाम् । प्रवाद अपवादः ॥ २५ ॥

अत्र कंचित्प्रयोगविशेषं क्रमेणाऽऽह—

तस्य गृहाद्व्रीहीनाहरेच्छुक्लाश्च कृष्णाश्च । विचि-
नुयाद्ये शुक्लाः स्युस्तमादित्यं चरुं निर्वपेत् ॥ २६ ॥

ग्रामेभ्यो हितं ग्राम्यं तद्वाक्योऽस्मै वदतीति ग्राम्यवादी । स द्विविधः—अन्तरङ्गो बहिरङ्गश्च । तत्र बहिरङ्गः सभायामेव वदति । अन्तरङ्गस्तु सभायाः पुरस्तादन्तःपुरे गत्वा गूढं हितं वदति । तस्य गृहाद्व्रीहीनाहरेत् । आहृत्य शुक्लकृष्णमिश्रान्कृष्णान्भिन्ने विचिनुयाद् विवेकं करोति । ये कृष्णास्तान्वक्ष्यमाणकर्मार्थमिति (वैश्यायवनि ) । ये शुक्ला-

सौरादित्यं चरुं निर्वपेत् । इष्ट्या यक्ष्ये । मदीयराष्ट्रप्राप्त्यर्थमिति । आदित्येभ्यो जुष्टं०। आदित्य हव्यमित्यादि ॥ २६ ॥

ये कृष्णास्तान्कृष्णाजिन उपनह्य मन्नातान्निधायोप- प्रेत मरुतः सुदानव एना विश्पतिनाऽभ्यमुं राजानमिति यजमानमभ्येति सत्याऽऽशीरिति पदैकदेशं यजमानस्योत्तरे वाससि निवपतीह मन इत्युरसि शेषं त्याञ्नु क्षत्रियानिति याज्यानुवाक्ये ॥ २७ ॥

कृष्णाजिन उपनह्य बद्ध्वा निदधाति । हविष्कृता वाचं विसृज्येत्यापस्तम्बः । उप प्रेत मरुतः सुदानव एना विश्पतिनाऽभिनरसिंहवर्माणं राजानमिति । अध्वर्युर्यजमान- मभिगच्छति । अथ सत्याऽऽशीरिति यजमानस्योत्तरे वाससि प्रदपार्श्वे( ?स्वे )कदेशं निवपति । इह मन इत्युरसि, शेषमेकदेशं निवपतीत्यर्थः । अवहननादि । आदित्येष्टिः संतिष्ठते । त्याञ्नु क्षत्रियाꣳ न दक्षिणा विचिकित इति याज्यानुवाक्ये ॥ २७ ॥

केनचित्प्रतिबन्धविशेषेण यदि कृतायामपीष्टौ तत्प्राप्तिः प्रतिबध्येत तदानीं विशे- षमाह—

यदि नावगच्छेदिममहमादित्येभ्यो भागं निर्व- पाम्यमुष्मादमुष्यै विशोऽवगन्तोरित्यपरोद्धुर्नाम गृह्णाति तस्यैव विशः ॥ २८ ॥

एवमिष्टिना ( ष्टे न ) प्रविशेद्विशं स्वराष्ट्रमपरुध्यमानोऽपि चलनापेक्षया न प्रवि- शेदित्याह—एवं कृते न प्रविशेद्विशमन्ववयजेत । तत्र निर्वापमन्त्रे विशेषः—देवस्य त्वेत्यनुद्रुत्य पूष्णो हस्ताभ्यामिममहमादित्येभ्यो भागं निर्वपामि । अथापरोद्धुर्नाम गृह्णी- यात् । अपरोद्धुश्च विशं, एवं मन्त्रः । देवस्य त्वा हस्ताभ्यामिदमहं निर्वपामि नरसिं- हवर्मणो देवकोट्टकायै विशोऽवगन्तोरिति । केचिद्यस्यां विश्यपरुद्धस्तस्य नाम गृह्णीया- च्चतुर्थ्यो यथा कोट्टकायै विशोऽवगन्तोरिति । अन्यं विश इति चतुर्थ्यन्तेन सिद्धमिष्टिः संतिष्ठते । उक्ते याज्यानुवाक्ये ॥ २८ ॥

प्रतिबन्धाधिक्ये सति तावताऽप्यप्राप्तौ पुनरन्यं विशेषमाह—

यदि नावगच्छेदाश्वत्थान्मयूखान्सप्त मध्यमेपा- यामुपहन्यादिदमहमादित्यान्बध्नामीति त्रीन्प्राच- श्चतुर उदीचः ॥ २९ ॥

इदमित्यादिर्बन्धनमन्त्रः । अमुष्माद्वैरिणः सकाशादमुष्या मदीयाया विशोऽवगतोः प्राप्त्यै यजमानोऽहमादित्यानिदं बध्नामि । इदमिति हस्तेन प्रदर्शनम् । अनेन मन्त्रेणाश्वत्थमन्यान्सप्त शङ्कून्वैरिणः शकटस्य मध्यमायामीषायां कीलप्रक्षेपेण बध्नीयात् । प्रतिशङ्कु मन्त्रावृत्तिः । तिस्रः प्रागपवर्गाः ॥ २९ ॥

ततोऽपि प्रबलतरप्रतिबन्धके सति पुनरप्यन्यं विशेषमाह—

यदि नावगच्छेदेतमेवाऽऽदित्यं चरुं निर्वपेदि-
ध्मेऽपि मयूखान्संनह्येदनवगतः ॥ ३० ॥

पूर्वत्र मध्यमायामीषायां शङ्कवः कीलिताः । इदानीमिध्मेऽपि शङ्कुबन्धनं विशेषः । एवमपि कृते न प्रविशेद्विशमेतमेवाऽऽदित्यं चरुं निर्वपेत् । इष्ट्या यक्ष्ये, इत्यादि । उक्ते याज्यानुवाक्ये ॥ ३० ॥

· विभक्तानां द्विविधतण्डुलानां मध्ये शुक्लैरादित्यं चरुं विधाय कृष्णैर्वारुणचरुमाह—

कृष्णानां वारुणं चरुं निर्वपति । अनवगतो
वाऽऽदित्यं निरुप्य वारुणं निर्वपेदिमं मे वरुण
तत्त्वा यामीति याज्यानुवाक्ये । त्वं नो अग्न
इति संयाज्ये ॥ ३१ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे द्वाविंशप्रश्ने तृतीयः पटलः ।

अवगताऽस्य विडनवगतः राष्ट्रमित्याहुः ( तै० सं० २–३–१ ) इत्यादि । अस्य यजमानस्याऽऽदित्यचरुणा यद्यपि प्रजा प्राप्ता भवति तथाऽपि राष्ट्रं भूमिविशेषस्तावता न प्राप्यत इत्यभिज्ञा आहुः । अतस्तत्प्राप्तये वारुणं निर्वपेत् । यथा प्रजाया आदित्या देवता तद्वद्राष्ट्रस्य वरुणो देवता । ततस्तयोस्तुष्ट्या तदुभयं प्राप्यते । इष्ट्या यक्ष्य इत्यादि ॥ ३१ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां द्वाविंशप्रश्ने तृतीयः पटलः ।

---

अथ द्वाविंशप्रश्ने चतुर्थः पटलः ।

---

अथ मृत्युभीतस्येष्टिमाह—

प्राजापत्यं शतकृष्णलां निर्वपेदायुष्कामः ॥ १ ॥

शतं सुवर्णानि कृष्णलतुलितानि यस्याः समष्टेः सा कृष्णलसमष्टिः शतकृष्णला। तां प्रजापतिदेवताकां निरवपत् ॥ १ ॥

> शतꣳ हिरण्यकृष्णलानि काकिण्या मापेण वा संमितानि। औपधकल्पो यत्प्रागवहननात्तत्कृत्वा पवित्रान्तर्हित आज्य आवपति। घ(घ)र्ममात्रं श्रपणम्। प्रचरणकालेऽष्टौ देवताया अवद्यति। चत्वारि स्विष्टकृति। द्वे प्राशित्रेऽष्टाविडायाम्। चतुर्धाकरणकाले सर्वाणि प्राशित्रे समोप्यैकधा ब्रह्मण उपहरति। तानि ब्रह्मा भक्षयति। भक्षाय नयतीतरेषाम् ॥ २ ॥

शतकृष्णलयां यक्ष्ये। शतायुष्यार्थामिति। शतं कृष्णलꣳ हविरिदमेषां मयि, इत्यादि। अत्र शतं हिरण्यकृष्णलानि गुञ्जया तुल्यानि मापेण वा। कृष्णाजिनोलूखलमुसलादीनां न प्रयोगः। प्रजापतये त्वा जुष्टं०। न स्फ्याभिमन्त्रणम्। प्रोक्षणान्तं कृत्वा पात्राणि च प्रोक्ष्य उपवेषमादाय ध्रुवोऽसीति चरुमुपदधाति। यजुषा घृतमुत्पुनाति हिरण्यमुत्पूय आज्यं स्थाल्यामानीय घर्मोऽसीति तस्मिन्कृष्णलानावपति। घ(घ)र्ममात्र श्रपणं न विक्लेदनम्। असामर्थ्यात्। अन्तरितमित्यादि। देवस्त्वा सवितेति न त्रिहाञ्जनम्। प्रचरणकाल उपस्तरणाभिघारणे चत्वारि चत्वारि कृष्णलान्यवद्यति। एकावदाने चत्वारि गृह्णीयादित्यर्थः। चतुरवत्तिनोऽष्टौ पञ्चावत्तिनो द्वादश। चतुरवत्तिना स्विष्टकृति चत्वारि नामष्टौनामष्टौ। द्वे प्राशित्रे। सर्वत्रेडायामष्टौ चतुरवत्तिनः। पञ्चावत्तिनो द्वादश। चतुर्धाकरणकालेऽवशिष्टानि सर्वाणि प्राशित्रे कृत्वा ब्रह्मणे भक्षार्थमुपहरति। ब्रह्मा भक्षयति। तूष्णीमितरेषामृत्विजाम्। चतुर्धाकरणे ( णं ) भक्षस्यापनयः। न पिष्टलेपफलीकरणहोमौ। शेषं पूर्ववत्। हिरण्यगर्भ आपो ह यत्प्रजापते इति याज्यानुवाक्ये ॥ २ ॥

इष्ट्यन्तरमाह—

> सौर्यं चरुं निर्वपेदधस्तादुपरिष्टाच्च रुक्माभ्यां परिगृह्याऽऽसादयति। तस्य प्रयाजे प्रयाजे कृष्णलं जुहोति। अपोह्य रुक्मौ चरुणा प्रचरति। उदु त्यं चित्रमिति याज्यानुवाक्ये। एतावेव रुक्मौ दक्षिणा ॥ ३ ॥

उत्तरया ब्रह्मवर्चसकामो यजेत । इष्ट्या यक्ष्ये । ब्रह्मवर्चसमवाप्नवानीति । सूर्याय जुष्टं० । सूर्य हव्यमित्यादि । रुक्माभ्यामुपरिष्टादधस्ताच्च कृत्वाऽऽसादयति । तस्य प्रयाजे प्रयाजे कृष्णलं जुहोति । आदित्य हविष एव प्रयाजा न कृष्णलद्रव्यकाः प्रयाजाज्ये कृष्णलान्युप्याऽऽज्येन सह जुहुयात् । अपोह्य रुक्मौ चरुणा प्रचरति सूर्यायानुब्रूहीति । उदु त्यं चित्रमिति याज्यानुवाक्ये । एतौ रुक्मौ दक्षिणा । अग्नये हिरण्यमिति प्रतिग्रहः । अगन्मः सुवरित्यत्र अगन्म ब्रह्मवर्चसमित्यूहः । तदुक्तं न्यायविद्भिः—फलदेवतयोश्चेति ॥ ३ ॥

हिरण्यार्थिनस्त्रिहविष्कामिष्टिमाह—

आग्नेयमष्टाकपालं निर्वपेदिति त्रिहविः स प्रत्नवदिति याज्यानुवाक्याः ॥ ४ ॥

उत्तरया हिरण्यलाभकामो यजेत । इष्ट्या यक्ष्ये । हिरण्यलाभमार्प्स्यमिति । विंशतिः कपालानि स्थाली स्फ्यश्च द्वंद्वमित्यादि । निर्वापकालेऽग्नये जुष्टं० । सवित्रे जुष्टं० । भूम्यै जुष्टं० । अग्ने हव्यꣳ रक्षस्व, सवितर्हव्यꣳ रक्षस्व भूमे हव्यमिति, उत्करे त्रिर्निनीय यथाभागं व्यावर्तध्वमिदमग्नेः सवितुरिति पुरोडाशीयान् , इदं भूम्या इति चर्वर्थान् । पुरोडाशमधिश्रित्य तण्डुलानावपति । आग्नेयसवितृभ्यां प्रचर्य भूम्या अनुब्रूहि भूमिं यज, भूम्या अहमन्नादः० । ॥ प्रत्नवन्नवीयसा, नि काव्या इत्याग्नेयस्य । हिरण्यपाणिमूतये वाममद्य सवितरिति सवितुः । बडित्था पर्वतानां स्तोमासस्त्वा इति भूमेर्याज्यानुवाक्ये ॥ ४ ॥

सोमवामिनश्चरुमाह—

सौमेन्द्रꣳ श्यामाकं चरुं निर्वपेत्सोमवामिनः सोमातिपवितस्यर्द्धूदरेणाऽऽपान्तमिति याज्यानुवाक्ये ॥ ५ ॥

सोमवामिनो यजमानस्यायं चरुः । व्याख्यातः पूर्वमेव सोमप्रायश्चित्ते ॥ ५

पशुकामस्य त्रिहविष्कामिष्टिमाह—

अग्नये दात्र इति त्रिहविस्तेषां प्राजापत्यं संसृष्टहविस्तृतीयम् । दधि मधु घृतमापो धाना इति दधि मधु घृतमापस्तण्डुला इत्येतेषामाज्यविकारो मधूदके संसृष्टे मुख्ये स्वाधर्म्यभूयस्त्वादाज्यविकारो बलीयानग्ने दा दाशुषे रयिमित्याग्नेयस्य ।

मा नो मर्धीरा तू भरेत्यैन्द्रस्य । घृतं न पूतमुभे
इति प्राजापत्यस्य ॥ ६ ॥

उत्तरया त्रिहविष्कया पशुकामो यजेत । चतुर्दश्यां प्रातरग्निहोत्रं हुत्वा, इष्टया यक्ष्ये पशुमान्भूयासमिति । अन्वग्न्याधानादि, शाखाहरणम् । आप्यायध्वमघ्निया प्रजापतये देवभागमिति निगमाः । वेदं कृत्वा वेदिः । यवाग्वा सायमग्निहोत्रहोमः । प्रजापते हविरिन्द्रियं बहु दुग्धि प्रजापतये, इत्यादि । उदयात्प्रागुपक्रमः—एकोनविंशतिः कपालानि अन्यद्वर्जनार्थम् । स्फ्यश्च द्वंद्वं शूर्पद्वयं च । शिष्टानि प्रकृतिवत् । पुरतः पात्रीत्रयं प्राकृतया सह न प्रातर्दोहपात्राणि आज्यस्थाल्या सह द्वे अपूर्वे स्थाल्यौ । अग्नये दात्रे वो जुष्टं० । इन्द्राय प्रदात्रे जुष्टं० । यवपक्षे यवान् । अन्यस्मिञ्शूर्पे प्रजापतये जुष्टं निर्वपामि । तण्डुलपक्षे यवतण्डुलान् सिद्धानन्यस्मिन्प्रजापतये, अग्नये दात्रे वो जुष्टं प्रोक्षामि । इन्द्राय प्रदात्रे वो जुष्टं० । प्रजापतये वो जुष्टं० । यवपक्षे यवान्धान्यवानवहन्ति । तण्डुलपक्षे न त्ववहननम् । तद्भूतोपदेशात् । कपालमुपधाय भर्जनार्थमुपदधाति । पुरोडाशमधिश्रित्य तण्डुलानोप्य धानाः करोति । तण्डुलपक्षे न त्वधिश्रयणम् । तण्डुलानां निर्वापप्रोक्षणादयो विपर्यस्तादपि क्रियन्ते । सर्वेषामन्तरितं प्रोक्षणीरासादय पत्नीꣳ संनह्याऽऽज्येन मधुना दध्नो देहि । पत्नीसंनहनं कृत्वाऽदितं स्योच्छिद्रपत्रा इति स्थालीत्रयस्याऽऽदानम् । महीनामित्याज्यं निरुप्य तूष्णीं मधूदकयोर्निर्वापः । महीनां पयोऽसि स्थ ओषधीनाꣳ रसा अदब्धेन वश्चक्षुषेत्यादि । तेजोऽसि स्थ तेजसे वः, तेजोऽसि स्थ तेजोऽनुप्रेत । अग्ने वस्तेजो माविनैदग्नेर्जिह्वा स्थ सुभुवो देवानां धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे भवत । आज्यं मध्वापः स्थ सत्यानि स्थ सत्यस्याध्यक्षाणि, इत्यादिबहुवचनेनोहः । न मधूदकयो स्थाल्योरासादनं पुरोडाशद्वयमुद्वास्य धाना ऊहेन, तण्डुलपक्षे तूष्णीं तण्डुलान्प्रतिष्ठापयति क्रमेणालंकरणमपतमिन्द्रः प्रदाता, इत्यादि । अग्ने दा दाशुषे रयिं, दा नो अग्न इति याज्यानुवाक्ये । विकल्पिता याज्या अग्निर्देति । मा नो मर्धीरा तू भर इति द्वितीयहविषः । अथ संसृष्टहविष्प्रचारक्रमः—जुह्वामुपस्तीर्य प्रकृतिवद्—दध्यवदाय पूर्ववद्ध्रुवाया मध्ववदाय पूर्ववद्ध्रुवयां घृतमवदाय पुनश्च पूर्ववद्ध्रुवायामुदकमवदायोपाꣳशुयाज(ग)वत्पुरोडाशावद्य धाना ऊहेन तण्डुलानवदायाभिघार्य दधिधानानां मधूदकयोश्च वा प्रत्यभिधारणान्तं कृत्वा प्रजापतय इत्युपांशु उक्त्वाऽनुब्रूहीति(त्य)उच्चैः । एवमाश्रवणादि तन्त्रेण प्रक्षेपणम् । ऊर्ध्वमुखेन जुहोति । प्रजापतेरहं देवयज्यया जेमानं इन्द्रियावी वा । केचित्प्रजापतेरहं देवयज्यया जेमानं पाप्मानं दभेयमिति । अन्नादो भूयासमित्यपरे । घृतं न पूतमुभे सधन्द्रसर्पिष इति याज्यानुवाक्ये । मधूदकयोरपि स्विष्टकृद्यागं केचिन्नेच्छन्ति । प्रकृतिवत्समिष्टयजुः । अन्वाहार्यो दक्षिणा । सिद्धमिष्टिः संतिष्ठते ॥ ६ ॥

यज्ञविभ्रष्टस्याऽऽग्नेयादीनि त्रीण्युपक्रम्यान्तकनुच-
न्यज्ञविभ्रष्टः। आग्नेयस्य च सौम्यस्य चैन्द्रे समा-
श्लेषयेदिति संहितानि हवींष्यधिश्रयतीत्यर्थः ।
लेपौ वाऽस्मिन्समाश्लेषयेत् । समन्तवादिति या-
ज्यानुवाक्याः ॥ ७ ॥

स्वकालेऽप्रवृत्तदर्शपूर्णमासोऽप्रवृत्तपशुबन्धो वाऽप्रवृत्ताग्रयणो वा, उत्तरया यजेत त्रिहविष्कया । यज्ञविभ्रष्टेष्टिस्तस्य कर्म—इष्ट्या यक्ष्ये । अमावास्यातन्त्रम् । सप्तदश सामिधेन्यः । अन्वाधाय प्रप्रवेश । वेदं कृत्वा वेदिं । एकोनविंशतिः कपालानि स्थाली स्फ्यश्च द्वंद्वम्। अग्नये जुष्ट०। इन्द्राय जुष्ट०। सोमाय जुष्टं० । यथाभागं व्यावर्तेथाम् । इदमग्नेरिन्द्रस्येति पेषणार्थान् । इदं सोमस्येति चर्वर्थान् । आग्नेयस्य सौम्यस्य चैन्द्रे समाश्लेषयेदिति संहितानि हवींषि, अधिश्रयेदित्यर्थः । अथवाऽऽग्नेयसौम्ययोर्लेपौ चैन्द्रे समाश्लेषयेत् । शेषमुक्तम् । स प्रत्नवन्निरान्येत्याग्नेयस्य । इन्द्रं वो विश्वतस्परीन्द्रं नर इत्यैन्द्रस्य । त्वं न. सोम या ते धामानीति सौम्यस्य ॥ ७ ॥

इष्ट्यन्तरमाह—

द्वावग्नीषोमीयौ । नानातन्त्रावग्नीषोमा सवेदसेति
याज्यानुवाक्याः ॥ ८ ॥

यं यजमानं प्रति यामो नोपनमेत् । अग्नये यामायेत्यत्र व्याख्यातम् । तस्य कर्म—इष्ट्या यक्ष्ये । अग्नीषोमीयमेकादशकपालं निर्वपेत् । उक्ते याज्यानुवाक्ये । उत्तरा विकल्पार्थाः ॥ ८ ॥

सोमाय वाजिने श्यामाकस्याऽऽप्यायस्व सं त
इति ॥ ९ ॥

यः क्लैव्याद्बिभीयात्प्रजननासामर्थ्यं भविष्यतीति यो बिभीयात्स उत्तरया यजेत । इष्ट्या यक्ष्ये । न हवो भवामी( नी )ति संकल्पः । स्थाली स्फ्यश्च द्वंद्वम् । सोमाय वाजिने जुष्ट० । सोम वाजिन्हव्यमित्यादि । आप्यायस्व सं त इति याज्यानुवाक्ये ॥ ९ ॥

ब्राह्मणस्पत्यस्य गणानां त्वा गणपतिं हवामह
इति ॥ १० ॥

उत्तरया ग्रामकाम इष्ट्या यक्ष्ये ग्रामकामप्रवासीति । ब्रह्मणस्पतये जुष्टं० । ब्रह्मणस्पते हव्यमित्यादि । गणानां त्वा, स इज्जनेनेति याज्यानुवाक्ये ॥ १० ॥

तां य. कामयेत ब्रह्मन्विशं विनाशयेयमिति ॥८॥ सर्वं ब्राह्मणस्पत्यं भवति । मरुतो यद्धव इति याज्यानुवाक्ये ॥ ११ ॥

ब्रह्मणा वै विनाशयेयमिति यः कामयेत । इष्ट्या यक्ष्ये । ब्राह्मणा वैश्या नष्टा भवन्त्विति । सर्वं ब्राह्मणस्पत्यं भवति । ब्रह्मणस्पतिरेव देवता । मारुती याज्यानुवाक्ये । मरुतो यद्धवो दिवो या वः शर्मेति ॥ ११ ॥

इष्ट्यन्तरमाह—

अर्यम्णे चरुं निर्वपेत्सुवर्गकामोऽर्यमाऽऽयाति ये ते इति ॥ १२ ॥

स्वर्गकाम उत्तरया यजेत । इष्ट्या यक्ष्ये । स्वर्गं लोकमवाप्नवानीति । स्थाली स्यपश्च द्वंद्वम् । अर्यम्णे जुष्टं० । अर्यमन्हव्यमित्यादि । अर्यम्णोऽहं देवयज्यया स्वर्गं लोकं गमे(पुषे)यम् । अर्यमाऽऽयाति ये तेऽर्यमानिति याज्यानुवाक्ये ॥ १२ ॥

यो राजन्य आनुजावरः स्यात्तस्मा एतमैन्द्रमानुषूकमेकादशकपालं निर्वपेदैन्द्रस्यानुपूकस्य बुध्नादग्रमिति ॥ १३॥

यो राजन्य आनुजावरः समानानामात्मानमिच्छेदग्रत्वं श्रैष्ठ्यं, स उत्तरया यजेत । इष्ट्या[1] यक्ष्ये । समानानामग्रत्वप्राप्त्यर्थम् । आनुपूको लूनेषु व्रीहिषु मूलेभ्योऽनुसूयन्ते पश्चादुत्पद्यन्त इति द्वितीयफलरूपा व्रीहयोऽनुपूकाः । तेभ्यो निष्पन्न आनुपूकस्तेनैव तेभ्यो निर्वापः । ऐन्द्रं चरुं निर्वपेत् । इन्द्राय जुष्टमित्यादि । बुध्नादग्रं, बुध्नादग्रेणेति याज्यानुवाक्ये ॥ १३ ॥

( यो ब्राह्मण आनुजावरः स्यात्तस्मा एतं बार्हस्पत्यमानुपूकं चरुं निर्वपेत् । ) बार्हस्पत्यस्य प्र यो जज्ञ इति ॥ १४ ॥

ब्राह्मण्याग्रत्वगामिनः समानानां बार्हस्पत्य आनुपूकश्चरुः । इष्ट्या यक्ष्ये । समानानामग्रत्वं प्राप्नवानीति । बृहस्पतये जुष्टं० इत्यादि । प्र यो जज्ञे महान्मही, इति याज्यानुवाक्ये । विकल्पिता याज्या बुध्नाद्यो अग्रमिति ॥ १४ ॥

पापयक्ष्मगृहीतस्याऽऽदित्यश्चरुरमावास्यायां नवो नवो यमादित्या इति याज्यानुवाक्ये ॥ १५ ॥

---

१ क. पुस्तके–'यः कामयेत दानकामा मे प्रजाः स्युरिति सोऽप्येतयैव यजेत । इष्ट्या यक्ष्ये । मां प्रति दानकामाः प्रजा भवेयुरिति । शेषं पूर्ववत् । य. कामयेत स्विन्ने जनतामियामिति । शोभनजनतां प्राप्नुयामीति । शेषमुक्तम्' इति पाठः ।

पापयक्ष्मगृहीत उत्तरया यजेत । इष्टचा यक्ष्ये । यक्ष्मरोगशान्त्यर्थमिति । आदित्येभ्यो जुष्टं०, इत्याद्युक्तम् । नवो नवो यमादित्या इति याज्यानुवाक्ये । अमावास्यायामेव यागः । अमावास्यातन्त्रमादित्यो देवता ॥ १९ ॥

त्रिधातुं निर्वपेदिन्द्राय राज्ञ इत्येकादशसूत्तानेपु कपालेष्वधिश्रयति परितपनान्तं कृत्वा तस्मिन्नु-त्तरं ज्यायाꣳसमधिश्रयति । यथाशृतानलंकृत्य सादयति । प्रचरणकाले मध्यात्प्रथमां देवतां यजति । दक्षिणार्धाद्द्वितीयामुत्तरार्धात्तृतीयाꣳ सर्वेषामभिगमयन्नवद्यति । अच्छंबट्कारं यावता हि न प्राप्नुयात्तावता च वषट् कुर्यात् । प्राच्यां दिशि त्वमिन्द्राऽ(न्द्रोऽ)सि राजेति तिस्र ऋचो व्यत्यासमन्वाह । प्रथमामनूच्य मध्यमया यजेत । मध्यमामनूच्योत्तमया यजेत । उत्तमामनूच्य प्रथमया यजेत । एवं सर्वा अनुवाक्याः सर्वा याज्या भवन्ति ॥ १६ ॥

'उत्तरयाऽन्नाद्यकामस्त्रिधातुना यक्ष्ये । त्रैधातवीयꣳ हविः । केचिदिष्टचा यक्ष्ये । ऐष्टꣳ हविः, इति । एकादश कपालानि स्थवश्च द्वंद्वम् । आमावास्यात न्त्रम् । इन्द्राय राज्ञे जुष्टं० । इन्द्रायाधिराजाय जुष्टं० । इन्द्राय स्वराज्ञे जुष्टं निर्वपामि । इन्द्र राजन्हव्यमिन्द्राधिराज ह-व्यमिन्द्र स्वराजन्हव्यमित्यादि पिण्डं कृत्वा यथाभागं व्यावर्तेथां, यथाभागं व्यावर्तेथामिति, उद्दिश्य प्रमिन्द्रस्याधिराजस्य (स्वराज्ञः) प्रथमं पुरोडाशमधिश्रित्य, देवस्त्वा सविता श्रपयत्वि-त्युल्मुकैः परितपनान्तं कृत्वा तस्योपरि द्वितीयमिन्द्रायाधिराजा । तस्योपरि तृतीयमिन्द्राय स्वराज्ञ इति । उत्तरणोत्तरेण पूर्वं पूर्वं प्रच्छादयत्युत्तर उत्तरो ज्यायान्भवत्युल्मकैः परि-(प्रति) प्याशिस्ते तनुवं माऽति धा ग्ने हव्यꣳ रक्षस्वेति । सर्वेषा तूष्णीमभिघारणं सर्वानलंकृत्येति । एवं शृतानासादयति अपनमिन्द्रो भुवनानु तां, अपतमिन्द्रोऽधिराजो भुवनानुदतां, अपतमिन्द्रः स्वराड् भुवनानुदता प्रचरणकाले दक्षिणार्धात्पुरोडाशान्मा भैष्टेत्यूहेन सह त्रिभ्यः पुरोडाशेभ्योऽवद्यति । एवं द्वितीयं, तृतीयं नमदर्शीना तृतीयं दक्षिणार्धादेव । यदवदानानि वोऽवद्यन् इत्यूहेन । इन्द्राय राज्ञेऽनुब्रूहीति । इन्द्रं राजानं यज० । इन्द्रस्य राज्ञोऽहमिन्द्रियाव्यन्नादः । एवं मध्यादवद्य—इन्द्रायाधिराजायानु-ब्रूहि । इन्द्रमधिराजं यज । इन्द्रस्याधिराजस्याहमिन्द्रियाव्यन्नादः । एवमुत्तरार्धादव-दाय—इन्द्राय स्वराज्ञेऽनुब्रूहि । इन्द्रं स्वराजं यज । इन्द्रस्य स्वराज्ञोऽहमिन्द्रियाव्य-

स्वादः । प्राच्यां दिशि त्वमिन्द्राऽ(न्द्रोऽ)सीति पुरोनुवाक्यामनूच्येन्द्रो जयाति न परेति याज्यया प्रथमां देवतां यजेत । इन्द्रो जयाति न परेति पुरोनुवाक्यामनूच्यास्येदेवेति द्वितीयां देवतां यजेत । अस्येदेवेति पुरोनुवाक्यामनूच्य प्राच्यां दिशि इति तृतीयां देवतां यजेत । शेषमुक्तम् ॥ १६ ॥

सर्वपृष्ठां निर्वपेदिन्द्राय राथंतरायेति द्वादशसूक्तानेषु कपालेष्वधिश्रयति । प्रचरणकाले पूर्वार्धात्प्रथमां देवतां यजति । एवमितराः प्रदक्षिणं समन्तं पर्यवद्यतीति विज्ञायते । अभि त्वा शूर नोनुम इति षड्चो व्यत्यासमन्वाह विज्ञायते च न बृहत्या वषट् कुर्याद्यद्बृहत्या वषट् कुर्यादन्तं छन्दाꣳसि गमयेदनुवाक्यायाश्चत्वार्यक्षराणि न याज्यायामध्यूह्य यजत्यनुष्टुभं च वा एतत्पङ्क्तिं च संपादयन्ति मन्यामहे ॥ १ ॥ इन्द्राय राथंतरायानुब्रूहीत्युक्ते अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशानमस्य जगतः सुवर्दृशमीशानमोमित्यनूच्येन्द्र तस्थुपस्त्वामिद्धि हवामहे इति यजतीन्द्राय बार्हतायानुब्रूहीत्युक्ते त्वामिद्धि हवामहे साता वाजस्य कारवः । त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठोमित्यनूच्य स्ववतोऽभि त्वा शूर नोनुम इति यजति । इन्द्राय वैरूपायानुब्रूहीत्युक्ते यथाव इत्यनूच्य पिबा सोममिति यजति । इन्द्राय वैराजायानुब्रूहीत्युक्ते पिबा सोममित्यनूच्य यथाव इति यजति । इन्द्राय शाक्वरायानुब्रूहीत्युक्ते रेवतीर्न इत्यनूच्य प्रोष्वस्मै पुरोरथमिति यजति । इन्द्राय रैवतायानुब्रूहीत्युक्ते प्रोष्वस्मै पुरोरथमिति( त्यनूच्य ) रेवतीर्न इति यजति । ऋषभर्षभो वृष्णिवस्नः सा दक्षिणा ॥ १७ ॥

इन्द्रियकामो वीर्यकामः स्यात् । ॥ उत्तरया यजेत । सर्वपृष्ठेति समुदायनाम । सर्वपृष्ठया यक्ष्ये । सार्वपृष्ठ१ हविः, इत्यादि । पात्रसादनकाले द्वादश कपालानि स्फ्यश्च द्वंद्वमित्यादि । निर्वापकाले–इन्द्राय राथंतराय जुष्टं० । इन्द्राय बार्हताय जुष्टं० । इन्द्राय वैरूपाय जुष्टं० । इन्द्राय वैराजाय जुष्टं० । इन्द्राय शाक्कराय जुष्टं० । इन्द्राय रैवताय जुष्टं० । निर्वपामीति निर्वापः । इन्द्र राथंतर हव्य१ रक्षस्वेन्द्र बार्हत हव्यं० इन्द्र वैरूप हव्यं० इन्द्र वैराज हव्यं० इन्द्र शाक्कर हव्यं० इन्द्र रैवत हव्य१ रक्षस्वेत्यादि । चतुर्थ्यन्तेन प्रोक्षणम् । सह निर्वापादि महात्यहन्ति सह पिनष्टि सह पिण्डं कृत्वा द्वादशसु तानेषु कपालेष्वधिश्रयति(त्ये)एक एव पुरोडाश इन्द्राय राथंतराय बार्हताय वैरूपाय वैराजाय शाक्कराय रैवताय जुष्टं निर्वपामीति निर्वापः । एवमुत्तरत्र यथार्थं विभक्तयः । अपतमिन्द्र राथंतर बार्हत वैरूप वैराज शाक्कर रैवत भुवनाच्चुदन्तामहं प्रजां वीरवतीं विदेयेति । प्रचरणकाले मयन्नं पर्यवद्यति । पूर्वार्धादारभ्योत्तरापवर्गः स्यात् । यस्मिन्प्रथमावदानं तस्मद्देशे द्वितीय दि पूर्वार्धादवदायेन्द्राय राथंतरायानुब्रूहि इन्द्रं राथंतरं यज । अभि त्वा शूर नोनुम इत्यनूच्य त्वामिद्धि, इति यजति । इन्द्राय बार्हतायानुब्रूहि इन्द्रं बार्हतं यजेत्युक्ते त्वामिद्धि हवामह इत्यनूच्य, अभि त्वा शूर नोनुम इति यजेत । इन्द्राय वैरूपायेत्युक्ते यद्व इन्द्र ते शतमित्यनूच्य पिबा सोममिन्द्र मन्दतु त्वेति यजेत । इन्द्राय वैराजायानुब्रूहीत्युक्ते पिबा सोममिन्द्र मन्दतु त्वेत्यनूच्य यद्याव इन्द्र ते शतमिति यजेत । इन्द्राय शाक्करायानुब्रूहीत्युक्ते प्रोष्वस्मा इत्यनूच्य रेवतीर्नः सधमाद इति यजेत । इन्द्राय रैवतायानुब्रूहीत्युक्ते रेवतीर्नः सधमाद इत्यनूच्य प्रोष्वस्मा इति यजेत । इत्येवं वेदभाष्यकाराभिप्रायः ।

आह च सूत्रे भाष्यकाराभिप्रायम्–न बृहत्या वषट् कुर्यादिति । तत्रायं प्रयोगः–अभि त्वा शूर नोनुम ईशानमित्याद्यनूच्य येऽयजामह इन्द्रं राथंतरं भूर्भुवः सुवस्तस्थुषस्त्वामिद्धीति यजेत । त्वामिद्धि० त्वां काष्ठेमित्यनूच्य स्त्वर्वतोऽभिरवा शूर नोनुम इति यजेत । यद्याव इत्यनूच्य पिबा सोममिति यजति । पिबा सोममित्यनूच्य यद्याव इति यजति । रेवतीर्न इत्यनूच्य प्रोष्वस्मै पुरोरथमिति यजति । प्रोष्वस्मै पुरोरथमित्यनूच्य रेवतीर्न इति यजतीति । सर्वेषां भेदेन हुतानुमन्त्रणमिन्द्रियाव्यन्तादः, इति । ऐन्द्रवाय(ऐन्द्राग्न)वत्राज्ये[न] प्रत्याभिघारणं, अश्वर्षभवृष्णिबस्ता दक्षिणाः । सहस्रधारा उत्सा अक्षीयमाणा ते दध्रुः पृथिवीमन्तरिक्षं दिवं च तैरश्वर्षभवृष्णिबस्तैरतितराणि मृत्युमिति । ब्रह्माणो ब्रह्माण स्थ ब्रह्मणे वो हुताद्या मा मा हि१सिष्टाऽऽहुता मह्य१ शिवा भवत । ब्राह्मणा इमे वोऽश्वर्षभवृष्णिबस्ताः । वरुणायाश्वं, रुद्राय गां, त्वष्ट्रेऽजां, पूष्णेऽविमित्यादि । सिद्धमिष्टिः संतिष्ठते ॥ १७ ॥

दृषत्यात्येतयैव यजेताभिशस्यमानः ॥ १८ ॥

अभिशस्यमानः सर्वपृष्ठया यजेत । शेषं समानम् ॥ १८ ॥

चक्षुष्कामस्याऽऽग्नेयादीनि त्रीण्युदग्ने शुचयस्तव वि ज्योतिषोदु त्यं चित्रमिति याज्यानुवाक्याः । समानी आग्नेयाभ्यां चतुर्धाकरणकाले सौर्याद्भीन्पिण्डान्कृत्वोदु त्यं जातवेदस९ सप्त त्वा हरितो रथे चित्रं देवानामिति प्रतिमन्त्रं पिण्डान्यजमानाय प्रयच्छति । तान्यजमानः प्राश्नाति ॥ १९ ॥

चक्षुष्काम उत्तरया यजेत । इष्ट्या इक्ष्ये । तिमिरपटलादिदोषशान्त्यर्थमिति । पात्रसादनकाले षोडश कपालानि स्थाली स्फ्यश्च द्वंद्वमित्यादि। अग्नये भ्राजस्वते जुष्टं० । सूर्याय जुष्टं० । अग्नये भ्राजस्वते जुष्टं० । अग्ने भ्राजस्वन्हव्य९ रक्षस्व सूर्य हव्य९ रक्षस्वाग्ने भ्राजस्वन्हव्यमित्यादि। उदग्ने शुचयस्तव शुक्रा इत्येषा पुरोनुवाक्या। वि ज्योतिषा बृहता भात्यग्निरित्येषा याज्या भ्राजस्वतः । उदु त्यं चित्रमिति सूर्यस्य । सप्त त्वा हरित इति वा विकल्पिता याज्या। समानी याज्यानुवाक्ये भवत इति लिङ्गात् । चतुर्धाकरणकाले सूर्यचरोस्त्रीन्पिण्डान्कृत्वोदु त्यं जातवेदसं सप्त त्वा हरितो रथे चित्रं देवानामिति यजमानाय प्रयच्छति। यजमानस्तांस्तूष्णीं भक्षयति । चतुर्धाकरणादि । सिद्धमिष्टिः संतिष्ठते ॥ १९॥

वैश्वदेवी९ सांग्रहणीं निर्वपेद्ग्रामकाम इति । पृषत्याः पृषद्वत्सायै दुग्धे वत्सायै चरुं घृत इत्येकेषाम् । ध्रुवोऽसि ध्रुवोऽह९ सजातेषु भूयासमिति परिधीन्परिदधाति । विश्वे देवा विश्वे देवा इति याज्यानुवाक्ये । आमनमस्यामनस्य देवा इत्यामने तिस्र आहुतीर्जुहोति । अप्रकृतानामनिर्दिष्टकालानां कर्मणां प्रधानानन्तर्यमित्यात्रेयः । अन्तमागन्तूनीति बादरायणः ॥ १० ॥ २० ॥ ४ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे द्वाविंशप्रश्ने चतुर्थः पटलः ।

उत्तरया ग्रामकामो यजेत । साग्रहण्या यक्ष्ये । सांग्रहणीय९ हविः । पात्रसादने स्थाली स्फ्यश्च द्वंद्वम् । नवनीते श्रपयतीत्यापस्तम्बः। घृत इति सूत्रकारः । प्रणयनपक्षे

मक्षन्नवनीतं द्रोणेप्याम्येवमाहूहेन । आज्यवन्नवनीतशब्देन नपुंसकलिङ्गेन प्रयोगः। यजुरुत्पूते नवनीते श्रपणं विश्वेभ्यो देवेभ्यो जुष्टमित्यादि । ध्रुवोऽसि ध्रुवोऽहमिति परिधीन् । अस्मिन्पठिते नारिष्ठान्हुत्वा—आमनसीमित्युपहोमः । स्विष्टकृदादि समानम् । विश्वे देवा ऋतावृधः, विश्वे देवाः शृणुतेमꣳ हवामिति याज्यानुवाक्ये ॥ २० ॥ ॥ १० ॥ ४ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां द्वाविंशप्रश्ने चतुर्थः पटलः ।

---

अथ द्वाविंशप्रश्ने पञ्चमः पटलः ।

---

अथाऽऽयुष्कामेष्टिमाह—

यो ज्योगामयावी स्याद्यो वा कामयेत सर्वमायुरियामिति । तस्मा एतामिष्टिं निर्वपेत्। आग्नेयादीनि पञ्च पात्रसंमार्दनकाले खादिरं चतुःस्रक्तिपात्रं प्रयुनक्ति । मौञ्जं च प्रवृत्तं शतमानस्य कृतम्। अथो खलु यावतीः समा एष्यन्मन्येत तावन्मानꣳ स्यादिति विज्ञायते ॥ १ ॥ यमवर्मैतन्नवनीतममवदित्याज्यमवेक्ष्याऽऽज्यग्रहणकाले तूष्णीमादितः खादिरे चतुर्गृहीतं गृहीत्वाऽपेवरामुगृह्णाति । सादनकाल उत्तरेण ध्रुवाꣳ सादयति । तस्मिन्प्रवृत्तमवदधाति । आयुष्ट आयुर्दा अग्न आप्यायस्व सं तेऽव ते हेड उदुत्तमं प्र णो देव्या नो दिवोऽग्नाविष्णू अग्नाविष्णू इति याज्यानुवाक्याः ॥२॥ अग्निर्नः प्राणोऽसीति चतुर उपहोमाञ्जुहोति ॥३॥ खादिरमाज्यं तदग्रेणाऽऽहवनीयं पर्याहृत्य दक्षिणेनाऽऽहवनीयमन्तर्वेदि निदधाति ॥ ४ ॥ तद्यजमानोऽवेक्षते घृतस्य धारामृतस्य पन्थामिति ॥ ५ ॥ अथास्य ब्रह्मा दक्षिणं हस्तं गृह्णाति । ब्रह्मण इन्द्राग्नी मा

हस्तमन्वारभ्य यजमानं पर्याहुः पावमानेन त्वा स्तोमेनेति ॥ ६ ॥ अथैतद्यजमानो हिरण्याद्घृतं निष्पिबतीममग्न आयुषे वर्चसे कृधीति निष्पिबन्तमभिमन्त्रयते ॥ ७ ॥ उद्धृत्य प्रवृत्तं प्रक्षाल्य दक्षिणे कर्णे यजमानः प्रदक्षिणमाबध्नाति । आयुरसि विश्वायुरसीति ॥ ८ ॥ अथास्याध्वर्युर्दक्षिणꣳ हस्तꣳ साङ्गुष्ठं गृह्णात्यग्निरायुष्मानिति षड्भिः पर्यायैः ॥ ९ ॥ स्विष्टकृत्प्रभृति ॥ ११ ॥ सिद्धꣳ संतिष्ठते ॥ १० ॥

ज्योगामयाविनो रोगपरिहारार्थमरोगस्य चापमृत्युपरिहारार्थमियं पञ्चहविष्केष्टिः । आयुष्कामो वोत्तरया यजेत । इष्ट्या यक्ष्ये । चिररोगनिवृत्त्यर्थं शरीरदार्ढ्यार्थं वा शतायुष्यार्थं वेति संकल्पवाक्यनिर्देशः । पात्रसादनकाले खादिरं पात्रं चतुष्कोणं प्रयुनक्ति । सौवर्णं च प्रवृत्तं शतगुञ्जैः परिमितं, शतमानं शतगुञ्जासंमितं कुण्डलाकारं कर्णवेष्टनमाभरणं, तयोरप्राकृतत्वात्प्रकल्पनमात्रमेव प्रवृत्तस्य प्रमाणम् । 'अथो खलु यावतीः समा एष्यन्मन्येत' (तै० सं० २--३--११) इति ब्राह्मणोक्तम् । मनुष्याणामायुष्यं शतं, तत्र यजमानस्य यावन्त्यायूंषि गतानि तानि विहाय, भविष्यदायुःसमानैर्गुञ्जैः परिमितं षष्टिवर्षस्य चत्वारिंशत् । एवं सर्वत्र द्रष्टव्यम् । अथवा रुग्णो यजमानो यावतो भाविनः संवत्सरान्प्राप्नोतित्यध्वर्युर्मन्येत तावद्भिर्मानैः परिमितं कर्तव्यम् । मानशब्दो गुञ्जाबीजं ब्रूते । रुग्णस्यातीतमायुः परित्यज्याऽऽगामिन आयुषो यावन्तः संवत्सरा एतस्य मनसि निश्चितास्तावद्भिर्गुञ्जाबीजैः परिमितमित्यर्थः ।

पात्रसादनकाल एकोनत्रिंशत्कपालानि स्थालीद्वयं च स्रुच्यश्च द्वंद्वं प्रकृतिवत्सर्वाण्यासाद्य खादिरं चतुरश्रं नु(कु)ण्डलाकारं पात्रमित्यासादयति । निर्वापकाले अग्नये जुष्टं० सोमाय जुष्टं० वरुणाय जुष्टं० सरस्वत्यै जुष्टं० अग्नाविष्णुभ्यां जुष्टं० इत्यादि यथाभागं व्यावर्तध्वम् । + इदमग्नेर्वरुणस्याग्नाविष्ण्वोः पुरोडाशीयानिदं सोमस्य सरस्वत्या इति पर्ययान् ।

---

+ अत्र हिरण्यकेशिसूत्रानुसारेण इदमग्नये च वरुणाय चाग्नाविष्णुभ्यां चेत्यादि चतुर्थीविभक्तिचकारघटितं देवतादेशनवाक्यकल्पनं न्याय्यम । हिरण्यकेशिकाम्येष्टिप्रयोगग्रन्थे च तथैवोल्लेखो दृश्यते । षष्ठीसहितं चकाररहितं च प्रकृतवाक्यमण्डिवलाग्रं दृश्यते । तदनुसारेणात्र टीकाकृता निविष्टमिति भाति । अण्डिवलाया आपस्तम्बसूत्रानुसारित्वादापस्तम्बे तथैव देवतादेशनवाक्योक्तेः संभवेन युक्तं भवत्वाण्डिवलावाक्यम् । तथाऽपि हिरण्यकेशिकाम्येष्टिप्रयोगग्रन्थस्य सत्याषाढसूत्रानुसारित्वात्तद्वाक्यलेखनमेव युक्तमुत्पश्याम । तथा च हिरण्यकेशीयेऽत्र प्रयोगेऽण्डिवलानुसारिदेवतादेशनवाक्यलेखनमयुक्तमेवेति विचारणीयं सुधीभिः ।

पिण्डं कृत्वा यथाभागं व्यावर्तध्वामिति प्रथमं, व्यावर्तेथामिति चरू, पुनर्यथाभागं व्यावर्तेथामिति पुरोडाशौ । इदं सोमस्य सरस्वत्या इति चरू । इदं वरुणस्येदमग्नाविष्णवोरिति पुरोडाशौ । यन्नवमैत्तन्नवनीतमभवदित्याज्यमवेक्ष्येति वचनादनेन प्राकृत आज्यमसीत्यवेक्षणमन्त्रो बाधितः । आज्यग्रहणकाले खादिरपात्रे चतुष्कोणे तूष्णीं चतुर्गृहीतं गृहीत्वाऽऽज्यानीष्टचर्यानि गृह्णाति । आज्यस्थाल्या एव खादिरस्याज्यानामासादनकाले ध्रुवामासाद्योत्तरेण ध्रुवायाः सादयित्वा तस्मिन्खादिरस्थ आज्ये प्रवर्तं(वृत्त)मादधाति । स्रुवस्यं सादनादि । हविर्भिः प्रचर्य नारिष्ठान्हुत्वा—अश्विनोः प्राणोऽसीनीन्द्रस्य प्राणोऽसि मित्रावरुणयोः प्राणोऽसि विश्वेषां देवानां प्राणोऽसि, इति चतुर उपहोमान्हुत्वा संपातेन प्रवर्त(वृत्त)मभिघारयति । राडसीति चतुर्भिर्यत्खादिरमाज्यं तदग्नेर्ग्रहणादाहवनीयम् । पर्याहृत्य दक्षिणस्यां वेदिश्रोण्या सादयित्वा तदाज्यं यजमानोऽवेक्षते घृतस्य धारामभृतस्य पन्थामित्यादि गव्यैरयदित्यन्तः । अथ ब्रह्मा यजमानस्य हस्तं गृह्णातीतर ऋत्विजः सर्वे ब्रह्मणो हस्तमन्वारभ्य यजमानं पर्याहुः पारिगच्छन्त आहुः पावमानेर्न त्वा० जीवनस्याया इत्यन्तः । अथ यजमानो हिरण्याद्धृतं निष्पिबति, हिरण्यक्षग्घृतं निःशेषं पिबति । तूष्णीं पिबन्तं यजमानं—इममग्न० मरदधिर्यथाऽसदित्यन्तः, इत्यनेनाभिमन्त्रयतेऽध्वर्युः । अथोद्धृत्य हिरण्यं खादिरात् ( प्रक्षाल्याऽऽयुष्ट इति यजमानाय प्रयच्छति । प्रवर्तं(वृत्तं), यजमान आचम्य प्रतिगृह्य प्रदक्षिणं दक्षिणे कर्णे आबध्नाति आयुरसि० आयुर्मेपाहीत्यन्तेन ) । अग्निरायुष्मानित्यनुवाकशेषेण षड्भिर्मन्त्रैर्यजमानस्य दक्षिणहस्तं गृह्णाति । तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमीत्यनुषङ्गः सर्वत्र । ततः स्विष्टकृदादि । अन्वाहार्यमेव दक्षिणा । आयुष्टे विश्वतोऽदधदायुर्दा इत्याग्नेयस्य । आप्यायस्व सं त इति सोमस्य । अव ते हेड, उदुत्तममिति वरुणस्य । प्र णो देव्या नो दिव इति सरस्वत्याः । अग्नाविष्णू अग्नाविष्णू इत्यग्नाविष्णवोः । सिद्धमिष्टिः संतिष्ठते ॥ ११—१० ॥

अथाश्वप्रतिग्रहेष्टिमाह—

ऋत्विजोऽश्वप्रतिग्रहे वारुणी । यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेदेकमतिरिक्तमिमं मे वरुण तत्त्वा यामीति याज्यानुवाक्ये ॥ ११ ॥

अश्वदात्रिष्टिरिति मीमांसकाः । उपक्रमोपसंहारवशेनाश्वप्रतिग्रहीतुरिष्टिरिति केचित् । सूत्रकाराभिप्रायस्त्वेवम् । इष्ट्या यजेत । वरुणपाशमोक्षार्थामिति । यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत् । वरुणाय जुष्टमित्यादि । इमं मे वरुण तत्त्वा

यामीति याज्यानुवाक्ये । लौकिके वैदिके च बहुत्वे पुरोडाशानां तन्त्रेण ( प्र )क्षेपः । द्विप्रभृतिषु चैकमतिरिक्तं निर्वपेदिति । त्रैयम्बकवत्प्रयोगस्तन्त्रेणैकमतिरिक्तमिति ॥ ११॥

यद्यपरं प्रतिग्राही स्यात्सौर्यमेककपालं निर्वपेत् ।
उदु त्यं चित्रमिति याज्यानुवाक्ये ॥ १२ ॥

यद्यपरं प्रतिग्राही स्यादिति । अश्वप्रतिग्रहं कृत्वा वारुणेष्टिमपि कृत्वा पुनश्चाश्वप्रतिग्रहेष्टिं कुर्यात् । एकं द्वौ बहून्वा तावतो वारुणाश्चतुष्कपालान्निर्वपेत्सहातिरिक्तान्कृत्वा सौर्यमेककपालमनुनिर्वपेत् । याज्यानुवाक्ये उक्ते ॥ १२॥

अपोऽवभृथमवैति सामवर्जमनूयाजान्तम् । इमं मे
वरुण तत्त्वा यामीति याज्यानुवाक्ये ॥ १३ ॥

एककपालधर्मेणापरमिति कल्पे पूर्वकल्पे च वारुण्याः पूर्णपात्रस्थाने सौमिकोऽवभृथः । अवभृथे वारुणमेककपालमित्यादि सर्वं सोमवत् । न सामगानम् । प्रस्तोतुरभावात् । न वाससोः प्रक्षेपः । केचिदिच्छन्ति सौत्रामणिवत्सर्वं समिदाधानान्तं कृत्वेष्टिं समापयेत् । व्याख्याते याज्यानुवाक्ये ॥ १३ ॥

अपोनप्त्रीयं चरुं पुनरेत्य निर्वपेदपांनपात्समन्या
यन्तीति याज्यानुवाक्ये ॥ १४ ॥

अपोनप्त्रीयेण चरन्ति । इष्टया यक्ष्ये । अपांनपाद्देवता । अपांनपादा ह्यस्थादुपस्थमिति लिङ्गात् । अपांनपादे जुष्टं निर्वपामि । अपांनपाद इदं न मम इत्यादि । अपांनपादेऽनुब्रूहि । अपांनपादं यज । अपांनपादोऽहमन्नादः । अपांनपादा ह्यस्थादुपस्थं समन्या यन्तीति याज्यानुवाक्ये भवतः ॥ १४ ॥

पाप्मगृहीतस्यैन्द्रावरुणमेककपालं निर्वपेत् ॥ १५ ॥
ऐन्द्रावरुणीं पयस्यान्तं पयस्यायामवधाय प्रच्छाद्याऽऽसादयति ॥ १६ ॥ अथास्मात्पयस्यां प्रतिदिशं व्यूहति या वामिन्द्रावरुणा यतव्या तनूरित्येतैरेव पुनः समूह्य युक्तामिति मन्त्रान्तं संनमति ॥ १७ ॥
इन्द्रावरुणा युवमध्वराय, आ नो मित्रावरुणा प्र बाहवा इति याज्यानुवाक्ये ॥ १८ ॥ यो वामिन्द्रावरुणाविति पयस्याया उपहोमः ॥ १९ ॥

यः पाप्मगृहीतः स्यात्स उत्तरया यजेत । इष्टया यक्ष्ये । पापक्षयार्थमिति । अग्निमन्वाधाय दशाहरणं त्रिमन्त्रकम् । मनप्रवेशः । प्रमु( न )मयं बर्हिर्देवानि । शेषा·

बर्हिः संनद्धं भवति सर्वम् । तथेध्मम् । वेदं कृत्वा वेदिः । अन्तर्वेदि शाखाया इत्यादि कुम्भीलेपनान्तं परिवासितशकलवर्जम् । इमौ पर्णमिति शाखापवित्रनिधानं वत्सापकरणं प्रातर्दोहाय । अथाग्निपरिस्तरणाद्येककपालं स्फ्यश्च द्वंद्वं वैश्वदेववत्पुरतः । इन्द्रावरुणाभ्यां जुष्टं० । इन्द्रावरुणौ हव्य९ रक्षेथाम् । प्रोक्षणादि कपालोपधानान्तम् । ततः प्रातर्दोहकर्म निष्टपनादिसंक्षालननिनयनान्तम् । इन्द्रावरुणाभ्यां हविरिन्द्रियं, बहुदुग्धीन्द्रावरुणाभ्यां देवेभ्यः पयसि लौकिकदध्यानयनं श्लक्ष्णीकरणं पुरोडाशस्याऽऽप्यलेपं निनीयोत्तरपरिग्रहादि वैश्वदेववदाज्यग्रहणं पृषदाज्यं च । उद्वासनकाले तूष्णीं पुरोडाशमभिघार्य यस्त आत्मेति पयस्यामुद्वास्य द्वयोः पात्रयोरुद्धरणं, एकस्मिन्वेति विकल्पेन भाष्यकारेणोक्तम् । एकस्मिन्पक्ष उद्धृत्य पुरोडाशमलंकृत्य पयस्यायां पुरोडाशमवदधाति । एतयैव पयस्यया पुरोडाशं प्रच्छाद्य सहैवाऽऽसादयति भूर्भुवः सुवरिति केचित् । प्रियेणेति भाष्यकृत् । अग्नेर्जनित्रमसीत्याद्यग्निहोमान्तं वैश्वदेववदासन्नाभिमर्शनमस्मात्पुरोडाशात्पयस्यां व्यूहति या वामिन्द्रावरुणा यतव्या तनूस्तयेमम९ हसो मुञ्चतमिति चतुर्भिः प्रतिदिशं पुनः समूहति दिशं प्रच्छादयति । नव प्रयाजाः । अवदानकाले सहैव पयस्यया पुरोडाशस्यावद्यति । मा भेर्मा संविक्था मा वाँ हि९सिषं मा वां तेजोऽपक्रमीद्भरतमुद्धरतमनुषिञ्चतमवदानानि वां प्रत्यवदास्यामि नमो वामस्तु मा मा हि९सिष्ट (देवदानीयान्तद्वामा) आप्यायतां पुनस्तन्त्रेण प्रक्षेपः । इन्द्रावरुणयोरहं देवयज्यया (सहदो) जेमानं महिमानं गमेयं, इन्द्रिया, अपि वा—उपहोमकाले नारिष्ठान्हुत्वा यो वामिन्द्रावरुणाविरयष्टो । स्विष्टकृत्प्रभृति । प्रथमजो वत्सो दक्षिणा । नवानूयाजाः । परिधीन्प्रहृत्य वाजिनचर्या । त्रीणि समिष्टयजू९षि । ब्राह्मणतर्पणान्तं संतिष्ठते ॥ १९ ॥

अग्नये प्रवत इति त्रिहविः प्रमायमाग्निरिति याज्यानुवाक्याः ॥ २० ॥

उत्तरया भ्रातृव्यवान्यजेत । इष्ट्या यक्ष्ये । शत्रुनयार्थमिति । चतुर्विंशतिः कपालानि स्फ्यश्च द्वंद्वम् । अग्नये प्रवते जुष्टं० । अग्नये विबाधवते जुष्टं० । अग्नये प्रतीकवते जुष्टं० । अग्ने प्रवन्हव्य९ रक्षस्वाग्ने विबाधवन्हव्य९ रक्षस्वाग्ने प्रतीकवन्हव्य९ रक्षस्वेत्यादि । अग्निं प्रवन्तं यज । अग्निं विबाधवन्तं यज । अग्निं प्रतीकवन्तं यज । सर्वेषामन्नादः । प्र प्रायं प्र ते याक्षि, विपाजसा विज्योतिषा, ॥ त्वमग्ने त९ सुप्रतीकम् । इति याज्यानुवाक्याः ॥ २० ॥

इन्द्रायाऽ९होमुच इति त्रीण्य९होमुचे विवेष यन्मा वि न इन्द्रेन्द्र क्षत्रमिन्द्रियाणि शतक्रतोऽनु ते दायीति याज्यानुवाक्याः ॥ २१ ॥

उत्तरया भ्रातृव्यवान्यजेत । विजित्या यक्ष्ये । वैजतं हविः । केचिद्विजित्येष्ट्या यक्ष्ये । शत्रुजयार्थमिति । त्रयस्त्रिंशत्कपालानि स्फ्यश्च द्वंद्वम् । इन्द्रायांऽहोमुचे जुष्टं । इन्द्राय वैमृधाय जुष्टं० । इन्द्रायेन्द्रियावते जुष्टं० । सर्वेष्वेकादशकपालेष्विति भाष्यकृत् । तथा च ब्राह्मणे-त्रयस्त्रिंशत्कपालमिति पुरोडाशत्रयार्थानां वादः । अंऽहोमुचे विवेष यन्मा, वि न इन्द्रेन्द्र क्षत्रमिन्द्रियाणि शतक्रतोऽनु ते दायीति याज्यानुवाक्याः ॥ २१ ॥

अग्नये संवर्गाय पुरोडाशमष्टाकपालं निर्वपेत् । तं शृतमासन्नमेतेन यजुषाऽभिमृशेदोजोऽसि सहोऽसीति । युक्ष्वा हि देवहूतमानिति पञ्चदश सामिधेनीरन्वाह नित्यया परिदधाति । कुवित्सु न इति याज्यानुवाक्ये । उत्तरे संयाज्ये ॥ २२ ॥

भ्रातृव्यवानुत्तरया यजेत । इष्ट्या यक्ष्ये । शत्रुजयार्थमिति । अष्टौ कपालानि स्फ्यश्च द्वंद्वम् । अग्नये संवर्गाय जुष्टं० । अग्ने संवर्ग हव्यं० इत्यादि । हविरासाद्य, ओजोऽसि सहोऽसीति । अभि भूरित्यन्तेनाध्वर्युरभिमृशति । न यजमानः करणत्वात् । अप्रत्यगाशीष्ट्वाच्च । ननु-सत्यं प्रपद्ये० इत्यादिक एको हौत्रकाण्डः । उभा वामिन्द्राग्नी० इत्यादिरन्त्यानुवाकात्मकोऽपरः । तयोर्मध्ये युक्ष्वा हि ( २-६-११ ) इत्यनुवाको न समाम्नातः । तत्कथमस्य हौत्रत्वम् । समाख्ययेति वदामः । यथा तयोः काण्डयोर्याज्ञिकानां समाख्यया हौत्रत्वं तथाऽस्याप्यनुवाकस्येति द्रष्टव्यम् । युक्ष्वा हि देवहूतमानिति पञ्चदश सामिधेनीरन्वाहेति । युक्ष्वा हीति त्रिः प्रथमामन्वाह तैः सह द्वादश नित्यया परिदधाति । आजुहोत, त्वं वरुण इति चैतयोरन्यतरस्य त्रिरुत्तमामित्युक्तत्वात् त्रिर्वचनम् । नात्र धाय्ये पञ्चदश सामिधेन्यः । कुवित्सु नो गा नो असिस्निति याज्यानुवाक्ये । यस्याजुषन्नमस्विनः, विद्मा हि त इति स्विष्टकृतः । अवशिष्टा विकल्पार्थाः । इदमपरं याजुषं हौत्रम् ॥ २२ ॥

प्राजापत्यो गार्मुतश्चरुः प्रजाकामस्य प्रजापते, स वेद पुत्र इति याज्यानुवाक्ये ॥ २३ ॥

प्रजाकाम उत्तरया यजेत । इष्ट्या यक्ष्ये । प्रजामवाप्नवानीति । प्राजापत्यं गार्मुतं चरुं निर्वपेत् । प्रजापतये जुष्टं निर्वपामीत्यादि । उक्ते याज्यानुवाक्ये ॥ २३ ॥

सोमापूषणेति सोमापौष्णस्य ॥ २४ ॥

पशुकाम उत्तरया यजेत । इष्ट्या यक्ष्ये । पशुमान्भूयासमिति । सोमापौष्णं गार्मुतं

चरुं निर्वपेदिति । सोमापूषभ्यां जुष्टं० इत्यादि । सोमापूषणेमौ देवाविति याज्यानुवाक्ये ॥ २४ ॥

चित्रापूर्णमासे निर्वपेत्पशुकामस्याऽऽग्नेयादीनि स-
प्ताग्निना रयिमश्नवदिति याज्यानुवाक्याः । अग्ने
गोभिर्न आगहीत्युपहोमाः ॥ २५ ॥

चैत्रपौर्णमास्यां चित्रेष्ट्या यक्ष्ये । पशुमान्भूयासमिति । चैत्रं हविरिदमेषामुक्तानि देवतानि । अनुक्तानि हवींषि सौम्यसरस्वतीसिनीवालीवर्जं सर्वे पुरोडाशाः । अनादेशे प्रकृतिः प्रत्येतव्या इति न्यायात् । एकोनत्रिंशत्कपालानि तिस्रः स्थाल्यः स्फ्यश्च द्वंद्वं, इत्यादि । अग्नये जुष्टं० सोमाय जुष्टं० त्वष्ट्रे जुष्टं० सरस्वत्यै जुष्टं० सरस्वते जुष्टं० सिनीवाल्यै जुष्टं० इन्द्राय जुष्टं० । अग्ने हव्यꣳ रक्षस्वेत्यादि । यथाभागं व्यावर्तध्वम् । इदमग्नेस्त्वष्टुः सरस्वत इन्द्रस्य पेषणार्थान् । सोमस्य सरस्वत्याः सिनीवाल्याश्चर्वर्थान् । पिण्डं कृत्वा व्यावर्तध्वम् । पुनश्च व्यावर्तयामिति सकृत् । क्रमेणाभिश्रयणमन्तरितमित्यादि । सरस्वत्या अहं० वाचमन्नाद्यं पुषेयं, अग्निना रयिं, गोभिꣳ अग्ने इत्याग्नेयस्य । आप्यायस्व, सं त इति सौम्यस्य । इह त्वष्टारमग्रियं, तन्नस्तुरीपमधेति त्वाष्ट्रस्य । प्र णो देव्या नो दिव इति सरस्वत्याः । पीपिवांसं यस्य व्रतमिति सरस्वतः । सिनीवालि पृथुष्टुके, या सुपाणिरिति सिनीवाल्याः । इन्द्रं वो विश्वतस्परीन्द्रं नर इत्यैन्द्रस्य । अवशिष्टा विकल्पार्थाः । नारिष्ठान्हुत्वाऽग्ने गोभिः (तै० सं० २–४–५ ) इति सप्त उपहोमाः ॥ २५ ॥

अथ कारीरीष्टिः प्रतिपाद्यते—

पुष्कलेषु नक्षत्रेषूद्वसाय ॥ १२ ॥ २६ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे द्वाविंशप्रश्ने पञ्चमः पटलः ।

पुष्कलेषु नक्षत्रेषु पुण्येषु नक्षत्रेषु बहुवचनान्तेषु नक्षत्रेषु वा वार्षिकेषु वा नक्षत्रेषु वा ॥ १२ ॥ २६ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां द्वाविंशप्रश्ने पञ्चमः पटलः ।

---

अथ द्वाविंशप्रश्ने षष्ठः पटलः ।

---

कारीर्या वृष्टिकामो यजेत ॥ १ ॥

उत्तरया वृष्टिकामो यजेत । कारीर्या यक्ष्ये। वार्षिकामावा( वर्षणभवना )र्थमिति संकल्पः ॥ १ ॥

अग्नीनन्वाधाय दक्षिणेनाऽऽहवनीयं मारुतमसि मरुतामोज इति कृष्णं वासः कृष्णतूषं यजमानः परिधत्ते । अप उपस्पृश्य ॥ २ ॥

शालाभूतं देवयजनं कृत्वा समारोप्योदवसाय मथित्वाऽऽयतने निधाय विद्युदसीति। ततोऽन्वाधानान्ते, कारीरीयश्च हविरिदमेषां मयि । अन्वाधानजपान्तेऽपरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्योपविश्य यजमानो मारुतमसि० धारां भिन्धीति कृष्णं वस्त्रं परिधत्ते सदशम् । अपामुपस्पर्शनं श्रौतम् ॥ २ ॥

रमयत मरुतः श्येनमायिनमिति पश्चाद्वातं प्रतिमीवति पुरोवातमेव जनयत्येहि वातेति । कृष्णोऽश्वः पुरस्तात्प्रत्यङ्मुखोऽवस्थितो भवति ॥ ३ ॥ तमेतेन वाससाऽभिपिनष्ट्यभिक्रन्दयति यदि क्रन्देद्विधूनुयाच्छकृन्मूत्रं वा कुर्याद्वर्षिष्यतीति विद्यात् ॥ ४ ॥

अथाध्वर्युः रमयत मरुतः० स्वस्तीति पश्चाद्वातं प्रतिमीवति प्रतिबध्नाति । मन्त्रोच्चारणमेव निरोधः । एहि वातेति पुरोवातमेव जनयति । उच्चारणमेव कल्पजो मन्त्रः । कृष्णवर्णोऽश्वः पुरस्ताद्देवयजनस्य प्रत्यङ्मुखोऽवस्थितो भवति । यजमानः परिहितेन वाससाऽश्वमभिपिनष्टि संमार्ष्टि । अभिक्रन्दस्तनयेत्यृचाऽध्वर्युर्यजमान एवेत्युपदेशः । सोऽश्वो यदि क्रन्देत शब्दं कर्वीत कम्पयेद्वाऽश्वो यदि शकृन्मूत्रं वा कुर्याद्वर्षिष्यतीति जानीयात् ॥ ३ ॥ ४ ॥

पुरोवातो वर्षन्नित्यष्टौ वातनामानि हुत्वाऽन्तर्वेदि कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमाऽऽस्तृणाति ॥ ५ ॥

अवस्फूर्जन्विद्युद्वर्षन्भूतरावृत्स्वाहा इत्यन्तः। अष्टौ वातनामसंज्ञिका आहुतीर्जुहोति । अन्तर्वेदि कृष्णाजिनं प्राचीनग्रीवमित्यादि ॥ ५ ॥

तस्मिन्खर्जूरसक्तून्करीरसक्तून्निदधाति मान्दा वाशा इति कृष्णमधुपा संयुत्य तिस्रः पिण्डीः

कृत्वा पुष्करपलाशेषूपवेष्ट्य वृष्णो अश्वस्य संदानमसीति कृष्णेनाश्वदाम्नोपनह्यति ॥ ६ ॥

तस्मिन्खर्जूरसक्तून्करीरसक्तून् सोमाकृतेर्वृक्षस्य फलस्य चूर्णम् । तयोरन्यतरसक्तून्कृष्णमधुना( ना ) संयुज्य कृष्णमधुना भ्रामरेण मधुना मान्दा० वाशा० माऽवत, इत्यन्तेन संयुज्य तिस्रः पिण्डीः कृत्वा, पिण्डानीत्यर्थः । पुष्करपलाशैर्बद्ध्वा कृष्णा० जिने निधाय समुच्चय्य व्याख्यातं वृष्णो अश्वस्य० नह्यामीत्यन्तेन कृष्णेन दाम्ना बध्यते ॥ ६ ॥

उत्करे प्रागीषं त्रिगर्वं त्रिच्छदिरनपस्थितं भवति । देवा वसव्या इति तस्योत्तमे छदिषि कृष्णाजिनमाबध्नाति ॥ ७ ॥ अहोरात्रावसक्तं भवति ॥ ८ ॥

एष्वेव संभृतेषु उत्करे प्रागीषं त्रिगर्वं त्रिच्छदिरवस्थितं भवतीति । केचिदेकैव कुटिः । अस्मिन्त्रीणि च्छदींषि भवन्तीति । एवमनसो लक्षणम् । गाणा छादिरित्यर्थः । देवा वसव्या, सूर्यायाऽवत इति मन्त्रान्तः । उक्तो दृत्तेति त्रिष्वनुषङ्गः । अतोऽनुमन्त्रेण सह पूर्वस्मिञ्छदिषि कृष्णाजिनमाबध्नीयात्तथाऽऽबध्याहोरात्रं तिष्ठेत् ॥ ७ ॥ ८ ॥

यदि वर्षेत्पिण्डीरेव जुहुयात् ॥ ९ ॥

एवमाबद्धे कृष्णाजिने यदि वर्षेत्पर्जन्यस्तदा पिण्डीरेव जुहुयात् ॥ ९ ॥

यदि न वर्षेद्देवाः शर्मण्या इति मध्यम आबध्नाति । अहोरात्रावसक्तं भवति । यदि वर्षेत्पिण्डीरेव जुहुयात् । यदि न वर्षेद्देवाः सपीतय इति जघन्य आबध्नाति । अहोरात्रावसक्तं भवति । यदि वर्षेत्पिण्डीरेव जुहुयात् । यदि न वर्षेच्छ्वोभूते त्रीणि धामच्छदादीनि कृष्णानां व्रीहीणां निर्वपति ॥ १० ॥ तान्यासाद्योपरतः कृष्णाजिनमासादयति ॥ ११ ॥ त्वं त्या चिदच्युतेति याज्यानुवाक्याः ॥ १२ ॥

यागो वा दर्विहोमो वाऽऽदावेवाग्निमन्वाधायेति वचनात् । यागो जुहोतिचोदितत्वाद् दर्विहोमो वा । दर्विहोमपक्षे दिवा चिरतम इति प्रथमपिण्डस्य होममन्त्रः । असितवर्णा इति धूमानुमन्त्रणम् । आ यं नर इति द्वितीयस्य होममन्त्रः । उदीरयथा

मरुत इति तृतीयस्य होममन्त्रः । असितवर्णा इति धूमानुमन्त्रणम् । मरुतिपिण्ड्य इत्यापस्तम्बवचनादुभयपक्षे मरुत एव पिण्डीनां देवताः । होमान्तमेव कर्म । यागपक्षे ब्राह्मणभोजनान्तम् ।

तत्र प्रयोगः—अन्वाधानं पूर्वमेवोक्तम् । अमावास्यातन्त्रम् । तस्मादनन्तरं व्रतप्रवेशः । अथ बर्हिराहरणादिप्रागुत्तरात्परिग्रहात्कृत्वाऽथोत्करे स्तम्बयजुर्हरणादिवेदिधर्मा अनर्थलुप्ता भवन्ति । अथ परिस्तृणातीत्यादिप्रधानोत्करं प्रागग्रं कृत्वा बर्हिस्तरणं परिधानादि वेद्यां विधृती निधाय प्रस्तरमेव स्तृणाति । तस्मिन्स्रुचः सादयति । केचिदत्रापि सबर्हिः प्रस्तरः । पिण्डीनां तूष्णीमभिघारणम्—आर्द्रो भुवनस्येति । केचिद्देवस्त्वा सवितेति । प्रियेणेत्यासादनम् । उत्करे सादयति । अपतो(तं) मरुतो भुवनाद्युदतामित्यादि । आज्यभागाभ्यां प्रचर्य पिण्डानां यागक्रमेण त्रयाणां मरुतो देवताः । असितवर्णा इति तिस्रः । ( षट् याज्यानुवाक्याः ) । मरुतो यज । अत्रापि धूमानुमन्त्रणं, केचित्पिण्डानां तन्त्रेण प्रक्षेपः । असितवर्णा इत्येतयाऽनुमन्त्रणं च न सर्वहुतापाने । दक्षिणान्वाहार्यमेवेति केचित् । कृष्णं वास इत्यादि ब्राह्मणतर्पणान्तम् । अवर्षपक्ष एवं प्रयोगः—यदि न वर्षेत्पर्जन्यो देवाः शर्मण्या इत्यत्रोद्वो दत्तेति मध्यमे छदिषि बध्नीयात् । अहोरात्रावसक्तमिति व्याख्यातम् । यद्येवमपि कृते न वर्षेत्पर्जन्यो देवाः सपीतयः,उद्वो दत्तेति चापरस्मिन्छदिषि बध्नीयात् । अहोरात्रावेति व्याख्यातम् ।एवमपि कृते न वर्षेत्पर्जन्यस्त्रिष्वपि यावत्सु श्वोभूते चतुर्थेऽहनि धामच्छदादीनां प्रयोगः—अन्वाधानं पूर्वमेवोक्तम् । अमावास्यातन्त्रं व्रतप्रवेशो वैश्वदेववत् । बर्हिराहरणादि । प्रसूनमयादीनि षोडश कपालानि स्फ्यश्च द्वंद्वं पूर्वस्मिन्पृषदाज्यधानीं सर्वे एककपालधर्माः केचिन्न प्रभ(पृषदा)ज्येति । अग्नये धामच्छदे जुष्टं०। मरुद्भ्यो जुष्टं०। सूर्याय जुष्टं०। अग्ने धामच्छद्धव्यमित्यादि । कृष्णव्रीहिभिरेव नियम्यते । कृष्णोष्णीष इति लोहितोष्णीष इत्यादिवत् । पूर्वमेव व्याख्यातम् । पुरोडाशानधिश्रित्याऽऽप्यलेपं निनीयोत्करे पूर्वस्मिन्नेव धर्मा अनर्थलुप्ता भवेयुः । विभज्य बर्हिस्तरणं वेद्यां हविरासादनं कृत्वा उत्करे प्रियेणेति पिण्डीरासादयति । अग्निमन्थनादि । अग्नये धामच्छदेऽनुब्रूहि । एवं यज । मारुतेन प्रचर्य, सौर्येणैककपालेन प्रचरति । संसर्पोऽसीत्यग्निहोमः । केचिन्मध्यम(धु)श्चोति । त्वं त्या चिदच्युताग्ने भूरीणीति धामच्छदः । दिवो नो वृष्टिं पिन्वन्त्यप इति मरुतः । उदु त्यं चित्रमिति सूर्यस्य ॥ १० ॥ ॥ ११ ॥ १२ ॥

दिवा चित्तमः कृण्वन्तीत्येताभिः पिण्डीर्जुहोति ॥ १३ ॥

प्रतिमन्त्रं पिण्डीरावध्नातीत्यापस्तम्बः । अथ पिण्डीनां यागो होमो वा । यागपक्षेऽवदाय होमः । त्रयाणां पूर्वयाज्यानुवाक्याः । धूमानुमन्त्रणं च । होमपक्षे नारिष्ठान्हु-

त्वा दिवा चित्तम इति जुहोति । तिसृभिरितस्र आहुतयो धूमानुमन्त्रणं च ॥ १३ ॥

अथाऽऽसां धूममुद्यन्तमनुमन्त्रयतेऽसितवर्णा हरय इति ॥ १४ ॥

आसामाहुतीनामित्यर्थः ॥ १४ ॥

उत्करे कृष्णामामपक्वां स्थालीमद्भिः पूरयति सृजा वृष्टिमिति ॥ १५ ॥

समुद्रं पृणेत्यन्तः । यावद्बिलं तावदद्भिः पूरयतीत्यर्थः ॥ १५ ॥

यदि भिद्येत वर्षिष्यतेति विद्यात् ॥ १६ ॥

गतार्थः ॥ १६ ॥

अनस उपस्तम्भने शङ्कौ वा कृष्णाऽविर्बद्धा भवत्यब्जा असीति तस्यामश्वविज्ञानमुपैति ॥ १७ ॥

समुद्रियमित्यन्तः । अनस उपस्तम्भनेऽस्मिन्शङ्कौ वा कृष्णवर्णाऽविर्बद्धा भवेत् । स्फुटार्थं तस्यामेडकायामश्ववद्विज्ञानमुपैति ॥ १७ ॥

उत्करे वर्षाह्वस्तम्बं प्रतिष्ठाप्योत्रमय्य पृथिवी-मिति वर्षाह्वां जुहोति ॥ १८ ॥

वर्षाह्वः पुनर्नवा । दृतिमित्यन्तः । आज्येनाप्यां पूर्णं स्रुवमित्येके । पुनर्नवाकृतिर्वर्षा-हुस्तम्ब इत्येके ॥ १८ ॥

तमाहवनीयेऽनुप्रहृत्य हिरण्यकेशो रजसो विसारं इति धूममुद्यन्तमनुमन्त्रयते ॥ १९ ॥

तं पुनर्नवायाः स्तम्बम् । न सत्या इत्यन्तया । चतसृभिरित्येके ॥ १९ ॥

ये देवा दिविभागा इत्युत्करे कृष्णाजिनमवधुनोति ॥ २० ॥

विशन्त्वित्यन्तः ॥ २० ॥

और्वभृगुवच्छुचिमिति संयाज्ये ॥ २१ ॥

स्विष्टकृदादिपिण्डीनामपि तन्त्रेण । स्पष्टमन्यत् ॥ २१ ॥

कृष्णं वासः कृष्णोऽश्वः कृष्णाविर्दक्षिणा ॥ २२ ॥

नपुंसकबहुवचनेनोहः । सहस्रधारा गीत्यादि च । संतिष्ठत इष्टिः ॥ २२ ॥

अथ सर्वकारीर्याग्नेय एवाष्टाकपालोऽनुपसर्ग स्तस्योपहोमा वातनामानि याभिः कृष्णाजिनमावध्नाति याभिः पिण्डीर्जुहोति याभ्यां च धूममुद्यन्तमनुमन्त्रयते ॥ २३ ॥

सवकारिकर्मसु (अथ सवकारीर्या) वक्ष्ये वर्षार्थम् । सवकारीरीयं हविः । उदवसाय मन्थनादि पूर्ववत् । न तु पिण्ड्यः । एकाह साध्यः । आग्नेय एवाष्टाकपालोऽनुपसर्गः। वर्षाहुर्होमश्च । असित वर्णा हिरण्यकेश इति चाऽऽग्नेयस्य च कृष्णं वास इति दक्षिणा स्पष्टमन्यत् ॥ २३ ॥

सहस्रदक्षिणाकस्य ज्योतिर्विश्वज्योतिरघोर्याममहाव्रतादेरनुष्ठानसिद्धिं प्रति साधनत्वमाह—

पूर्ववत्रिधातुमधिश्रयति ॥ २४ ॥

त्रैधातवीया पूर्वमेव व्याख्याता सर्वकामार्था । अभिचरन्नभिचर्यमाणः सहस्रेण यक्ष्यमाणः (तै० सं० २–४–११) सहस्रेणेष्ट्वान्यो यक्ष्य इत्युक्त्वा न यजते (२–४–११) इत्यादयोऽधिकारिणः ॥ २४ ॥

*अस्मिन्कर्मणि द्रव्यं चोदकप्राप्तं व्रीहिमयमपवदितुं यवमयं चाऽऽह—*

यवमयस्तु मध्यः । ऐन्द्रावैष्णवꣳ हविर्भवति ॥ २५ ॥

द्वादशकपालः पुरोडाशो भवति । त्रयः पुरोडाशा भवन्ति । उत्तर उत्तरो ज्यायान्भवति । यवमयो मध्यः (तै० सं० २–४–११) इत्यादि । एवं यवमयस्येतरवैलक्षण्यादित्यर्थः । त्रिधातुवात्रिष्वपि पुरोडाशेषु सकृदेव हस्तस्पर्शेनावदानम् । सर्वेषामभिगमयन्नवद्यति(२–४–११) इति ब्राह्मणे द्रव्यम् ॥ २६ ॥

प्र सो अग्न इत्युष्णिक्ककुभौ धाय्ये । अग्ने त्री ते वाजिना त्री षधस्थे ति त्रिवत्या परिदधाति । सं वां कर्मणोभा मिग्ययुरिति याज्यानुवाक्ये । उत्तरे संयाज्ये ॥ २६ ॥

एतस्यां त्रैधातवीयेष्टौ सामिधेनीरूपेण सर्वाण्यपि च्छन्दांस्यनुवक्तव्यानीत्यभिज्ञा आहुः । तत्तु सर्वच्छन्दोनुवचनं कथं घटत इति तदुच्यते—ककुप्छन्दस्त्रिष्टुभः सारम् । उष्णिक्छन्दो जगत्याः सारम् । अतस्तदुभयानुवचनेन सर्वच्छन्दोनुवचनं संपद्यते ।

प्र सो अग्न तवोतिभिरित्येषा ककुप्त्र्यधिपेषु त्रिषु पादेषु मध्यमपादस्य द्वादशाक्षरत्वात् । प्र होत्रे पूर्व्यं वच इत्येषोष्णिक्तत्र्यधिपेषु त्रिषु पादेष्वन्तिमपादस्य द्वादशाक्षरत्वात् । प्रकृतौ द्वे ऋचावुक्ते आ जुहोत दुवस्यतेति गायत्री सामिधेनी, त्वं वरुण इति जगती भवति । ते अपवदितुं त्रिष्टुभमाह—अग्ने श्री ते वाजिना, इति । सं वा कर्मणा, उभा जिग्यथुरिति याज्यानुवाक्ये । त्रीण्यायूंषि० अग्निस्त्रीणीति स्विष्टकृतः । अवशिष्टा विकल्पार्था इति भाष्यकृत् ॥ २६ ॥

हिरण्यं तार्प्यं धेनुरिति दक्षिणा ॥ २७ ॥

तार्प्यं घृताक्तवस्त्रम् । प्रतिग्रहप्रकारस्तु व्याख्यातः ॥ २७ ॥

ऐन्द्राबार्हस्पत्यं चरुं निर्वपेद्राजन्ये जात इदं वामास्ये हविरिति याज्यानुवाक्ये । हिरण्यं दाम दक्षिणा दक्षिणा ॥ १४ ॥ २८ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे द्वाविंशप्रश्ने षष्ठः पटलः ॥

---

इति सत्याषाढहिरण्यकेशिसूत्रे द्वाविंशः प्रश्नः ।

---

यं कामयेत राजन्यमनपोध्यो जायेत वृत्रान्घ्नश्चरेदिति तस्मा एतमैन्द्राबार्हस्पत्यं चरुं निर्वपेत् ( तै० सं० २–४–१३ ) इत्यादिर्ब्राह्मणे विधिर्द्रष्टव्यः । यं राजन्यं प्रत्यध्वर्युरेव कामयेत देवैरप्रतिबद्धशक्तिकोऽयं जायतां सर्वत्र निवारणशत्रूवैरिणो मारयन्नेव चरत्विति तस्येयमिष्टिः । राजन्ये जात ऐन्द्राबार्हस्पत्यश्चरुः । इष्ट्या यक्ष्ये । जातः पुत्रोऽनपोध्यो भवत्विति । वृत्रान्घ्नन्निति वा फलनिर्देशः । अनपोध्य. केनापि प्रकारेण वृत्रान्हन्तुकामो भवत्वित्युपदेशः । अन्वाधानादि । इन्द्राबृहस्पतिभ्यां जुष्टं० । इन्द्राबृहस्पती हव्यं० । इन्द्राबृहस्पतिभ्यामनुब्रूहि । इन्द्राबृहस्पती यज । इदं वामास्ये हविः । अयं वां परिषिच्यते, इति याज्यानुवाक्ये । अस्मे इन्द्राबृहस्पती बृहस्पतिर्न इति विकल्पिते याज्यानुवाक्ये । अत्रोचिता दक्षिणामाह—हिरण्मयं दाम दक्षिणा ( २–४–१३ ) इति । दाम रज्जुः । अभ्यास प्रश्नसमाप्त्यर्थः ।

यस्याऽऽहिताग्नेरन्यैराग्निभिरग्नयः संसृज्यन्त इत्यत्र विविचौटी वि ते विष्वग्वातजूतासो, त्वामग्ने मानुषीरिति विविचयस्य ( चे० ) । धाता ददातु नो रयिमिति देविकानां हविषाम् । त्वमग्ने बृहद्वय ( तै० सं० ३–४–११ ) इति देवसुवाम् । प्र देवमिति चातुर्मास्येषु च प्रणयनीया अष्टौ । उत्तरा शेषा अग्नेर्मन्यने

जातप्रणीयनीयमिति प्र ह्रियमाणायेति । अग्नेऽयं यज्ञमध्वरम् ( तै० सं० ४-१-११ ) इति वैश्वदेवस्य । इन्द्राग्नी रोचना दिवः ( ४-२-११ ) इति वरुणप्रघासस्य । अग्निर्वृत्राणि ( ४-२-१२ ) इति साकमेधानाम् । उशन्तस्त्वा (तै० सं० २-६-१२) इति पितृयज्ञस्य । वायो शतं प्र याभिरिति शुनासीरीये वायोः शुनासीरस्य सूत्रान्तर ( आपस्तम्बेन ) उक्ते । तत्र श्लोकाः---

शतकृष्णलया यक्ष्ये भक्षणं तु विधीयते ।
आज्ये प्रयाजेष्वन्वोप्य कृष्णलान्सह हूयते ॥
हिरण्यकामो नष्टे च लब्धे चेष्टिर्विधीयते ।
संसृष्टेष्टौ ध्रुवास्तित्र उच्चैरेव विधीयते ॥
न मधूदकयोर्मन्त्रो निर्वापे स्विष्टकृद्द्वयोः ।
विसृष्टेष्टौ समाश्लेपममावास्याव्रतं भवेत् ॥
अग्नीषोमीयकोऽष्टासु ॥ श्यामाकमयो भवेत् ।
आनुपूकस्तयालूनविरइडाधः ( को लूनव्रीहिपुरोडाशः ) प्रकीर्तितः ॥

तथा त्रिधातुना यक्ष्ये पुरोडाशत्रयं भवेत् ।
तथा तु सर्वपृष्ठेति नामधेयं प्रकीर्तितम् ॥
एकस्तु बहुदेवत्यः पुरोडाशो विधीयते ।
सकृत् स्विष्टकृदादिः स्यात्तिमिराद्यपनोदनम् ॥
भ्रातृव्यवतस्तु भेदेन समानीति विधानतः ।
नवनीतं प्रणेष्यामि साग्रहण्यां न वा ( आज्येक्षेयं नवं ) भवेत् ॥
*यदि ज्योगामयावी स्याच्चतुष्कोणं तु खादिरम् ।*
यावन्त्यायूंषि यष्टुश्च तावन्त्यू( श्चातीतान्यू )र्ध्वानि यानि च ॥
श( ग )तादूर्ध्वाभिः संख्याभिर्गुञ्जैर्मानैश्च संमितम् ।
प्रवर्तं कुण्डलाकारं कर्णाभरणमेव च ॥
अश्वप्रतिग्रहे दातुरिष्टिर्न्यायविदा सदा ।
अनेकेषु सहेज्या स्यादतिरिक्तं तु सर्वदा ॥
वारुण्याः पूर्णपात्रस्य स्थानेऽवभृथकर्म च ।
सोमवत्समिदाधानमिष्टेः संस्थितिरेव च ॥
अपानपाते निर्वापः पुनरश्वप्रतिग्रहे । ·
एकं कृत्वा तथाऽप्येवं कृत्वा सौर्यं तु निर्वपेत् ।

अनन्तरं तु वारुण्या संस्थाप्येष्टिस्ततः परम् ।
अपोनप्त्रीयमेव स्यादातिरिक्तं तु सर्वदा ॥
ऐन्द्रावरुण्यामूहेनाप्यवदानं विधीयते ।
प्रसूमयादि सर्वं तु वैश्वदेववदेव च ॥
विजितास्त्रिहविष्का च विजित्या यक्ष्य एव च ।
त्रयस्त्रिंशत्कपालं तु त्रयाणामनुवादकम् ॥
संवर्गेष्टौ यदोजोऽसि ह्यभिमृष्टिस्तथाऽध्वरम् ।
चित्रायां षट्पुरोडाशाः सिनीवाल्यै चरुर्भवेत् ॥
कारीर्या यक्ष्य इत्याहुः पिण्डीनां मरुतस्तथा ।
उत्तरे वेदिधर्माः स्युर्वर्षाहुस्तु पुनर्नवः ॥
सवकारीरिकानाम्न्या यक्ष्ये त्रैधातवीयया ।
तथा यवमयो मध्ये जाते राजन्य एव च ॥
न तु वैश्वानरीयोक्तं सौवर्णं दाम दक्षिणा ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां द्वाविंशप्रश्ने षष्ठः पटलः ।

---

प्रयोगचन्द्रिकायास्तु मालायाः सूत्रसंस्थितेः ।
काम्यप्रश्नस्येह कृतो निर्णयः कौस्तुभो मणिः ॥
मध्यगो यज्ञवपुषस्तुष्टयेऽस्तु मयाऽर्पितः ।
गृह्णाति हि किमप्येष भक्तैर्यद्यत्ततः कृतम् ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां द्वाविंशः प्रश्नः ।

---

अथ त्रयोविंशप्रश्ने प्रथमः पटलः ।

---

विनेययुक्ताखिलसिद्धवर्यैः सच्चिदानन्दसुखं मुनीन्द्रम् ।
नमामि सूत्रार्थविदे मुदाऽहं हिरण्यकेशाख्यगुरुं कृपाब्धिम् ॥
द्वाविंशे वर्णिता होत्रकाम्यपश्विष्टयोऽखिलाः ।
त्रयोविंशे कौकिलीयं स्याच्चेष्टे काठकानि च ॥

अत्रेदानीं कौकिल्याः कर्मोच्यते—

अथातः कौकिलीं व्याख्यास्यामः ॥ १ ॥

अथ शब्दोऽनन्तरार्थः । अतःशब्दो हेत्वर्थः । कौकिलीति कर्मनामधेयम् । कौकिली तु सप्तहविर्यज्ञसंस्थान्तर्गता नित्येति वैखानससूत्रे पाठात् । या चाग्निं चित्वा सौत्रामण्या यजेतेत्यङ्गभूता सा तु चरकसौत्रामणीति समाख्या ॥ १ ॥

तस्याः पूर्ववत्कल्पः ॥ २ ॥

तस्याः कौकिल्याः । नवम्यां प्रातरग्निहोत्रं हुत्वा कौकिल्या यक्ष्ये । तेनेश्वरं प्रीणयानीति संकल्पः । स्वर्गार्थमिति वा संकल्प्य विद्युदसीत्यादि । अथवा सारस्वतान्वारम्भणीयौ । केचित्सारस्वतान्वारम्भणीयौ नेच्छन्ति । षड्ढोता । एतानि नानाहवनीयानि । कालायसेन काललोहेन कालानुशातनेन कालेनोपधानेन कालेन कौशेयसूत्रेण च इच्छेदिति । एतानि सीसप्रत्याम्नायानि । क्लीबाद्व्रीहियवश्यामाकान् क्रीत्वा क्षौमे वाससि पृथक्पृथग्बद्ध्वा स्थापयति । व्रीहिस्तोक्मान् कुर्वन्ति ( विरोहयन्तीत्यर्थः ) । क्षौमे बन्धनमात्रं कृत्वा विरोहणोपायः कर्तव्यः । यवानामीषद्भर्जितानां चूर्णानि सूक्ष्माणि स्थूलानि च करोति । सूक्ष्माणि दध्ना तक्रेण वा संसृज्य दर्भैः सर्वतो वेष्टयित्वा स्थापयेत् स मासरः । स्थूलानि चूर्णानि मन्थेन संयुतानि कृत्वा स्थापयन्ति स नग्नहुः । संस्रावो मन्थ इति चाऽऽहुः श्रौतज्ञाः । केचिदेतान्यपि दर्भैः परीतं संवेष्टयित्वा स्थापयन्ति । श्यामाकान्सक्तून्कृत्वा नवम्यामेव वसति ॥ २ ॥

निर्वपणकाल ऐन्द्रं पशुमालभेत ॥ ३ ॥

द्वादश्यां ( दशम्यां ) प्रातरग्निहोत्रं हुत्वा ( ततः ) ऐन्द्रः पशुः । तस्य निरूढपशुवत्कल्पः ॥ ३ ॥

ऋषभो दक्षिणा ॥ ४ ॥

पश्वर्थम् ॥ ४ ॥

आदित्यं चरुम् । वत्सः ॥ ५ ॥

पश्विष्टिमैन्द्रं पशुं संस्थाप्यादितिदेवत्येन चरुणा यजेत । नानातन्त्रं चैतयोरादित्येष्टिवद् वत्सो दक्षिणा । न माता । उपरिष्टान्मातृदानामिष्टिः समाप्यते ॥ ५ ॥

पुरस्तादेव कालायसेन कालानुशातनेन कालेन
तसरेण पक्ष्मणा व्रीहियवश्यामाकान्क्रीत्वा क्षौमे

वासस्युपनद्धान्व्रीहीँस्तोक्मानि कुर्वन्ति । यवानी-
षदुपतप्तान् ॥ ६ ॥ चूर्णानि तानि दध्नोदश्विता
वा सꣳसृज्य दर्भैः परितꣳ(वा)स्य निदधाति ॥७॥
स मासरः । तेषामेव स्थूलचूर्णानि सꣳस्रावेणा-
भिषिक्तानि स नग्नहुः । श्यामाकान्सक्तून्कृत्वा
सुरायाः संधानकाले तोक्मैर्मासरेण नग्नहुना च
सुरां सꣳसृज्य सक्तूनां तृतीयेन परिकीर्य परीतो
षिञ्चता सुतमित्येकस्या गोर्दुग्धेन परिषिञ्च-
ति ॥ ८ ॥ अपरेण तृतीयेन परिकीर्यैतयैव द्वयो-
र्दुग्धेन परिषिञ्चत्यपरेण तृतीयेन परिकीर्यैतयैव
तिसृणां दुग्धेन परिषिञ्चति ( तिस्रो रात्रीः सꣳ-
सृष्टावसति ) ॥ ९ ॥ अवटस्थाने कारोत्तरमेके
समामनन्ति ॥ १० ॥

गतार्थः । एवमापस्तम्बेऽपि द्रष्टव्यम् । अङ्कुरिता व्रीहयस्तोक्माः । ईषत्तप्तानां यवानां चूर्णं द्विविधं सूक्ष्मं स्थूलं च । तत्र सूक्ष्मं चूर्णं दध्ना तक्रेण वा मिश्रितं दर्भैः प्रच्छन्नं मासरमित्युच्यते । स्थूलं चूर्णं तु मन्थेन मिश्रितं दर्भैः प्रच्छन्नं नग्नहुरित्युच्यते । तैस्तोक्ममासरनग्नहुभिः सुरायाः संसर्जनार्थे स्वाद्वीं त्वेति मन्त्रः । अत्रेयं पद्धतिः— अथ द्वादश्यामेव पूर्ववत् सुरेष्टिश्चतुरहे यज्ञाय रमतामित्यादि कौकिलीयꣳ हविरिदमेषां मयीति ।

कारोत्तरशब्देनावटस्थानीयसदृशो वेणुदलनिर्मितश्चर्मणा सर्वतः परिवेष्टितः सुराश्रपणार्थभाण्डाधारप्रदेशः । अग्रेण गार्हपत्यमवटं खात्वाऽवटस्थाने कारोत्तरं केचिच्छाखायां परिपठन्ति ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

वैदलश्चर्मणा नद्धो भवति ॥ ११ ॥

वेणुदलैरवटमवटाकृतिं कृत्वा गोचर्मणा सर्वतः संनद्धो भवति । कारोत्तरेण दधतोऽवटं त्वचीति लिङ्गात् । कारोत्तरे स्थालीमवधाय तस्यां स्थाल्यां च ॥ ११ ॥

तस्मिन्वैदलꣳ शुण्डामुखमवदधाति ॥ १२ ॥

---

१ क. ख. ग. कारोदर°।

अपरं वैदलं शुण्डामुखमुदञ्चनाकारं चर्मणा परिणद्धं बिलमवदधाति। तस्मिंश्चरुमवदधाति ॥ १२ ॥

तस्य बिलं चर्मणा परिणद्धं भवति ॥ १३ ॥

पूर्ववत् क्षिपति। चरोरधस्ताच्छिद्रम् ॥ १३ ॥

तस्मिन्यदास्रवति सा परिस्रुद्भवति ॥ १४ ॥

तस्मिञ्छुण्डामुखे स्रवणं ततस्तस्मात्तस्यां स्थाल्यामेवं कृत्वाऽवटे वा कृत्वा सुराकल्पनम्। केचित्स्थाली न भवति [किं तु] शुण्डामुखमेव। तदा शुण्डामुखस्य न त्वन्त्राण्य (शतातृण्ण )ता। सुरां संसृजति स्वाद्वीं त्वा (तै० ब्रा० २–६–१)इति पारस्कुद्रेण शाखापाठेनेत्यर्थः। श्यामाकसक्तूनां त्रिभागेणावचूर्णनमुक्तं सूत्रकारेण—सक्तूनां तृतीयेन परिकीर्य परीतो षिञ्चता सुतामित्येकस्या गोर्दुग्धेन परिषिच्येति। श्यामाकसक्तूंस्त्रेधा विभज्य तृतीयांशं सुराया उपरि विकीर्य तदुपरि दुग्धपरिषेचनार्थोऽयं मन्त्रः। अपरेण त्रिभागेण परिकीर्य परीतो षिञ्चता सुतामित्यनयैव द्वयोर्गवोः पयसा परिषिच्यापरेण तृतीयेन त्रिभागेण श्यामाकसक्तूनां चूर्णं परितः षिञ्चति। अनयैव तिसृणां गवां पयसा परिषिच्यैवं संसृज्य तिस्रो रात्रीर्वसतीति।

अथ पञ्चदश्यां पश्विष्ट्यादि। अथ वक्षाय कौकिलीयं हविः। न पशुहोता। पश्विष्टिं कृत्वा शाखाहरणम्। तूष्णीं प्लक्षशाखामित्यादि व्रतोपायनान्तम्। यूपाहुत्यादि पूर्ववत्। एको यूपः। त्रयः स्वरवः। पूर्ववद्वेदिः। शम्याप्रमाणा चोत्तरवेदिः। उरु प्रथस्वेति कृते, प्रतिप्रस्थाता चात्वालात्पुरीषमाहृत्य दक्षिणेनोत्तरमित्यादि। खरयोः प्रकल्पनं ध्रुवाऽसीत्यादि। अग्निप्रणयनकाले प्रतिप्रस्थाता खरे न्युप्योपसमाधानं करोति ॥ १४ ॥

पात्रसंसादनकालेऽश्विभ्या सरस्वत्या इन्द्राय सुत्राम्णे त्रीणि पात्राणि प्रयुनक्ति ॥ १५ ॥

पात्रसादनकाले पूर्ववत्पाशुकानि प्रयुज्याश्विनादीनामेकैकस्यै देवतायै त्रीणि त्रीणि पात्राणि प्रयुनक्ति। त्रीणि सुराग्रहार्थानि त्रीणि पयोग्रहार्थानि। एतेषां जुहूवत्कल्पः। पालाशानि त्रीण्यभिषेकार्थानि याज्ञिकैर्वृतैः कृतानि ॥ १५ ॥

त्रयान्सक्तून्यवगोधूमानामुपवाकासक्तूंश्च श्येनपत्रे वाले द्रोणे वा ॥ १६ ॥

त्रीन्सूक्ष्मकलबदरकर्कन्धूसक्तून्यवसक्तून्गोधूमसक्तूनुपवाकासक्तून्। उपवाका अशूका अचूलिकास्तेषां सक्तूंश्च। श्येनपत्रद्वयं च ॥ १६ ॥

पाशुकान्याज्यानि गृहीत्वाऽध्वर्युः पयोग्रहान् गृह्णाति ॥ २४ ॥

पाशुकान्याज्यानि गृहीत्वा प्रोक्षणयभिमन्त्रणान्ते कृतेऽध्वर्युः पयोग्रहान्गृह्णातीत्यर्थः ॥ २४ ॥

कुविदङ्गेति सर्वेषामेका पुरोरुगेका पुरोनुवाक्यैकः प्रैष एका याज्योपयामगृहीतोऽस्यश्विभ्यां त्वा जुष्टं गृह्णामीति गृहीत्वा यवसक्तुभिः श्रीत्वा पवित्रेण परिमृज्यैष ते योनिस्तेजसे त्वेति सादयित्वोपयामगृहीतोऽसि सरस्वत्यै त्वा जुष्टं गृह्णामीति गृहीत्वा गोधूमसक्तुभिः श्रीत्वा पवित्रेण परिमृज्यैष ते योनिर्वीर्याय त्वेति सादयित्वोपयामगृहीतोऽसीन्द्राय त्वा सुत्राम्णे जुष्टं गृह्णामीति गृहीत्वोपवाकासक्तुभिः श्रीत्वा पवित्रेण परिमृज्यैष ते योनिर्बलाय त्वेति सादयित्वोत्तरैर्यथालिङ्गमुपतिष्ठते ॥ २५ ॥

उत्तरैर्मन्त्रैरध्वर्युरेवोपतिष्ठते–तेजोऽसीत्याश्विनं, वीर्यमसीति सारस्वतं, बलमसीत्यैन्द्रम्। ग्रहत्रयं क्रमेण संबोध्य योजनीयम् ॥ २६ ॥

सुरायां वाल आनीयमानायां धारायाः प्रतिप्रस्थाता सुराग्रहान् गृह्णाति नाना हि वां देवहितं[१] सदः कृतमिति सर्वेषामेका पुरोरुगेका पुरोनुवाक्यैकः प्रैष एका याज्या । उपयामगृहीतोऽस्याश्विनं तेजोऽश्विभ्यां त्वा जुष्टं गृह्णामीति गृहीत्वा पवित्रेण परिमृज्यैष ते योनिर्मोदाय त्वेति सादयति । उपयामगृहीतोऽसि सारस्वतं वीर्यं सरस्वत्यै त्वा जुष्टं गृह्णामीति गृहीत्वा पवित्रेण परिमृज्यैष ते योनिरानन्दाय त्वेति सादयति । उपयामगृहीतोऽस्यैन्द्रं बलमिन्द्राय त्वा सुत्राम्णे जुष्टं गृह्णामीति

---

१ क ख. ग. °दयति । सयामृत° ।

गृहीत्वा पवित्रेण परिमृज्यैष ते योनिर्महसे त्वेति
सादयति । सुरावच्छूयणानि ॥ २६ ॥

पयोग्रहेषूपस्तरणाभिघारणे तस्यामुपस्तीर्य गृहीत्वा श्रयणं श्येनपत्रेण मार्जनं सर्वत्र। सुराग्रहेषु नोपस्तरणाभिघारणे सुराया विनाशात् । मतस्थानीयद्रोणकलशस्योपरि स्वपवित्रेऽन्येन भार्गेमणेऽन्येन सुरायामानीयमानाया धारायाऽऽकृत्तनानिस्रस्थाता सुराग्रह न्गृह्णाति। नाना हि वामिति पुरोरुचमुक्त्वोपयामगृहीतोऽस्यश्विनं तेजः । अश्विभ्यां त्वा जुष्टं गृह्णामीति गृहीत्वा कलसक्तुभिः श्रीत्वा सिंहलोमभिश्च मनसा ध्यानं वा कृत्वा स्वश्येनपत्रेण परिमृज्यैष ते योनिर्मोदाय त्वेति सादयति । अथ द्वितीये पात्रे नाना हि वामिति पुरोरुचमुक्त्वोपयामगृहीतोऽसि सारस्वतं वीर्यं सरस्वत्यै त्वा जुष्टं गृह्णामीति गृहीत्वा बदरसक्तुभिः श्रीत्वा शार्दूललोमभिश्च मनसा ध्यानं वा कृत्वा श्येनपत्रेण परिमृज्यैष ते योनिरानन्दाय त्वेति सादयति । उत्तमेन पात्रेण नाना हि वामिति उपयामगृहीतोऽसीन्द्राय सुत्राम्णे जुष्टं गृह्णामीति गृहीत्वा कर्कन्धुसक्तुभिः श्रीत्वा वृकलोमभिश्च मनसा ध्यानं वा कृत्वा, एष ते योनिर्महसे त्वा, इति सादयति ॥२६॥

सन्नाननुवाकशेषेणाध्वर्युर्यजमानश्चोपतिष्ठते । उत्तरेण चानुवाकेन ॥ २ ॥ २७ ॥

सादितान्ग्रहान्प्रतिप्रस्थाताऽध्वर्युर्यजमानश्चोपतिष्ठन्ते— ओजोऽस्योजो मयि धेहि, इत्यनुवाकशेषेण सोमो राजेत्यनुवाकेन चोपतिष्ठन्ते । तैरेतैः पञ्चभिर्मन्त्रैरुपस्थानं कुर्यादिति भावः ॥ २ ॥ २७ ॥

पूर्ववत्पशूनुपाकरोति ॥ २८ ॥

पशूनुपाकरोति, इति वचनादश्विभ्यां त्वा जुष्टमुपाकरोमि सरस्वत्यै त्वा० इन्द्राय त्वा० ऋषभ एव न वृष्णिः ॥ २८ ॥

बार्हस्पत्यवर्जमित्युक्तं तत्राऽऽह —

बार्हस्पत्यवर्जं समानमा पर्यग्निकरणात् ॥ २९ ॥

बार्हस्पत्यवर्जमिति प्रतिषेधोऽतिदिष्टस्यापि । उपाकृत्य पशुहोमादि पूर्ववत् । आ पर्यग्निकरणात्कृत्वा, पर्यग्निकरणे द्वितीये पर्याये पर्यग्नि कुर्वन् ॥ २९ ॥

मध्यमे पर्यग्निकरणपर्याय उल्मुकमादायाग्रे स्वरे न्युप्योपसमादधाति ॥ ३० ॥

उल्मुकमादाय दक्षिणे स्वरे निधायोपसमिन्धनं कुर्यादिति भावः ॥ ३० ॥

शेषेण पर्यग्निं कृत्वैतदेव पशुश्रपणार्थं प्रण-
यति ॥ ३१ ॥

शिष्टेनोल्मुकेन पर्यग्निकरणं समाप्य तत्र पशुश्रपणार्थं निदधाति ॥ ३१ ॥

हुतासु वपासु चत्वारिंशद्वा दक्षिणा ददाति ।
अनुशिशुं च वडवाम् ॥ ३२ ॥

प्रतिनिवर्त्याऽऽवपाहोमात्करोति । अत्राऽऽज्यभागौ नियतौ । प्रैषलिङ्गात् । संस्राव-होमान्ते चत्वारिंशद्वा अनुशिशुं च वडवां किशोरीमित्यर्थः । तामन्तर्वेद्यां स्थापयति । प्रक्षान्प्रक्षाऽऽसीत्यादि पुंलिङ्गबहुवचनेन, जात्यभिधानपक्षे द्विवचनेन । जातेर्द्वित्वादितरथा बहुवचनेन । सहस्रधारा उत्सा अक्षीयमाणास्ते दध्युः । पृथिवीमन्तरिक्षं दिवं च तैर्गो-शिशुवडवैरतितराणि मृत्युमिति । ब्राह्मणा इमे गोनुशिशुवडवाः । द्विवचनेन वा । समु-त्क्रम्य मार्जनान्ते ॥ ३२ ॥

अत्र वा ग्रहान्गृह्णीयुः ॥ ३३ ॥

अत्र वेति काष्ठविकल्पः । ग्रहान्गृह्णीयुरिति । सोमो राजेत्यन्तम् । अथैन्द्रसावि-त्रवारुणानां पात्रासादनादि । तेषां हविष्कृता वाचं विसृज्य पशून्विशास्ति हृदयश्रप-णान्तम् । अवहननाद्यासादनान्ते ग्रहैः प्रचार कुरुतोऽध्वर्युप्रतिप्रस्थातारौ ॥ ३३ ॥

उक्तः संप्रैषः ॥ ३४ ॥

स्वान्स्वान्ग्रहान्वंशे बद्ध्वाऽध्वर्युः संप्रेष्यति ॥ ३४ ॥

सर्वे आहवनीये हूयेरन्नित्याश्मरथ्यः ।
दक्षिणेऽग्नौ सुराग्रहा इत्यालेखनः ॥ ३५ ॥

सर्वानाहवनीय इति पूर्वः पक्षः । दक्षिणाग्नाविति सिद्धान्तः । सुराग्रहान्पयोग्रहांश्च जुहुतः ॥ ३५ ॥

सुरावन्तमिति पयोग्रहाञ्जुहोति ।
यस्ते रसः संभृत इति सुराग्रहान् ॥ ३६ ॥

जुहोतीत्युभयत्र । सरस्वतीमश्विनाविन्द्रमग्निमिति द्वितीयमन्त्रान्तः ॥ ३६ ॥

तूष्णीमनुवषट्कृते हुत्वा यमश्विना
नमुचेरित्याश्विनमध्वर्युर्भक्षयति ॥ ३७ ॥

भक्षयामीत्यन्तः । तूष्णीमनुवषट्कारे जुहुतः । यदा प्रतिप्रस्थाता दक्षिणाग्नौ सुराग्रहैः प्रचरति दक्षिणं खरमुत्तरवेदिवत्कृत्वा गुग्गुलादिसंभारानिधाय परिस्तीर्य परिधयः, सामिधेनीकाले तथैवेध्ममंस्था । अग्निसंमार्जनं च । उत्तरस्य होमकाले तस्मिन्होमे सुरायाः—यस्ते रस इति होमः । होमादूर्ध्वं यत्तद्गुमयपक्षसाधारणम् । एवं हुत्वाऽन्येषु पात्रेष्विडां गृह्णीयात् । पयोग्रहेभ्य इडामुपहूय यमश्विनेत्याश्विनावत्तेडामध्वर्युर्भक्षयति । ॥ ३७ ॥

यदत्र रिप्तमिति सारस्वतं प्रतिप्रस्थाताऽऽग्नीध्रश्च ॥ ३८ ॥

भक्षयत इति शेषः । भक्षयामीत्यन्तः ॥ ३८ ॥

इदꣳ हविरित्यैन्द्रं ब्रह्मा यजमानश्च ॥ ३९ ॥

भक्षयत इति च शेषः । केचित्पृथक्पृथगिडामवद्यन्तीति सदेडापात्रभेदः ॥ ३९ ॥

व्याख्याता सुरायाः प्रतिपत्तिः ॥ ४० ॥

प्रतिपत्तिर्विज्ञानम्—ब्राह्मणं परिक्रीणीयादित्यादि । सतस्थानीयं द्रोणं दक्षिणखरस्योपरिष्टाद्वंशे बद्ध्वा तस्मिन्पवित्रं वितत्य तस्मिञ्छतमानमित्यादि । केचित्सतस्य प्रतिष्ठापनान्तम् । तन्न । सतस्याप्राभावादिति । अपरे तु पूर्वस्यां सौत्रामण्यामस्यां च शतच्छिद्रां मार्तिकीमिच्छन्ति । दक्षिणेऽग्नौ दारुमयस्याभावदर्शनादग्नौ सतस्य प्रतिष्ठापनान्तम् ॥ ४० ॥

दक्षिणेनाऽऽहवनीयं पयःशेषं पितृपितामहप्रपितामहेभ्यो ददाति पितृभ्यः स्वधाविभ्यः स्वधा नम इति ॥ ४१ ॥

अथ दक्षिणेनाऽऽहवनीयं समीपदेशे ग्रहपात्रैरेव सतशेषमानीय पितृपितामहप्रपितामहेभ्यो ददाति । यजमानः पितरः शुन्धध्वमित्यन्तः । भूमौ पयःप्रक्षेपः ॥ ४१ ॥

पुनन्तु मा पितरः सोम्यास इत्युपतिष्ठते ॥ ४२ ॥

वैश्वदेवी पुनतीत्यन्ते प्राचीनावीती पितृलिङ्गत्वात् ॥ ४२ ॥

अथाऽऽहुतीर्जुहुतः । ये समाना इत्यध्वर्युः । ये सजाता इति प्रतिप्रस्थाता ॥ ४३ ॥

शतꣳसमा इत्यन्तः । जुहुत इति जुहोतिचोदनात्स्वाहाकारप्रदानम् । प्राचीनावीत्येव ॥ ४३ ॥

मनोताकाले पृथक्पात्रेषु पशूनां यूपाणि निद धाति ॥ ४४ ॥ पुरस्तात्स्विष्टकृतः शृङ्गशफैरुपहोमाञ्जुहोति ॥ ४५ ॥

शृतं हविः३ शमितरित्यादि पश्वासादनान्तं पूर्ववत् । अथान्यस्मिन्पात्र आश्विनस्य यूपं निदधाति । अन्यस्मिन्पात्रे सारस्वतस्य, अन्यस्मिन्नैन्द्रस्य निधाय ततपृषु उपस्तृणीत इत्यादि पूर्ववत् । पशुभिः प्रचरति स्वस्ववसाभिर्वसाहोमः । स्वान्स्वानुद्रेकान्समवनीय दिग्यागः । नमो दिग्भ्य इत्युपस्थायैन्द्रसावित्रवारुणैः प्रचर्य नारिष्ठान्हुत्वाऽथ शृङ्गशफैरित्यादिवनस्पतियागः । तस्य प्रयोग उच्यते—अग्नीत् स्रुचौ प्रदायाग्रेणाऽऽहवनीयमपरेण वा प्राग्नहितमागस्य शृङ्गशफैरुपहोमाञ्जुहोति । ४४।४५ ॥

अष्टावष्टावेकैकस्य कुष्ठिकशफाः ॥ ४६ ॥

अष्टौ कुष्ठिराः । अत्र कुष्ठिकशब्देन शफसमीपस्थः क्षुद्ररूपशफोऽभिधीयते ॥४६॥

आश्विनस्य यूपेण कुष्ठिकां शफं च पूरयित्वा सीसेन तन्त्रमित्यष्टर्चेन प्रतिमन्त्रं द्वाभ्यां द्वाभ्यां कुष्ठिकाशफाभ्यां जुहुयात् । उत्तमायाश्शृङ्गे अनुषजति । हुत्वा हुत्वा स्वेष्वभिषेचनपात्रेषु संपातानवनीयाऽऽहवनीये कुष्ठिकशफान्प्रविध्यति । एवमुत्तरेणाष्टर्चेन सारस्वतस्य । सर्वेणानुवाकेनैन्द्रस्य ॥ ४७ ॥

एकैकशफमेकैकमुपशफं च यूपेण पक्वमांसरसेन पूरयित्वैकैकाम् हुतिं जुहुयात् । एतैश्च मन्त्रैर्यजमानस्य प्रायणीयो यज्ञावयवो निष्पाद्यो भविष्यति इत्येहि निरूप्यते । सीसेन तन्त्रं मनसा मनीषिणः ( तै० ब्रा० २-६-४ ) इत्येतैः षोडशभिर्यजमानस्य भाविदेहसूक्ष्मपरेरुत्पहे म· कर्मा. ॥ ४७ ॥

औदुम्बर्यासन्द्यरत्निमात्रशीर्षण्याऽनूच्या नाभिदघ्नपादा मौञ्जविवाना मित्रोऽसि वरुणोऽसीति तां यजमानायतने प्रतिष्ठापयति ॥ ४८ ॥

औदुम्बर्यासन्दी व्याख्याता । तामासन्दीं मित्रोऽसीत्यनेन दक्षिणेनाऽऽहवनीयं प्रतिष्ठापयत्यध्वर्युः ॥ ४८ ॥

आसादनोपवेशनाभिमन्त्रणानि राजसूयवत् ॥ ४९ ॥

स्योना ग सीदेति तामासाद्य यजमान उपविशति । तमासीनं निषसादेत्यभिमन्त्रयतेऽध्वर्युः ॥ ४९ ॥

तस्यां प्राङ्मुखमासीनं प्रत्यङ्मुखस्तिष्ठन्नाश्वि नसंपातैरभिषिञ्चति । देवस्य त्वा सवितुः प्रसवेऽ-श्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसेनाभिषिञ्चामीति ॥ ५० ॥

तस्यामासन्द्यां प्राङ्मुख उपविशति । उपविष्टं यजमानं प्रत्यङ्मुखोऽध्वर्युराश्विन संपातैः पूर्वनिहितैस्तैस्तैरेव पात्रैरभिषिञ्चति देवस्य त्वेति ॥ ५० ॥

एवमुत्तरेण मन्त्रेण सारस्वतस्य । उत्तमेनैन्द्रस्य ॥ ५१ ॥

एवमुक्तप्रकारेणोत्तरेण—देवस्य त्वा० वीर्यायाभिषिञ्चामीत्यन्तेन सारस्वतसंपातैः । देवस्य त्वा० बलायाभिषिञ्चामीत्यन्तेनैन्द्रस्य संपातेन ॥ ५१ ॥

कोऽसि कतमोऽसीति पाणी संमृश्याध्वर्युर्व्याहृती-र्जपित्वाऽत्र राजसूयवन्मङ्गल्यनाम्न आहूय शि-रो मे श्रीरिति यथालिङ्गमङ्गानि संमृश्य जङ्घा-भ्यां पद्भ्यामिति प्रत्यवरुह्य प्रतिक्षत्रे प्रतितिष्ठामि राष्ट्र इति जपित्वा प्रथा देवा इत्याहुतीर्हुत्वा लोमानि प्रयतिर्ममेति यथालिङ्गमङ्गानि संमृ-शते ॥ ५२ ॥

कोऽसीत्येवमादिनाऽध्वर्युर्यजमानपाणी संमृश्य व्याहृतीर्जपित्वा तिसृभिस्तत्र आहुतीर्जुहोतीत्यापस्तम्बः । अथ यजमानो राजसूयवन्मङ्गल्यनाम्न आह्वयति । राज-सूये त्वेवमुक्तम्—मङ्गल्यनाम्नो राजाऽऽह्वयति सुश्लोकाँ३ इति संग्रहीतारं सुमङ्गलाँ३ इति भागदुघं सत्यराजा३निति क्षत्तारम्, इति चतुष्पात्तेत्रदानान्तमाह्वानमेवाप्रेति केचित् । शिरो मे श्रीरिति शिरः । यशो मुखमिति मुखम् । त्विषिः केशाश्च श्मश्रूणि इति केशश्मश्रूणि । राजा मे प्राणोऽमृतमिति नासिकाम् । सम्राट्चक्षु-रित्यक्षिणी । विराट्छ्रोत्रमिति कर्णौ । जिह्वा मे भद्रमिति जिह्वाम् । वाङ्मह इति वाचम् । केचिद्वागिति वाचं मह इति हस्तप्रक्षालनमिति । मनो मन्युरिति हृदयम् । स्वराड्भाम इति ललाटम् । मोदाः प्रमोदा अङ्गुलीरङ्गानि, इत्यङ्गुलीरङ्गानि च । चित्तं मे सह इति चित्तमभिसंधाय हृदयं ॥ । बाहू मे बलमिन्द्रियमिति बाहू । हस्तौ मे कर्मवीर्यमिति हस्तौ । आत्मा क्षत्रमुरो ममेत्युरः । पृष्ठीर्मे राष्ट्रमुदरमंसौ, इति पृष्ठमूरू अंसौ च । ग्रीवाश्च श्रोण्यौ इति ग्रीवां श्रोणीं च । ऊरू अरत्नी जानुनीति ऊरू अरत्नी जनु (नू) च । विशो मेऽङ्गानि सर्वत इति सर्वाङ्गाणि । नाभिर्मे चित्तं विज्ञानमिति नाभिम् ।

पायुर्मेऽपाचितिर्भसदिति पायुं भसदं च । आनन्दनन्दावाण्डौ म इत्यण्डौ । भगः सौभाग्यं पस इति प्रजननमेवं संमृश्य जङ्घाभ्या, इत्यासन्द्या अवतीर्य प्रतिक्षत्र इत्येवमन्तं यजमानं, यथा देवा इत्याहुतीर्जुहोत्यध्वर्युः । देवा देवताः । भू. स्वाहेति द्वितीयामाहुतिम् । अथ यजमानो–लोमानीति लोमान्यभिमृशति । त्वङ्मेति त्वचम् । मांसं म इति मांसम् । वस्वस्थीति नखानि । मज्जा म आनतिरिति मज्जामभिमृशतीत्यर्थः ॥ ५२ ॥

स्विष्टकृत्प्रभृति समानमाऽवभृथात् ॥ ५३ ॥

स्विष्टकृदादि वनस्पतियागश्च पूर्ववत् । मासपुरोडाशाना तन्त्रेण स्विष्टकृतं हुत्वा पुरोडाशात्प्राशित्रमवदायेडां चावयति नाङ्गेषु ॥ ५३ ॥

अथाग्नीदीपयजानित्याद्यवभृथात्पूर्वमवभृथमपि—

यद्देवा देव हेडनमित्यवभृथे पञ्चाऽऽहुतीर्जुहोतीत्याश्मरथ्यः । आहवनीये हूयेरन्नित्यालेखनः ॥ ५४ ॥

तथैव प्रधानेन प्रचर्य नारिष्ठान्हुत्वा यद्देवा देव हेडनमित्यवभृथे पञ्चाऽऽहुतीरित्येके । आहवनीय इत्यपरे । अग्निवायुसूर्यास्त्रयाणां चतुर्थस्य प्रजापति. । पञ्चमस्य वरुण इति केचित् । प्रधानादनन्तरं स्विष्टकृदन्तेऽनूयाजान्ते वाऽवभृथः । उपदेशमतात्तूष्णीमासादनं (मासरस्य) प्रोक्षणं पूर्ववत् । समुद्र इत्यादि । आश्विनपात्रादि यस्ते देव वरुण तं त एताभ्यामित्यूहेनाभिषेकपात्रपक्षे पवित्रे च (तेषु) द्रोणेषु विकार', जलेष्वपि समानविधानपक्षे सर्वेषामनूहो वा । एतैरित्यभिषेकपात्रमावृत्तिर्वा मन्त्राणामिमं विष्यामीति योक्त्रविमोकः ॥ ५४ ॥

अवभृथ निचङ्कुणेत्यवभृथं यजमानोऽभिमन्त्र्य सुमित्रा न आपो द्रुपदादिव मुमुचान इत्याप्लुत्यो द्वयं तमसस्परीत्यादित्यमुपस्थाय प्रतियुतो वरुणस्य पाश इत्युदकान्तं प्रत्यस्यति ॥ ५५ ॥

गतः ॥ ५५ ॥

पशुवत्समिध उपस्थानं च ॥ ५६ ॥

पशुवदेधोऽसीति समिध. । अपो अन्वचारिषमित्युपतिष्ठन्ते सर्वे ॥ ५६ ॥

समाववर्तीत्युपस्थाय भूः स्वाहेत्याहुतिं हुत्वा पूर्ववत्पितृयज्ञः ॥ ५७ ॥

समाववर्तीत्युपस्थायाऽऽहवनीयमथा-वर्युः—भूः स्वाहेति जुहोति । अथ विष्णोः क्रमोऽसीत्यादि ब्राह्मणतर्पणान्तम् । अथ पूर्ववत्पितृयज्ञः—अन्वाधानजपे कौकिलीयपितृयज्ञं हविः । त्रिः पशोर्दक्षिणाग्नेः पुरतः पैतृकी(क्या) दार्शिकी(क्या) वेदि(दे)र्दक्षिणत इत्यर्थः । गतमन्यत् ॥ ९७ ॥

इन्द्राय वयोधसे पशुमालभेत । ऋषभो दक्षिणा ॥ ५८ ॥

पितृयज्ञे समाप्त इन्द्राय वयोधसे पशुः । पशुबन्धेन यक्ष्य इत्यादि । केचित् पश्विष्टयादि । न षड्ढोता । कौकिलीयं हविः । इन्द्राय वयोधसे त्वा जुष्टमुपाकरोमीत्यादि । ऋषभो दक्षिणा ॥ ५८ ॥

आदित्यं चरुम् । धेनुः । विज्ञायते च वत्सं
पूर्वस्यां ददाति । मातरमुत्तरस्याम् ॥ ५९ ॥

तस्मिन्समाप्त आदित्यश्चरुः । अदितिर्देवता वत्सं पूर्वस्यां ददाति । मातरमुत्तरस्यां ददाति । तस्य वत्सस्य माता दक्षिणा रुद्राय । गामिति प्रतिग्रहः ॥ ५९ ॥

संतिष्ठते कौकिली ॥ ६० ॥

ब्राह्मणतर्पणान्ता परिसमाप्यत इत्यर्थः ॥ ६० ॥

तया स्वर्गकामो यजेत ॥ ४ ॥ ६१ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे त्रयोविंशप्रश्ने प्रथमः पटलः ॥

---

छन्दोगानां नित्या । अथ कौकिल्या हौत्रम्—आदित्यपशोः— अदितिर्न उरुष्यतु, महीमूषु मातरमिति याज्यानुवाक्ये । अथैन्द्रस्य पशोः—होता यक्षत्समिधेन्द्रमिडस्पद इति प्रयाजप्रैषाः । समिद्ध इन्द्र उपसामनीक इत्याप्रियः । अत्र विशेषाद्द्वितीयो प्रैषः । आचर्षिणि प्रा, विवेष यन्मेति द्वे इन्द्रस्य पशोर्वपायाः । तं सध्रीचीः, सत्यमित्तन्नेति पुरोडाशे याज्यापुरोनुवाक्ये । प्रससाहिषे, स रोकृषममिधेति हविषः । देवं बर्हिरिन्द्रं सुदेवमित्यनूयाजप्रैषाः । याज्यास्त्वेता एव । अथ त्रिपशोः—होता यक्षत्समिधाऽग्निमिडस्पद इति प्रयाजप्रैषाः । समिद्धो अग्निरश्विना, इत्याप्रियाः । अथ नराशंसो द्वितीय इति व्यवस्था । होता यक्षदश्विनेति ग्रहाणां प्रैषा मैत्रावरुणस्य । अश्विना हविरिन्द्रियमिति तिस्रस्तिस्रो वपानां पुरोडाशानां हविषां च । तत्र प्रथमामनूच्येत्यनेन प्रकारेण वक्ष्यमाणेन ता एव सर्वा याज्या भवन्ति । सर्वान्ताः पुरोनुवाक्या इति श्रुतेः । देवं बर्हिः सरस्वतीत्यनूयाजप्रैषा. । एता एव याज्या । अग्निमद्येति सूक्तवाकप्रैषो मैत्रावरुणस्य । इदं

द्यावापृथिवीति होता पठेत् । उशन्तस्त्वेति पितृयज्ञस्य हौत्रं व्याख्यातम् । अवशिष्टा विकल्पार्थाः । अग्निष्वात्तानृतुमत इति पुरोनुवाक्याविकल्पः । सहत्वै समृद्धेति एता त्रिपु(ये तातृपु)रिति याज्याविकल्पः स्यात् । होता यक्षदिडस्पद इति यत्पश्वन्तरं सूत्रकारेणोद्‌हृतमिन्द्राय वयोधसे पशुमालभेत इत्यत्र प्रयाजप्रैषाः । समिद्धो अग्निः समिधा, इत्याप्रिया वसन्ते नर्तुनेति वपायाः पुरोडाशस्य हविष इति द्वंद्वं यथामन्त्रम् । उत्तरानुवाकेऽनूयाजप्रैषा एता एव याज्या अनूयाजस्य । पाशुकमेव तन्त्रम् । वयोधसे तु तनूनपादेव सर्वगोत्राणामविशेषेणामुना ना(ऽऽस्नानाशा)न्य इत्युपदेशः । अत्र श्लोकाः—

कौकिल्या यक्ष्य इत्यागूर्नवम्याः पूर्ववद्भवेत् ।
होता कालायसेनादि श्यामाकान्तं प्रकल्पयेत् ॥
द्वादश्यामिन्द्रदेवत्यो न पड्ढोता निरूढवत् ।
आदित्यश्चरुतन्त्रेण वत्सस्तत्र तु दक्षिणा ॥
सुरेष्टिः पूर्ववत्कार्योऽवषट्कारो तु वेतु(स्वरे कारोत्तरेऽथ) वा ।
तोक्मादिभ्यश्च संसृज्य पयःसेकान्तमेव च ॥
पर्वणि त्रिपशोः कर्म न पड्ढोता पुराकृता ।
हविषा च (पश्चिष्ट्वादि) यथासूत्रमादित्यस्य च मातरम् ॥ इति ॥४॥६१॥

समाप्ता कौकिली ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां त्रयोविंशप्रश्ने प्रथमः पटलः ।

---

अथ त्रयोविंशप्रश्ने द्वितीयः पटलः ।

---

अथ काठका उच्यन्ते । तत्र प्रथमं तावत्सावित्रस्य कर्मोच्यते—

सावित्रꣳ स्वर्गकामश्चिन्वीत ॥ १ ॥

सावित्रमिति चित्योऽग्निः । अत्र काठकाग्निकाण्डान्यष्टौ सावित्रनाचिकेतचातुर्होत्रवैश्वसृजारुणकेतुकानि पञ्च चित्यानि । द्विवदयेनयोऽपाघाश्चेष्टयः, स्वाध्यायब्राह्मणमष्टममिति ॥ १ ॥

पशुबन्धे चीयते ॥ २ ॥

पौर्णमास्याममावास्यायां वा पुण्यनक्षत्रेषु वेति बौधायनः । चतुर्दश्यां प्रातरग्निहोत्रं हुत्वा पत्न्या सह दर्शान्वारयमाण ऐन्द्राग्नेन निरूढपशुबन्धेन यक्ष्य इति संकल्प्य, आत्मन्यरण्योर्वा समारोप्य देवयजनं गत्वाऽऽयतने निधायोपावरोह्य विहृत्य ॥ २ ॥

चेष्यमाण उपकल्पयते पञ्चाशीतिशतꣳ हिरण्येष्टका यावदुत्तममङ्गुलिपर्व तावतीः शर्करा वाऽभ्यक्ताश्चतस्रः स्वयमातृण्णा अपरिमिता लोकंपृणाः ॥ ३ ॥

उपकल्पयते संभरात् । शर्करा एव स्वयमातृण्णाः । दधि मधु घृतोदपात्रं च पञ्चाशीतिशतं हिरण्यशल्कांश्चोपकल्पयत इत्यर्थः ॥ ३ ॥

षड्ढोतारमित्येतदादि पाशुकं कर्म प्रतिपद्यते ॥ ४ ॥

षड्ढोत्रादि यूपकरणान्तं निरूढपशुवत् ॥ ४ ॥

वेदितृतीये यजेत इति विज्ञायते ॥ ५ ॥

प्रकृतस्य तृतीयकरण्या वेदिमानं सौत्रामण्यामुक्तम् । षड्विंशत्यङ्गुलिप्रमाणेन दश पश्चाच्छ्रोण्योर्मध्यं, प्राच्या दशांसयोरष्टौ । ततो वेदिकरणादुत्तरपरिग्रहात्प्राक् करोति ॥ ५ ॥

प्रागुत्तरस्मात्परिग्रहात्कृत्वोत्तरवेदिदेशस्य मध्ये शङ्कुं निहत्य सर्वतः परिमण्डलं रथचक्रमात्रं सावित्रं परिलिख्य समूलं हरितं दर्भस्तम्बमाहृत्य मध्येऽग्नेर्निखाय जुह्वां पञ्चगृहीतं गृहीत्वा सजूरब्दोऽयावभिरिति दर्भस्तम्बे पञ्चाऽऽहुतीर्हुत्वोद्धत्यावोक्ष्य व्याघारणान्तामुत्तरवेदिं कृत्वा लेखाया अभ्यन्तरं नव परिमण्डला लेखा लिखित्वा सिकताभिरवकीर्य दर्भैः प्रच्छाद्य दध्ना मधुमिश्रेण शर्कराभिरिति बाह्यां लेखां संपूर्य वसाति ॥ ६ ॥

ततो वेदं कृत्वा वेदिं करोतीति नियमादुत्तरपरिग्रहान्तं कृत्वोत्तरवेदिदेशस्य मध्ये शङ्कुं निहत्य रथ्यायामेन सह मण्डलं करोति । समूलं हरितं दर्भमाहृत्य मध्येऽग्नि

निखाय जुह्वां पञ्चगृहीतं गृहीत्वा—सजूरब्दोऽयावभिरिति पञ्चाऽऽहुतीर्जुहुयात् । केचित् कुशमूले जुहोतीति । पञ्चाऽऽहुती (सजूरब्दोऽयावभिर्घृतेन स्वाहा । सजूरुषा अरुणीभिर्घृतेन स्वाहा । पूर्वस्याब्दो देवता । उत्तरस्योषाः । सजूः सूर्य एतशेन घृतेन स्वाहा । सूर्यो देवता । सजोष अश्विना दंसोभिर्घृतेन स्वाहा । अश्विनौ देवते । सजूरग्निर्वैश्वानर इडाभिर्घृतेन स्वाहा । अग्निर्वैश्वानरो देवता ) । ततः खननावोक्षणे तूष्णीम् । शम्यां पुरस्तान्निधायेत्यादि स्रुचमुद्ग्रहणान्त निरूढपशुवत् । अथ लेखाया अभ्यन्तरं नव परिमण्डला लेखा लिखित्वा सिकताभिरवकिरणं कृत्वा कुशैः प्रच्छाद्य दध्ना मधुमिश्रेण शर्कराभिश्च दशम्या लेखायाः स्पूरणं कृत्वा वसति ॥ ६ ॥

हुतेऽग्निहोत्रे प्रजापतिस्त्वा सादयतु तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदेत्युत्तरवेदिमभिमृश्य मयि गृह्णामि यो नो अग्निरिति द्वाभ्यामात्मन्नग्निं गृहीत्वा यास्ते अग्ने समिध इति स्वयंचित्याऽभिमृश्याग्नेर्भस्मासीति सिकता निवपति । संज्ञानमित्यूषान् ॥ ७ ॥

श्वोभूते प्रातरग्निहोत्रं हुत्वा प्रजापतिस्त्वेत्युत्तरवेदिमभिमृश्य मयि गृह्णामि यो नो अग्निरिति द्वाभ्यां मन्त्राभ्यां स्वयमात्मन्यग्निं गृहीत्वा यास्ते अग्न इति स्वयं चित्याऽभिमृश्य यदि यजमानचयनं तदा न स्वयं चित्यम् । अग्नेर्भस्मासीति सिकता संज्ञानमित्यूषान्निवपतीत्यर्थः ॥ ७ ॥

तान्निवपन्यददश्चन्द्रमसि कृष्णं तदिहास्त्विति मनसा ध्यायति ॥ ८ ॥

गतः ॥ ८ ॥

सं यावः प्रियास्तनुव इत्यूषान्सिकताश्च संसृज्य चितः स्थ परिचित इत्यपरिमिताभिः शर्कराभिः परिश्रित्याऽऽप्यायस्व समेतु त इति सिकता व्यूहति ॥ ९ ॥

सं याव इत्यूषान् सिकताश्च संसृज्य चित स्थेति सीदतेत्यन्तेनासंख्याताभिः शर्कराभिरुत्तरवेदिः ( दिं ) परिश्रयति । बहुवचनान्ते युगपन्मन्त्रान्ते आप्यायस्वेति सिकता व्यूहति ॥ ९ ॥

न लेखाः संलोभयन्ति ॥ १० ॥

यथा लेखा न विनश्यन्ति तथा व्यूहनं कर्तव्यमित्यर्थः ॥ १० ॥

अभ्यन्तरं जघनार्ध उदपात्रमुपदधाति वाक्त्वा
समुद्र उपदधामि सुप्रजावनिꣳ रायस्पोषवनिं
मह्यं वाजिनायेति ॥ ११ ॥

मृन्मयपात्रमुदकेन पूरयित्वाऽग्नेरपरार्धे खात्वा—वाक्त्वेति वाजिनायेत्यन्तेनोदपात्रमुपदधाति ॥ ११ ॥

नवम्यां बाह्यायां लेखायां पञ्चदश पूर्वपक्षस्याहान्युपदधाति ॥ ५ ॥ संज्ञानं विज्ञानमिति ॥ १२ ॥

अहरिष्टका इत्यर्थः । संज्ञानादयश्चैता अह्नामाख्याः । ब्राह्मणं च—' एतावनुवाकौ पूर्वपक्षस्याहोरात्राणां नामधेयानि ' ( तै० ब्रा० ३–१०–२ ) इति । तत्रैषां भिन्नवाक्यत्वात्साकाङ्क्षत्वाच्चोपधानमन्त्राणां चान्ते— भूरसि च ' ( तै० ब्रा० ३–१०–१० ) इत्यनुवाक आम्नातं ' तया देवतया ' ( ३–१०–१० ) इत्येतत्तत्र कृतार्थमप्येषामर्थित्वात्प्रत्येकं संबध्यते । तेन तेन च दिननामधेयमुपवर्ण्य इष्टका एवोच्यन्ते । यद्वा—अहरिष्टकोपधानं पुरस्तादारभ्य प्रदक्षिणमुपदधाति पुरस्तादेव समाप्तिः । वक्ष्यमाणानामिष्टकानां तथादेवतं भवति । नवम्यां बाह्यायां रेखायां पूर्वेद्युरसक्करेखायामन्तरालरेखायां पुरस्तादारभ्य यावन्नवमी वज्रः पञ्चदशभिः संपूर्यते तावदन्तरालं विभज्य तावदन्तरं पञ्चदशधा विभज्य पुरस्तादारभ्य पूर्वपक्षस्याहान्युपदधाति—संज्ञानमिति प्रतिमन्त्रम् । एकं पदमेको मन्त्रः । संज्ञानं तया० । विज्ञानं तया० । एवं प्रकारेण पञ्चदश पूर्वपक्षस्याहान्युपदधातीत्यर्थः ॥ ६ ॥ १२ ॥

तेषामन्तरालेष्वेतेषामह्नां पञ्चदश मुहूर्तानुपदधाति
चित्रः केतुरिति ॥ १३ ॥

एवमभिसंधायोपदध्यात् । तेषामन्तरालेषु पञ्चदश मुहूर्तानुपदधाति–चित्रः केतुरिति । चित्रस्तया० इत्यादि ॥ १३ ॥

अथान्तरस्यां पञ्चदश पूर्वपक्षस्य रात्रीरुपदधाति
दर्शा दृष्टेति ॥ १४ ॥

अभ्यन्तरायां लेखायाम् । अथवाऽन्तरस्यामष्टम्यां लेखायां पूर्वपक्षस्य रात्रीरुपदधाति—दर्शा तया० इत्येवमादिप्रकारेण ॥ १४ ॥

तासामन्तरालेष्वेतासां रात्रीणां पञ्चदश मुहूर्तानुपदधाति दाता प्रदातेति ॥ १५ ॥

एतस्यां पूर्वपक्षस्य रात्रीणां पञ्चदश मुहूर्तानुपदधाति—दाता तया० प्रदाता तया० ॥ १५ ॥

अथान्तरस्यां पञ्चदशापरपक्षस्याहान्युपदधाति प्रस्तुतं विष्टुतमिति ॥ १६ ॥

अथान्तरस्यां पञ्चदशापरपक्षस्याहान्युपदधाति—प्रस्तुतं तया० विष्टुतं तया० ॥ १६ ॥

तेषामन्तरालेष्वेतेषामह्नां पञ्चदश मुहूर्तानुपदधाति सविता प्रसवितेति ॥ १७ ॥

सविता तया० प्रसविता तया० ॥ १७ ॥

अथान्तरस्यां पञ्चदशापरपक्षस्य रात्रीरुपदधाति सुता सुन्वतीति ॥ १८ ॥

सुता तया० प्रसुता तया० । अन्तरस्या षष्ठ्यां लेखायां पञ्चदशापरपक्षस्य रात्रीरुपदधातीत्यर्थः ॥ १८ ॥

तासामन्तरालेष्वेतासां रात्रीणां पञ्चदश मुहूर्तानुपदधात्यभिशास्ताऽनुमन्तेति ॥ १९ ॥

तासामन्तरालेष्वेतासामपरपक्षस्य रात्रीणां पञ्चदश मुहूर्तानुपदधाति—अभिशास्ता तया० अनुमन्ता तया० ॥ १९ ॥

अथान्तरस्यां द्वादश पूर्वपक्षानुपदधाति पवित्रं पवयिष्यन्निति ॥ २० ॥

अथान्तरस्या पञ्चम्यां लेखाया पवित्रं तया० पवयिष्यन्तया० ॥ २० ॥

अथान्तरस्यां द्वादशापरपक्षानुपदधाति सहस्वान्सहीयानिति ॥ २१ ॥

अन्तरस्या चतुर्थ्यां लेखायां द्वादशापरपक्षानुपदधाति—सहस्वान्तया० सहीयान्तया० ॥ २१ ॥

अथान्तरस्यां त्रयोदश मासनामान्युपदधात्यरुणोऽरुणरजा इति ॥ २२ ॥

अन्तरस्यां तृतीयलेखायां त्रयोदश मासनामानि, अरुणस्तया० अरुणरजास्तया० ॥ २२ ॥

**अथ सिकता उपदधात्येजत्का जोवत्का इति ॥ २३ ॥**

अन्तरालेषु सिकता उपदधाति—एजत्कास्तया० जोवत्कास्तया०, अनुवाकेन प्रतिमन्त्रम् । अथवा न तयादेवतं, सिकतानामिति वचनाच्च ॥ २३ ॥

**अथान्तरस्यां पञ्चदश मुहूर्तानुपदधाति इदानीं तदानीमिति ॥ २४ ॥**

अथान्तरस्यां द्वितीयायां लेखायां पञ्चदश मुहूर्तान्, इदानीं तया० तदानीं तया० ॥ २४ ॥

**अथान्तरस्यां षड्यज्ञक्रतूंस्त्रीणि चतुर्नामान्युपदधात्यग्निष्टोम उक्थ्योऽग्निर्ऋतुरिति ॥ २५ ॥**

अथान्तरस्यां प्रथमलेखायां षड्यज्ञक्रतूंस्त्रीणि चतुर्नामान्युपदधाति । अग्निष्टोमस्तया०, उक्थ्यस्तया० । अग्न्यादित्रयरूपेण ऋतुत्रयरूपेणेष्टका स्तूयन्ते । अग्न्यादय एवर्तवः । तापवस्तया वृष्टिमस्तया हिमवस्तया च । तस्मात्तादृशानृतूनुपदधातीत्युक्तं भवति ॥ २५ ॥

**अथ नाभ्यां चत्वारि संवत्सरनामान्युपदधाति प्रजापतिः संवत्सरो महान्क इति ॥ २६ ॥**

प्रजापतिस्तया० संवत्सरस्तया० महांस्तया० कस्तया० ॥ २६ ॥

**चतस्रः स्वयमातृण्णा दिक्षूपदधाति भूरसि च पृथिवीं च मां चेति ॥ २७ ॥**

मन्त्रान्ते तया देवता । संदिश्य(श्या)नानुक्रमिष्याम आप्यायमाना तया० प्यायमाना० प्याया० आपूर्यमाणा० पूर्यमाणा० पूरयन्तीति प्रवर्तनानि । जोवत्का इत्युपधानम् । अजोवत्का इति भाष्यकृत् ॥ २७ ॥

**लोकं पृणेति लोकंपृणा उपदधाति ॥ २८ ॥**

लोकं पृण, ता अस्य सूददोहस इति द्वाभ्यां द्वे इष्टके उपदधाति । अन्त्येष्टकामुत्तरत उपदधाति । तस्यां शतरुद्रीयं जुहोति । केचित्सिकतोपधाने यत्र यत्र तस्यातिरिक्तदेशमेव लोकंपृणाभिः प्रच्छादयतीति ॥ २८ ॥

चात्वालात्पुरीषमाहृत्य पृष्ठो दिवीति वैश्वानर्यर्चा चितावनुव्यूहति ॥ २९ ॥

प्रसारयति ॥ २९ ॥

सा चितिर्भवति ॥ ३० ॥

स्पष्टोऽर्थः ॥ ३० ॥

आरोहणं जपति । अवरोहणं जपति ॥ ३१ ॥

वाङ्म आसन्निति ॥ ३१ ॥

उपस्थानेनोपतिष्ठते त्वमेव त्वां वेत्थ योऽसि सोऽसीति ॥ ३२ ॥

अग्निमनुवाकेनोपतिष्ठते ॥ ३२ ॥

साहस्रवत्करोति ॥ ३३ ॥

अग्निवत्सहस्रस्य प्रमाऽसि सहस्रस्य प्रतिमाऽसि सहस्रस्य विमाऽसि सहस्रस्योन्माऽसि सहस्रोऽसि सहस्राय त्वा, इन्द्रघोषवत । यत्तऽचितमिति चितिवत्कृत्याऽभिसृशत्यस्मिन्पठितेनाग्ने देवानिति च पञ्चभिरभिमृशति ॥ ३३ ॥

धेनूः कृत्वा यजमानः संहारविहाराभ्यामुपतिष्ठते संवत्सरोऽसि परिवत्सरो सीति ॥ ३४ ॥

इमा मे अग्न इति धेनुकरणं यजमानस्य संहारविहाराभ्यामुपस्थानं च संवत्सरोऽसीत्येवमादि संहार एति प्रैतीति विहार ॥ ३४ ॥

उत्तरत उत्तमायामिष्टकायामर्कपर्णेनाजक्षीरं जुहोति ॥ ३५ ॥ त्वमग्न रुद्र इति शतरुद्रीयस्य रूपमसंचरे पशूनामर्कपर्णं उदस्यति वल्मीकवपायां वाऽवदधाति ॥ ३६ ॥

अन्त्येष्टकायामर्कपर्णेनाजक्षीरेणोदङ्मुखस्तिष्ठञ्जुहोति । त्वमग्ने रुद्रो असुरो महो दिव इति रुद्रास्त्रयस्त्रिंशद्देवा । प्रजापतिश्च देवता । यत्र पशवो न गच्छन्ति तत्र त्यागोऽर्कपर्णस्य ॥ ३५ ॥ ३६ ॥

जघनेनाग्निं प्राङ्मख उपविश्य संचितोक्थ्येन होताऽनुशंसति भूर्भुवः स्वरित्यनुवाकेन ॥ ३७ ॥

अपरेणाग्निं प्राङ्मुख उपविश्य होता मन्त्रितोवर्ध्येनानुशंसति—भूर्भुवः स्वः । ओजो बलमित्यनुवाकेन । पञ्च च वाक्यान्युक्त्वाऽर्धर्चेऽवसानम् । ततः पञ्च वाक्यान्युक्त्वा प्रणवं क्षिपेत् । ततो द्विवाक्यमुक्त्वाऽर्धर्चेऽवसानमनुवाकान्ते प्रणवः ॥ ३७ ॥

अग्निप्रणयनादि पाशुकं कर्म प्रतिपद्यते समानमाऽ-
तिमुक्तीभ्यः ॥ ३८ ॥

ततः पौतुद्रवैः परिधिभिरित्येवमाद्यतिमुक्त्यन्तं निरूढवत्सर्वम् ॥ ३८ ॥

अतिमुक्तीर्हुत्वा चतुर्गृहीतं जुहोति त्वमग्ने रुद्र
इति शतरुद्रीयस्य रूपम् ॥ ३९ ॥

अथ चतुर्गृहीतं जुहोति त्वमग्ने रुद्र इत्यनुवाकेन । उक्ता देवता ॥ ३९ ॥

अपरं चतुर्गृहीतमग्नाविष्णू इति वसोर्धारायाः ।
अपरं चतुर्गृहीतमन्नपत इत्यन्नहोमः । अपरं चतु-
र्गृहीतं सप्त ते अग्ने समिधः सप्तजिह्वा इति
विश्वप्रीः । अपरं चतुर्गृहीतम् ॥ ६ ॥ वसूनां
त्वाऽधीतेन रुद्राणामूर्म्यादित्यानां तेजसा विश्वेषां
देवानां क्रतुना मरुतामेम्ना जुहोमि स्वाहेति ॥४०॥

जुहोतीति सर्वत्रानुषङ्गः । अग्नाविष्णू इत्यनुवाकेन । अग्नाविष्णू देवता । ततोऽन्नपत इत्यनुवाकेनान्नहोमः । अन्नियनुवाके अन्नपत इत्यादिनिर्दिष्टा देवता । ततः सप्त ते अग्न इति होमाः । संचरस्य(बान)इति । अपरं चतुर्गृहीतं जुहोति—वसूनां त्वाऽधीतेनेति सूत्रोक्तेन मन्त्रेण । वस्वादिर्देवता । केचित्प्रजापतिर्देवतेति पठन्ति ॥ ६ ॥ ४० ॥

तासां संस्रावेण यजमानो मुखं विमृष्टे राज्ञी
विराज्ञीत्यनुवाकेन ॥ ४१ ॥

हुत्वा हुत्वा संपातावनयनम् । त्वमग्न इत्यादि पञ्च हुत्वा हुतशेषेण संपातेन यजमानो मुखं विमृष्टे राज्ञी विराज्ञी० सम्राजन्नित्यन्तः ॥ ४१ ॥

अथैकविंशतिमाहुतीर्जुहोत्यसवे स्वाहा वसवे
स्वाहेत्यनुवाकेन प्रतिमन्त्रम् ॥ ४२ ॥

अर्जुनाय स्वाहेत्यन्तः । एवविंशतिं स्रुवाहुतीर्जुहोतीति भाष्यकृत् । चतुर्थ्यन्तपदोक्ता देवताः ॥ ४२ ॥

यहिर्षः संभरणादि प्राशुकं कर्म प्रतिपद्य-
ते । समानमा वपाया होमात् ॥ ४३ ॥

तत उत्तरेण गार्हपत्यमित्यादि वपाहोमान्तं निरूढपशुबन्धवत् ॥ ४३ ॥

हुतायां वपायामन्विष्टकं पष्ठौहीर्दक्षिणा ददाति ॥ ४४ ॥

दक्षिणाकाले यावत्यो यजुष्मत्य इष्टकास्तावतीः पष्ठौहीरन्वाहार्यधर्मेण ददाति । पञ्चाशीतिशतगुञ्जासुवर्णदक्षिणा । एवमुत्तरत्र द्रष्टव्यम् ॥ ४४ ॥

यद्येतावतीर्दक्षिणा नोत्सहेत मन्थानेतावतः ।
पाययेद्ब्राह्मणान् । ओदनान्वाऽऽशयेत् ॥ ४५ ॥

यद्येतावतीर्दक्षिणा नोत्सहेत दातुं न शक्नोति पुरीषाशनपरिमाणान् मक्तूनोदनान्वा दद्यात् । अनयोः पक्षयोः पष्ठौही हिरण्यं वासश्च । तदुक्तमापस्तम्बेन — पष्ठौहीं त्वन्तर्वेदीं दद्याद्धिरण्यं वासश्च ( आप० श्रौ० १९–१३–१४ ) इति । तेषां पष्ठौहीहिरण्यवाससां समुच्चयः ॥ ४५ ॥

तेन हैवास्य स काम उपाप्तो भवति ॥ ४६ ॥

क्रतुदक्षिणामिमां दक्षिणां च ब्राह्मणभोजनमपरिमितान्मन्थनोदनान्वा पष्ठौहीं हिरण्यं वासश्चान्तर्वेदि(द्यां) स्थापयति । ब्रह्माणीति नपुंसकलिङ्गबहुवचनेनाभिमृशति–ब्रह्माणि ब्रह्माणि स्थ ब्रह्मणो वो हुताय मा मा हिꣳसिष्ट हुतानि मह्यꣳ शिवानि भवत सहस्र धाराण्युत्साऽन्यक्षीयमाणानि तानि दधुः पृथिवीमन्तरिक्षं दिवं च तैर्गवौदनपष्ठौहीहिरण्यवासोभिरतितराणि मृत्युम् । दक्षिणतो ब्राह्मणा इमानि वो गवौदनपष्ठौहीहिरण्यवासांसि, इत्यादि । ततः प्रसर्पकेभ्यो बहुविद्भ्यो दानं यथाशक्ति । बहुविदो व्याख्याताः । ॥ ४६ ॥

यद्भाक्ष्मनोतायास्तत्कृत्वौदुम्बरपात्रेण पूर्णो
मृत्यवे ग्रहं गृह्णाति विपश्चते पवमानायेति
ग्रहणसादनौ । नाद्रियेत एष मृत्युग्रह इत्येके ॥ ४७ ॥

समुत्क्रम्येत्येतदादि निरूढवद्द्रष्टव्यम् । विकल्पेन मृत्युग्रह उपरिष्टाद्वक्ष्यते॥ ४७ ॥

तस्य रिवष्टकृत्पनुहोमः ॥ ४८ ॥

तस्य मृत्युग्रहस्य ॥ ४८ ॥

होष्यन्नप उपस्पृशेद्विद्युदसि विद्य मे पाप्मा-
नमिति । अथ जुहोत्यपमृत्युमपक्षुधामिति ॥ ४९ ॥

अथ हुत्वोपस्पृशेद्वृष्टिरसि वृश्च मे पाप्मानमि-
ति। तस्येडामनुभक्षः। भक्षयति भक्षोऽस्यमृ-
तभक्ष इति। भक्षयित्वा प्राणनिग्रहानात्मन्य-
तिष्ठापयते मन्त्राभिभूतिरित्यनुवाकशेषेण ।
समानमत ऊर्ध्वं पाशुकं कर्म । संतिष्ठते
सावित्रः ॥ ७ ॥ ५० ॥

इति सत्याषाढहिरण्यकेशिसूत्रे त्रयोविंशप्रश्ने द्वितीयः पटलः।

---

विद्युदिति वक्ष्यमाणे वृष्टिरितीष्ट्वा ततो ब्राह्मणतर्पणान्तं निरूढपशुबन्धवत्। संति-ष्ठते सावित्रः। अनन्तरं पर्वणि सौत्रामणी मैत्रावरुणी वा। सावित्रोऽग्निः सर्वत्र पशु-बन्धे चेतव्यः। अथवा सावितृदेवत्ये चेतव्यः। विष्कम्भं वा मण्डलस्य परिमाणं द्वचरत्नि(रत्नि) विष्कम्भं सर्वाहीकानहीनेनाथो सत्रेणेति वचनात्। द्वादशाह उभया-त्मके। तत्र श्लोकः—

पशौ नित्ये च काम्ये चाहीने सत्रे विधीयते।
सावित्रस्य समाप्तौ च सौत्रामण्या यजस्यपा॥

समाप्तः सावित्रः॥ ७ ॥ ४९ ॥ ५० ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोग-चन्द्रिकायां त्रयोविंशप्रश्ने द्वितीयः पटलः।

---

अथ त्रयोविंशप्रश्ने तृतीयः पटलः।

---

अथ नाचिकेताख्यचयनमुच्यते—

एतेन नाचिकेतो व्याख्यातः। नात्र लेखा
भवन्ति। एकविꣳशतिर्हिरण्येष्टकाः शर्करा
वाऽभ्यक्ता उपधानकाले नाभ्यामेवोपधी-
यन्ते चतुरश्रं परिमण्डलं वा लोकोऽसि
स्वर्गोऽसीत्यनुवाकेन प्रतिमन्त्रम्॥ १ ॥

एतेन सावित्रेण। तत्कर्म—पशुबन्धेन यक्ष्य इति संकल्प्य समारोप्य गत्वा मथित्वाऽऽयतने निधाय विद्युत्। नात्र लेखा भवन्ति। नाचिकेत

प्रतिष्ठार्थेमिति वा । उपकल्पनकाल एकविंशतिर्हिरण्येष्टकास्तत्संख्याकाः शर्करा वा । चतस्रः स्वयमातृण्णा इत्यादि पूर्ववत् । मृत्युग्रहो नित्यः । तस्यौदुम्बरपात्रकल्पनमुद-पात्रं च । पड्ढोत्रादि । बाह्यलेखा भवत्येव । उपहित उदपात्रे पाशुबन्धिक्यामुत्तरवेद्यां कृतायां नवरेखारहिताया बाह्यलेखायुक्ताया रथचक्रसमिताया चतुरश्रं परि-मण्डलं वा नाभ्यामेव मध्य एवाग्नेः—लोकोऽसि स्वर्गोऽसीत्याद्यनुवाकेन प्रतिमन्त्रमे-कविंशतिसंख्यायुक्ता उपधीयन्ते । एकैकं पर्यायमुक्त्वोपधानम् । एवमुपधाय चतस्रः स्वयमातृण्णा इत्यादि समानं सावित्रेण । मृत्युग्रहो नित्यः । नियत एव पशुबन्धे । सोमे चेदिति वक्ष्यत्यग्र उपसदि मध्यमायां चयनम् । संचितोक्थ्येन होताऽनुशंसति, इत्यन्तं यत्प्राङ्मनोतायास्तत्कृत्वा जुहूपभृतोर्हिरण्यशकलाववधायौदुम्बरेण पात्रेण पूर्णो मृत्यवे ग्रहं गृह्णाति तत्पात्रस्य पाशुकेन सह प्रयोगः । विपाश्चित इत्युक्त्वा, उपयाम-गृहीतोऽसि मृत्यवे त्वा जुष्टं गृह्णाम्येष ते योनिर्मृत्यवे त्वेति सादयति । अवदानादि । स्विष्टकृतं हुत्वा वैश्वानरे स्रुचमासाद्य मृत्यवेऽनुहोमः । होष्यन्विद्युत् । अथ जुहोत्यपमृ-त्युमपक्षुधमिति । महे स्वाहा । वृष्टि० । इडाभक्षणं कृत्वा भक्षोऽस्यमृतभक्ष इति भक्षयि-त्वाऽऽचम्य मन्द्राऽभिभूतिरित्यनुवाकशेषेण हुत्वा प्राणनिवहनात्मनि प्रतिष्ठापयति । भक्ष्यमाणे मृत्युग्रहे मृत्युगृही( मी )ताः प्राणादयोऽपक्रामन्ति शरीरात् । तेषामाह्वानं प्रतिष्ठापनमालभ्य हृदयादीत्युपदेशः । असावित्यस्य स्थान आह्वानं तस्य प्राणादेर्मन्द्राऽ-भिभूतिः केतुर्यज्ञानां वागेहि । अन्धो जागृविः प्राण प्राणेहि । बधिर आक्रन्दयि-तरपान अपानेहि । अहस्तोस्त्वा चक्षुश्चक्षुरेहि । अपादाशो मनः, मन एहि । कवे विप्रचित्ते श्रोत्र श्रोत्रेहि । सुहस्तः सुवासाः । वेद आत्मन्नेहि । अथानुवाकसमाप्ते-र्भूयात् । अग्नीदौपयजानित्यादि पूर्ववत् । संतिष्ठते नाचिकेतः । सौत्रामणी मैत्राव-रुणी वा ॥ १ ॥

तं[१] हैके पशुबन्ध एवोत्तरवेद्यां चिन्वत इति ।
ब्राह्मणव्याख्याताः काम्या विकाराः ॥ २ ॥

तमेवं नाचिकेतमग्निं केचित्पशुबन्ध एवोत्तरवेद्यां चिन्वत इत्यर्थः ॥ २

ताननुक्रमिष्यामः ॥ ३ ॥

ये तु ब्राह्मणे काम्यविकारा व्याख्यातास्तानग्रे क्रमेण वक्ष्यामः ॥ ३ ॥

पशुबन्धे सोमे सत्रे सहस्रे सर्ववेदसे वा यत्र वा
भूयिष्ठा आहुतयो हूयेरंस्तत्र चेतव्यः ॥ ४ ॥

---

१ ख. ग. च तं हैतमेके ।

प्रथमः पशुबन्धस्तस्मात्तत्रैव चेतव्यो नान्यत्रेति पशुबन्ध एव चिन्वते । 'तन्न तथा कुर्यात्' ( तै० ब्रा० ३–११–१ ) इति निषेधात् । तथा कुर्वन्नेतमग्निं हि कामेन भूयिष्ठाहुतिलाभाभिलाषेण वियोजयेत् । ततोऽसौ कामेन व्यर्धितो यजमानमपि तदीयेन कामेन व्यर्धयेत् । तस्मात्सौम्येऽध्वरे चेतव्यः । यत्र वा चातुर्मास्यादौ भूयिष्ठा बहुतरा आहुतयो हूयेरंस्तत्र चेतव्यः । यद्वा—एष नाचिकेतः पशुबन्धे चेतव्यः । सौत्रामण्यामङ्गभूतायां न चेतव्यः । सोमे सत्रे सहस्रे सर्ववेदसे वेति चेतव्यः । प्रकृतौ नेच्छन्ति । वेद्युत्तरवेद्योः समाम्नानाद्विकृत्यर्थमेव । विकृतिषु सायस्केषु न स्यात् । 'उत्तरवेद्याम्' ( तै० ब्रा० ३—११–९ ) इत्युत्तरवेदिदर्शनात् । तथा पक्षिस्तोमयोर्न स्यात् । पक्षिभ्यां साग्निचित्याभ्यामित्यग्निनियमात् । इममेव लोकं पशुबन्धेनाभिजयति ( आप० श्रौ० ७–१ ) इति पुनरुपक्रमणात् ॥ ४ ॥

सत्रे प्रतिष्ठां प्रजां पशून्स्वर्गमृद्धिमीप्सन्यथावकाशं यथासमाम्नातम् ॥ ५ ॥

षोडशिनि न स्यात्तद्विकारेषु वाजपेयादिषु च । सोमे चीयमाने मध्यमायामुपसदि चिन्वीत । द्वादशाहे तु महाग्निनियमो न भवति । द्विरात्रादिषु विकल्पः । अथवा गवामयने महाग्निर्वा नाचिकेतो वोत्तरवेदिर्वा । तथैकाहे तद्विकृतिषु विषुवन्महाव्रतयो-र्विकल्पः । सहस्रदक्षिणा(णे) त्वेकाहे(ह)नाचिकेत एव । तथा सर्ववेदसदक्षिणा(णे) । अन्यत्राभिजिद्विश्वजिद्भ्यां तापश्चिते विज्ञायते तृतीये संवत्सरेऽभिजिता विश्वजिता वा सर्ववेदसं ददातीति यत्र वा भूयिष्ठा आहुतयो हूयेरन् । भूयिष्ठा ग्रहा गृह्यन्ते इति विषुवति दर्शनात् ॥ ५ ॥

सर्वत्र पुरस्तादुपक्रमः प्रदक्षिणमुत्तरतोऽपवर्गः ॥ ६ ॥
अपवर्गः परिसमाप्तिः ॥ ६ ॥

पशुकामः पाङ्क्तमेव चिन्वीत । पञ्च पञ्च प्रतिदिश-मेकां मध्ये ॥ ७ ॥

चतसृषु दिक्षु पञ्च पञ्चैकां मध्ये । एवं पञ्चत्वान्वयात् पाङ्क्तत्वम् । पाङ्क्तस्य चेता वेदिता च सहस्रं पशून्प्राप्नोति ॥ ७ ॥

ज्यैष्ठ्यमीप्सन्यशः प्रजां वा त्रिवृतमेव । सप्त पुरस्तात्तिस्रो दक्षिणतः सप्त पश्चात्तिस्र उत्तरत एकां मध्ये ॥ ८ ॥

ज्यैष्ठ्यं प्राधान्यम् । यशः ख्यातिः । प्रजननं प्रजासमृद्धिः । त्रिवृतं संख्यात्रयान्वितम् । पुरस्तात्पश्चाच्च सप्त सप्त । दक्षिणत उत्तरतश्च तिस्रस्तिस्रः । एकां मध्य इति ॥ ८ ॥

ज्यैष्ठ्यकामो मध्यात्प्रक्रम्योर्ध्वां रीतिं प्रतिपादयेत् ॥ ९ ॥

ऊर्ध्वा मध्यादारभ्योर्ध्वरीतिका आ स्वयमातृण्णायाः प्राचीरित्यर्थः । तस्याः शिरस्थानीयत्वादूर्ध्वा ( तै० ब्रा० ३-११-९ ) इत्युक्तम् ॥ ९ ॥

स्वर्गकामः पश्चात्प्रक्रम्य प्राचीं रीतिं प्रतिपादयेत् ॥ १० ॥

प्राचीः । पश्चिमस्वयमातृण्णामारभ्याऽऽहवनीयादुत्सर्पेदिति केचित् ॥ १० ॥

स यदीच्छेत्तेजस्वी यशस्वी ब्रह्मवर्चसी स्यामिति प्राग्दक्षिणेभ्यः प्राङ्‌ होतुर्धिष्णियादुत्सर्पेद्येयं प्रागाद्यशस्वती सा मा प्रोर्णोतु तेजसा यशसा ब्रह्मवर्चसेनेति ॥ ११ ॥

मन्त्रार्थस्तु—येयं वेदिः प्रागात् प्राची एति गच्छति । छान्दसो लुङ् । यशस्वती अन्नवती । हविषामाधारत्वात् । सा तादृशी हविर्भिरासादिता तैश्छादिता मामपि तेजःप्रभृतिभिः प्रोर्णोतु प्रच्छादयत्विति भावः ॥ ११ ॥

अथ यदीच्छेद्भूयिष्ठं मे श्रद्दधीरन्भूयिष्ठां दक्षिणां नयेयुरिति दक्षिणासु नीयमानासु प्राच्येहि प्राच्येहीति ॥ १२ ॥

भूयिष्ठां बहुतमां मयि श्रद्धां कुर्युः प्रजा ऋत्विजश्च भूयिष्ठां दक्षिणां नयेयुरिति यदीच्छेत्स दक्षिणानयनकाले प्राच्येहीति मन्त्रेणाऽऽहवनीये जुहुयात् । स्रुवेणोपहत्य आज्यमादाय ॥ १२ ॥

अथ मन्त्रमाह—

प्राची जुषाणा वेत्वाज्यस्य स्वाहेति स्रुवेणोपहत्याऽऽहवनीये जुहुयात् ॥ १३ ॥

गतः । मन्त्रार्थस्तु—हे दक्षिणे प्राच्येहि अत्यर्थं प्राची आगच्छेत्येवमस्माभिराहूयमाना । अत एव प्राची त्वं जुषाणा प्रीयमाणा भवन्ती आज्यस्य वेतु पिबतु । स्वाहुतमिदं तुभ्यमिति ॥ १३ ॥

स्वयमातृण्णादि समानमुत्तरम् ॥ १४ ॥

चात्वालात्पुरीषमाहृत्य चितावुपधाय–चितिमचितिम् (तै० सं० ५–६–४) इत्यादिभिश्चितिक्लृप्तिभिरभिमृश्याग्निं प्रणीयोपसमाधायोपसमिध्य चतुर्गृहीतेन चतस्र आहुतीर्जुहोति–त्वमग्ने रुद्रः (तै० ब्रा० ३–११–२) इत्यादिभिरेतत्प्रपाठकाम्नातैश्चतुर्भिरनुवाकैः। तत्र नमस्ते रुद्र (तै० सं० ४–५–१) इति शतरुद्रीयस्य रूपं तत्स्थानीयं त्वमग्ने रुद्र इति प्रथमोऽनुवाकः। शतं रुद्रा देवता अस्य शतरुद्रीयम्। वसोर्धाराया रूपं द्वितीयोऽनुवाकः। तृतीयोऽनुवाकोऽन्नहोमाख्यः। अन्नसिद्धिहेतुश्चतुर्थोऽनुवाकः। विश्वप्रीर्नाम विश्वदेवताप्रीतिहेतुत्वात्। विश्वान् देवान् प्रीणातीति विश्वप्रीः। ॥ १४ ॥

संतिष्ठते नाचिकेतः ॥ १५ ॥

तत्र श्लोकाः—

नाचिकेतः पशोर्बन्धे विकल्पेन विधीयते।<br>सौत्रामण्यामनड्ड्हे तु भवेत्सोमे तु वैकृते॥<br>वाजपेये न साद्यस्के न षोडशिनि नैव च।<br>सत्रे च द्वादशाहे तु केचिदिच्छन्ति तत्र हि॥<br>द्विरात्रादौ विकल्पेन गवामयन एव च।<br>नाचिकेतो महाग्निर्वा उत्तरा वा तथैव च॥<br>विषुवद्व्रतयोश्चापि तथैकाहिकयोः पुनः।<br>एकाहेषु सहस्रेषु नाचिकेतस्तथैव च॥<br>तथा सर्वस्वदाने च नाचिकेतो विधीयते।<br>अभिजिद्विश्वजिद्वर्जं तापश्चितचितौ तथा॥<br>यत्रं वा खलु भूयिष्ठा गवामयन एव च।<br>केचिद्रूमबहु(पशु)ष्वेव नाचिकेतो विधीयते॥ इति।

नाचिकेतः समाप्तः ॥ १६ ॥

एतेन चातुर्होत्रो व्याख्यातः ॥ १६ ॥

एतेन नाचिकेतेन। पशुबन्धेन यक्ष्य इत्यादि समारोपणं कृत्वा मथित्वाऽऽयतने निधाय विद्युत्। चातुर्होत्रमग्निं चेष्ये स्वर्गं लोकमवाप्नवानीति संकल्पः। तत्र ब्रह्म वै चतुर्होतारः (तै० ब्रा० ३–१२–५) इत्यनुवाके चातुर्होत्रचयनस्य विधिर्भवति। तच्च द्विविधम्–व्यस्तं समस्तं च। अनुवाकमात्रप्रतिपादितं व्यस्तम्। सावित्रादिभिः

संयुक्तं समस्तम् । तत्र समस्ते वैश्वसृजचयनेऽङ्गभूता दिवःश्येन्याख्याः प्राच्याख्या श्चेष्टयः ॥ १६ ॥

यावत्पदं हिरण्येष्टकाः शर्करा वाऽभ्यक्ताः ॥ १७ ॥

यावत्पदं हिरण्येष्टका यजुष्मत्यः । पदानि मन्त्राणां षडशीतिः । अनुमन्त्रं (सूत्रं) चेत्तदा वोक्त(शाखान्त)रीयमुपधानमनुब्राह्मणं चेदुद्धचूनशतं शर्करा वा लोकंपृणाद्यु-पकल्पनं दधिमध्वादीनां पूर्ववत्कल्पनम् । षड्ढोतारमित्यादि पूर्ववत् । नात्र रेखाः । सर्वं पूर्ववत्कल्पनम् ॥ १७ ॥

उपधानकालेऽग्रेण दर्भस्तम्बं दशहोतारं प्रति-
मन्त्रमुदञ्चमुपदधाति । हृदयं ग्रहं चत्वारि पदा-
नि संभाराणां द्वे पत्नीनाम् ॥ १८ ॥

उपधानकाल उदपात्रमुपधाय यथासूत्रोक्तमुपधानं वक्ष्यते । अग्रेण दर्भस्तम्बं सप्त-होतुरवकाशमवशिष्य पुरस्ताद्दशहोतारं प्रतिमन्त्रमुदीच्या रीत्योपदध्यात् । दशभिर्मन्त्रैर्द-शेष्टकाः । एकवाक्यादेको मन्त्रः । चित्तिः स्रुक् तया० । चित्तमाज्यं तया० । इत्येवं प्रकारः । अथ हृदयं, सुवर्णं घर्ममिति चतुर्दशभिर्वाक्यैरेकामिष्टकामुपदधाति । अथ दशहोतुर्ग्रहं च 'वाचस्पत' इत्यादि स्वाहान्तेन, एकां हृदयमुत्तरेण । अथ प्रतिग्रहं देवस्य त्वेत्या-दिना प्रतिगृह्णामीत्यन्तेनैकाम् । तामुत्तरेण अग्निर्यजुर्भिरिति चतुर्भिर्वाक्यैश्चतस्रस्तथा द्वे पत्नीनाम् । तामुत्तरेण सेनेन्द्रस्येत्येतद्द्विवाक्येन द्वे इष्टके ॥ १८ ॥

एवं दक्षिणतः प्राञ्चं चतुर्होतारम् ।
पश्चादुदञ्चं पञ्चहोतारम् । उत्तरतः प्राञ्चं
षड्ढोतारम् । उपरिष्टात्प्राञ्चं सप्तहोतारम् ।
पश्चात्र पदानि संभाराणामवशिष्टानि च
पत्नीनाम् ॥१९॥ स्वयमातृण्णादि समानमुत्तरम् ॥२०॥

एवं दक्षिणतो दर्भस्तम्बस्य चतुर्होतारं प्राच्या रीत्येति विशेषः । अन्यत्सर्वं पूर्ववत् । ब्रह्मेन्द्रमिति हृदयं द्वादशभिः । अहोऽस्यैव चतुर्होतुर्वाचस्पत इति । सोमाय वास इति प्रतिग्रहः । सुंभारा अग्निरसो धिष्णियैरग्निभिरिति चतुर्भिः । पथ्या पूषणः, वाय्वायोरिति पत्न्यौ । (आस्त्वेति वा तस्यानुषङ्गः) । एवं पश्चाद्दर्भस्तम्बस्य पञ्चहोतारमग्निर्होतेति उदीच्या रीत्या । हृदयं शतं नियुतमिति द्वादशवाक्येनैकामिष्टकाम् । अथ पञ्चहोतु-र्ग्रहं सोमः सोमस्य पुरोगा इति चतसृभिः । रुद्राय गामिति प्रतिग्रहः । आदितिर्वेधाः

( इति ) संभाराः । दीक्षा सोमस्येति द्वे पत्न्यौ । षड्ढोतारमुत्तरतो दर्भस्तम्बस्य । अत्र वाग्घोता न पूर्वे ते ( इति ) । वाग्घोतेत्यनुवादात् । हृदयं सुवर्णं कोशमित्यादिद्वादशवाक्यैरेकामिष्टकाम् । भूर्भुवः सुवरित्यादि स्वयंभुवे तयेत्येकामिष्टकाम् । वरुणायाश्वमिति प्रतिग्रहः । देवस्य त्वा सवितुः० वरुणायाश्वं प्रतिगृह्णामि तया० इत्येकाम् । वसव आज्येनेत्यादिना चतस्रः संभाराश्चतुर्वाक्यैश्चतस्र इष्टका इत्यर्थः । वसूनामिति पत्न्यौ द्वे इष्टके, वसूनां गायत्री तया० । रुद्राणां त्रिष्टुप्तया० इत्यादिना । एवमुपरिष्टाद्दर्भस्तम्बस्य सप्तहोतारं पुरत इत्यर्थः । पूर्वमेवावकाशं शिष्टं प्राच्या रीत्या महाहविर्होतेति सप्तेष्टकाः । इन्द्रो राजेत्यनुवाकसमाप्तेर्हृदयम् । सुवीर्याय तया० इत्येकाम् । वाचस्पते हृद्विध इति सप्तहोतुर्ग्रहः । पृथिव्यै तया० इत्येकाम् । प्रजापतये पुरीषमिति प्रतिग्रहः । देवस्य त्वेति । प्रजापतये पुरीषं तेन० प्रतिगृह्णामि तया० इत्येकाम् । पञ्च पदानि संभाराणाम्—बृहस्पतिः पुरोधसेत्याद्याऽनुवाकसमाप्तेः पञ्चभिर्वाक्यैः पञ्चेष्टकाः । अवशिष्टानि द्वादश, आदित्याना जगतीति एकादशभिरेकादशेष्टकाः । चतस्रो दिश इत्यनुवाकसमाप्तेरेकाम् । देवानां पत्नयस्तया० इत्येकाम् । तेन सह द्वादश । एवं षडशीतिसंपत्तिः । स्वयमातृण्णादि पूर्ववत् । हृदयानि प्रत्यृचमुपदधातीत्येके मन्यन्ते । मन्त्रभेदात् । एकमन्त्राणि कर्माणि, इति न्यायात्समुदायनाम हृदयमिति श्रुतिविहितम् ॥ १९ ॥ २० ॥

संतिष्ठते चातुर्होत्रः ॥ ८ ॥ २१ ॥

ब्राह्मणभोजनान्तं नाचिकेतवत् । नाचिकेत एव मृत्युग्रहो नित्यः । तत्र श्लोकौ—

हृदयं तु सुवर्णं च ग्रहं वाचस्पते तथा ।
प्रतिग्रहं तु देवस्य त्वास्त्वा वासति वा भवेत् ॥
अग्निर्यजुर्भिः संभाराः सेनेन्द्रस्येति पत्नयः ।
वाग्घोता चात्र षड्ढोता व्याहृत्यादिग्रहो भवेत् ॥

चातुर्होत्रः समाप्तः ॥ ८ ॥ २१ ॥

अथ वैश्वसृजचयनमुच्यते—

एतेन वैश्वसृजो व्याख्यातः ॥ २२ ॥

एतेन चातुर्होत्रेण वैश्वसृजो व्याख्यातः । तस्य पूर्ववत्कल्पः । चतुर्दश्यां प्रातरग्निहोत्रं हुत्वा पशुबन्धेन यस्य इत्यादि समारोप्य मथित्वाऽऽयतने निधायोपावरोह्य विसृज्य । वैश्वसृजमग्निं चेष्य इति स्वर्गं लोकमवाप्स्यामीति संकल्प्य ॥ २२ ॥

यावन्मन्त्रं हिरण्येष्टका यावदुत्तममङ्गुलिपर्व तावतीः शर्करा वाऽभ्यक्ताश्चतस्रः स्वयमातृण्णाः ॥ २३ ॥

द्विचत्वारिंशद्धिरण्येष्टकाः शर्करा वा घृताभ्यक्ताः, पूर्ववद्दधिमध्वादीनामुपकल्पनं पञ्चहोतारमित्येवमाद्युदपात्रोपधानान्तं पूर्ववद्द्रष्टव्यम् ॥ २३ ॥

उपधानकालेऽग्रेणोत्तरनाभिं यचामृतं यच्च मर्त्यमित्येतैस्त्रिभिरनुवाकैस्त्रिः प्रदक्षिणमुत्तरवेदिं परिचिनोति ॥ २४ ॥

यचामृतम् ( तै० ब्रा० ३–१२–६ ) इत्येतैस्त्रिभिरनुवाकैरभिदक्षिणं परिचिनोति। प्रदक्षिणमित्यर्थः । परिमण्डलमेवाऽऽदर्शाकृतिं चिनोति । स्वयमातृण्णादि समानम् ( स० श्रौ० २३–२–२६ ) इत्युत्तरत्र वक्ष्यति ॥ २४ ॥

तिस्रो वा चितयस्त्रिभिरनुवाकैः ॥ २५ ॥

अथवा तिस्रश्चितयस्त्रिभिरनुवाकैरनुवाकेनैकैकामाद्येनानुवाकेनोपधाय तासां पुरीषं तूष्णीं हुत्वा तासामुपरि द्वितीयेनैतावत्तृतीयेनानुवाकेनोपदधातीत्यर्थः ॥ २५ ॥

ऋचां प्राची महतीति संचितोक्थ्येन होताऽनुशंसति ॥ २६ ॥

अनुशंसनकाल ऋचां प्राचीत्यनुवाकेन । ऋगन्त ऋगन्ते प्रणवः । पञ्चपञ्चाशतः (तै० ब्रा० ३–१२–९।१९ ) इत्यतः परं ब्राह्मणम् । ओमित्यन्तमिति वचनात् । त्रिः प्रथमामिति न्यायप्राप्तमिति केचित् । मृत्युग्रहो नियत इति ॥ २६ ॥

स्वयमातृण्णादि समानमुत्तरम् । शतरात्रे सारस्वतेषु रात्रिसत्रेषु शतरात्रान्तेषु महाव्रतेषु त्रिषु च सारस्वतेषु सत्रेषु काठकचातुर्मास्येषु साध्यानां षडहवर्जितेषु विश्वसृजामयने प्रजापतेरन्यत्रानुशंसनात् ॥ २७ ॥

स्वयमातृण्णा उपधाय लोकंपृणाभिः प्रच्छादयति । पृष्टो दिवीति पुरीषम् । समानमुत्तरकर्मानुशंसनात् ॥ २७ ॥

सहस्रसंवत्सरयोश्च वैश्वसृजोऽग्निर्नियतः ॥ २८ ॥

रात्रिसत्रादिष्वपि नित्यो वैश्वसृजोऽग्निः । [ते] नान्यत्र विकल्पः ॥ २८ ॥

अभिभयायं चे(मायान्तश्चे)दभिचिनुयुरुत्तरवेदिदेश-
मेतैर्मन्त्रैरभिमृशेत् [ योऽस्य सुभियः सुविचित इत्र
स्याचस्मै वैश्वसृजम् । तृतीये वा पर्याये ]॥ २९ ॥

एवं पशुबन्धे सोमे मध्यमायामुपसदि कृत्वाऽभिमन्त्रणान्तमुत्तरवेदिदेशस्य मध्ये शङ्कुमित्यादि, प्रच्छाद्य वसति, इत्येवमन्तं कृत्वाऽऽपराह्णिकीभ्यां प्रचर्य प्रजापतिस्त्वा सादयतु तया देवतयेत्येवमादि अनुशंसनान्तम् । आपराह्णिकीभ्यां प्रचर्याग्निप्रणयनाद्यतिमुक्तीर्हुत्वा चतुर्गृहीतमित्यादि आसवनाहुत्यन्तम् । अथाग्निरत्युत्तरमित्यादिसौमिके सवनीये (न) मृत्युग्रहः । अहर्गण आद्येऽग्निः, पशुगण आद्ये ससोमे चेतव्यानामेवं प्रयोगः—योऽस्य सुभिय इत्यादि तृतीये वा पर्याय इति ॥ २९ ॥

सावित्रनाचिकेतचातुर्होत्रवैश्वसृजारुणकेतु-
कान्समस्य सौम्येऽप्यध्वरे चिन्वते ॥ ३० ॥

सोमे पाशुके च चिन्वत इति भावः ॥ ३० ॥

सावित्रः प्रथमा चितिः । लोकंपृणा द्वितीया ।
नाचिकेतस्तृतीया । लोकंपृणा चतुर्थी । चातुर्होत्र
उत्तमा [पञ्चमी । वैश्वसृजः षष्ठी । आरुणकेतुकः सप्तमी ]॥ ३१॥

सावित्रनाचिकेतचातुर्होत्राणि. पृथक् कृत्वा वैश्वसृजमथ लोकंपृणाभिः समासपक्षः पृथक्प्रयुज्य समस्यन्ते । सावित्रः प्रथमा चितिः, सावित्रमन्त्रैरुपधाय स्वयमातृण्णादि लोकंपृणादि चित्यन्तम् । लोकंपृणा द्वितीया चितिः, लोकंपृणाः सर्वाः पुरीषम् । नाचिकेतमन्त्रैस्तृतीया स्वयमातृण्णा लोकंपृणाभिः प्रच्छादयति । अथ पुरीषम् । लोकंपृणाभिश्चतुर्थी पुरीषम् । चातुर्होत्रैः पञ्चमी, स्वयमातृण्णा लोकंपृणाभिः प्रच्छादयति, इत्यादि पूर्ववत् । सोमे चीयते समासेन पृथग्वेत्यर्थः ॥ ३१ ॥

सवनीयपुरुष्णो मृत्यवे ग्रहं गृह्णाति ॥ ३२ ॥

नियतत्वात् ॥ ३२ ॥

एतानग्नीन् [पृथक् समासेन वा] चिन्वान उभयी-
र्दक्षिणा ददाति क्रतुदक्षिणा [यथासमाम्नातम्]
अग्निदक्षिणाश्चेति । क्रतुदक्षिणाः सर्वेषामग्निदक्षि-

णाश्चेतुर्यदनुक्तं मन्त्रब्राह्मणे तत्प्रसिद्धम् । [ अत्र पृथगप्रयुज्य न समस्यन्ते ] ॥ ३३ ॥

इतिशब्दः प्रकारवाची । क्रतुदक्षिणा अग्निदक्षिणाश्च पृथग्ददातीति भावः ॥३३॥

[अग्निं चित्वा सौत्रामण्या यजेत । मैत्रावरुण्या वाऽऽमिक्षया] ॥ ३४ ॥

ततः सौत्रामणी मैत्रावरुणी वा । रात्रिसत्रेषु शतरात्रान्तेषु समहाव्रतेषु । केचि-न्महाव्रतवर्जितेष्वपि काठकचातुर्मास्येषु त्रिषु सारस्वतेषु साध्यानां षडहवर्जितेषु विश्वसृजामयने प्रजापतेः सहस्रसंवत्सरे वा वैश्वसृजोऽग्निर्नियतः । नान्यः काठकः । एके शाखिनः पठन्ति–वैश्वसृजे वैश्वदेवपशु(शो)रुपालम्भनमिति । विश्वेभ्यो देवेभ्यः प्राणाय त्वा जुष्टमुपाकरोमीति वैश्वसृजो यस्मिन्कर्मणि पशौ वा सोमे वा चीयते तत्प-शोरुपालभ्य विश्वेभ्यो देवेभ्यः प्राणाय त्वा जुष्टमिति शाखान्तरत्वाद्विकल्पः । तत्र श्लोकाः—

रात्रिसत्राणि यानि स्युः शतरात्रान्तकानि च ।
सत्रे विधृते वा (विषुवद्व्रतयोश्चा)पि त्रिषु सारस्वतेषु च ॥
न साध्यानां सहस्रे च सत्रे सविश्वसृजो यथा ।
प्रजापतेः सहस्रे च ह्यग्निरेष विधीयते ॥
नान्यः काठक एष स्यात्पश्वादिषु विधीयते ।
व्यस्तं वा तु समस्तं वा पृथक् कृत्वा समस्यते ॥

समाप्तो वैश्वसृजः ॥ ३४ ॥

आरुणकेतुको ब्राह्मणव्याख्यातः ॥ ३५ ॥

अथाऽऽरुणकेतुकः पञ्चमः काठकः स ब्राह्मणव्याख्यातः प्रायेण । तस्य प्रयोग उच्यते । इह भाष्यकाराभिप्रायेणाग्निहोत्रदर्शपूर्णमासचातुर्मास्येषु चेतव्य इति । अथ पुरश्चरणं यजमानस्य । संवत्सरमेतद्व्रतं चरेत् । इत्यासंवत्सरं वा मासद्वयं वाऽध्वर्युर्यजमानं प्रति व्रतं कारयेत् । अध्ययनकाल (अध्वर्य्वभाव) आचार्यो वा कारयेत् । व्रतचरणक्रमः–वहन्तीभिरुद्धृताभिः पूताभिरद्भिः शौचाचमनादि करोति । ततः प्रातः-काले स्नानमवगाहनैः । ततः प्रादेशमात्राभिः समिद्भिरौदुम्बरीभिर्लौकिकमग्निमुपसमिन्धे पुनर्मामैत्विन्द्रियमित्यादिना नियमः । होमः समिध इति ।

अथाऽऽरुणकेतुकमग्निं चेष्यमाण उपकल्पयते संभारान् । आतपति वर्ष्याः कूप्याः स्थावरा वहन्तीः पल्वल्या जीवन्तं कूर्मं दीर्घदण्डं पुष्करपर्णं यावतीः संवत्सरस्य रात्र-यस्तावतीर्मृन्मयीरिष्टकाः कुम्भीस्तत्संख्याकान् हिरण्यशकलान् रुक्मं हिरण्मयं पुरीष-

औदुम्बरीः समिधः शङ्कुसंवरा आज्यं दधि मधु प्रभूतानि पुष्करपर्णानि पुष्करदण्डानि पुष्कराणि सर्वा ओषधीरौदुम्बरीमासन्दीं कृष्णाजिनं त्रि संनेहायसं (?) मृन्मयमुदपात्रं हरितदर्भस्तम्बं हिरण्यशकलानि सहस्राणि, औदुम्बर मृन्मुग्रहमर्कपर्णमजाक्षीरं वालुकाश्च । तस्याग्नेः पुरस्तान्मासद्वयमादौ प्रातरग्निहोत्रं हुत्वा प्राणानायम्याऽऽरणकेतुकमग्निं चेष्य-माणो मासद्वयं व्रत चरिष्य इति संकल्प्य स्नात्वा लौकिकमग्निमुपसमाधाय तत्र पुनर्मामै-त्विति तिसृभिरृग्भिस्तिस्र औदुम्बरीः समिध आधाय ग्नेरुपसमाधानाद्याज्यभागान्ते—अग्नये वायवे सूर्यायेत्येवमादिभिर्मन्त्रैर्होमान्हुत्वा परिषेचनान्तं करोति । एवमहरहरामासद्वयादौ-दुम्बरीभिरग्निसमिन्धनम् । तथाऽहरहस्त्रिसन्ध्यं स्नायात् । तथाऽहरहर्भैक्षाशी स्यात् । चतुर्थकाले पानभक्षो वा । चतुर्थे काले चोदकादेः पानं भोजनं च कर्तव्यमित्यर्थः ।

एवं व्रतं समाप्य चतुर्दश्यां प्राणानायम्य प्रातरग्निहोत्रं हुत्वा प्राणानायम्य पूर्ववत् पशुबन्धसंकल्पं कृत्वाऽऽरणकेतुकमग्निं चेष्ये, प्रजावान्भूयासमिति संकल्पं कुर्यात् । प्रजाका-मश्चिन्वीतेति ब्राह्मणोक्ता. कामा वेदितव्याः । ततो विधृदादि सावित्रवत् । प्रागुत्तरात्परि-महात्कृत्वा यथोक्ता वेदिर्भवति (भविष्यति) तत्र मध्ये शङ्कुं निहत्याष्टादशाङ्गुल-परिमितया रज्ज्वा सर्वतः परिमण्डलं लिखेत् । तत. स्थु(सम्)ल्दर्भस्तम्बं, इत्यादिग्रन्थया-प्रोक्षणान्ते जानुदघ्नं त्रिवितस्तिं वा खात्वा वितायनी मेऽसीत्यादि लुम्पग्रहणान्तं करोति । खात्वोत्तरवेदिं विमिमीत इति वचनात् । धर्मेमात्रोपवपनमद्भिः पूरणविधाना-न्मात्राभ्यन्तरलेखा, संमार्याभिरवकीर्य दर्भे प्रच्छाद्य दध्ना मधुमिश्रेण संमार्यामिश्च वा-न्यतः संपूर्य वसति । सिकतानां स्थाने शर्कराणा म्वयमातृण्णाना पुरीषाणामिति सं-मार्या एव क्षेप्तव्या इति वचनात् ।

अथवा सामपठितेन संमार्या एवोपधेया इति वातरशनीयशाखिनः समामनन्ति । साध्यस्य (स्वाद्वस्य) इति वाळखिल्यशाखिनः । सारस्वत्या इति वैखानसाः । याः काश्चेति केतवोऽरुणा. शाखिन. । एता. संमार्याभिर्विकल्पन्ते । महाव्रते पुर-स्ताऽनन्तरमेव प्रातरग्निहोत्रं हुत्वा प्रजापतिस्त्वेत्यादि स्वयंचित्यभिमर्शनान्तेऽग्नेर्भस्मा-सीति संमार्या निवपति । संज्ञानमित्यपि संमार्या एव । सं याव इति जल्द्वयसंसर्गे चितः स्थ परिचित इति समार्याभि. परिश्रित्याऽऽप्यायस्वेति संमार्याणां व्यूहनं करोति । उदपात्रमुपधाय मधु वाता ऋतायत इत्यादिमहाभिस्तृचुडुकुभिः परिगिहत्येत्यन्तं कूर्मो-पधानं कृत्वा संसर्पं श्रीनित्यारभ्य प्रजा अभिविपश्यन्, इत्यन्तेन कूर्ममुपतिष्ठते । दर्भ-स्तम्बे पुष्करपर्णमधस्तादण्ड वेदेदूर्ध्वङ्कुलेन यथा तिष्ठति तथा निखाय तस्य दण्डं दर्भ-स्तम्बे निबध्नाति । पुष्करपर्णमारभ्य तपोयोनिरसीत्यभिमन्त्रयते । ततोऽद्भिः पूरयित्वा हिरण्यशकलमधाय वक्ष्यमाणैर्मन्त्रैः पुष्करपर्णस्याधस्ताद्दण्डमवीदश उपदधाति ।

सर्वत्र मन्त्रान्ते तथादेवतं भवति । तत्क्रमो नास्ति वाचनिको यत्र तत्रोदगपवर्गः । सर्वत्र पुरस्तान्मुखवादः । चतस्रश्चेमा दिक्षूपधेयाः । अष्टासु प्रतीक्ष्य सामान्येन सर्वत्र चतुर्वाक्यमन्त्रा विशेषत एव तत्र तत्रोच्यन्ते । भद्रं कर्णेभिरिति द्वे ऋचौ जपित्वा ताभ्यां द्वे इष्टके उपदध्यात् । आपमापामिति पञ्चभिर्महानाम्नीभिर्यजमान उष्णं शीत- मुदकं मिश्रीकृत्याध्वर्यवे दद्यात् । यजमानेन सह ताभिः पञ्चभिः पञ्चेष्टका उपदध्यात् । ततो या जाता ओषधय इत्यौषधिसूक्तेनैः । उपहिता उपतिष्ठन्ते । इमा नु कं भुवना सीषधे- मेत्येताभिस्तिसृभिर्द्विपदाभिस्तिस्र उपधाय, अग्ने त्वं नो अन्तम इति द्विपदाभिस्तिस्र उपद- धाति । सर्वे द्विवाक्या मन्त्राः । विश्वतश्चक्षुः० विश्वं भूतं भुवनं० ब्रह्मवनं० परो मात्रया० इति तिसृभिरन्ते प्रणवं कृत्वा यावच्छ्रान्तो भविष्यति तावत्प्राणन्नासित्वेत्यादि चतस्रो लोकोत्तरा नामेष्टका उपदध्यात् । लोकोत्तरा इति ज्ञानार्थम् । एवमन्यत्रापि यासां नामानि सन्ति सुमृडीकेति वाक्यद्वयेन भूमिमुपस्पृशन्भूमिमतीमुपदधाति । प्रश्नेतिहासमन्त्रा वक्ष्य- माणाः स्मृति. प्रत्यक्षमित्यष्टौ दर्भस्तम्बस्य दक्षिणत उत्तरतश्चोपदधाति । इन्द्र घोषा व इत्येतैर्यथालिङ्गमुपधाय शुक्लकृष्णे संवत्सरस्येति ताश्चेष्टका उपदधाति । ततोऽग्निः पृथिव्यामित्युपदधतां तयेति, वायुरन्तरिक्ष उपदधतां तया, सूर्यो दिव्युपदधतां, चन्द्रमा दिक्षूपदधतां तया, नक्षत्राणि स्वर्लोक उपदधतां तयेति पञ्चोपधाय ग्रहाः पञ्चजनीना- मित्येकामुपदधाति । एवं द्वादशेष्टकाभिः कृत्य आवर्तयेत् । दक्षिणपूर्वस्यामिति यथालिङ्गं यजमानो नरकेष्टकाश्च०स्र उपधाय, एतैरेव मन्त्रैरेता इष्टका उपतिष्ठन्ते । सर्वे द्विवाक्यमन्त्राः । संख्यावर्तारेकादश साकं जानामित्युपदधाति । द्वितीय दशमैकादशा- स्त्रिवाक्याः । तृतीयमन्त्र इतिशब्दं वर्जयेत् । एवमन्यत्रापि मन्त्रान्तर इतिशब्दस्य त्यागो द्रष्टव्य. । या वै प्रजा गृह्णन्त (भ्रश्यन्त) इत्यादि ब्राह्मणम् । तासामुपहितानां वायुमुपदधाति । वक्ष्यमाणैर्मन्त्रैरवशिष्टाः । मध्येऽक्षिदुःखोत्थितस्यैवेत्यृतुमतीः षडिष्टकाः । ता अग्निः पवमाना इत्यादि ब्राह्मणम् । अतिताम्राणीति चतस्रस्तासामाद्यन्तयोः प्रवर्ग्य- वच्छान्ति केचित्कुर्वन्ति । रुद्रस्य त्वेति ब्राह्मणम् । अत्यूर्ध्वाक्ष इत्यृतुमण्डलानि त्रीणि । तस्मै सर्वे ऋतवो नमन्त इत्यादि ब्राह्मणम् । द्रप्स इति द्रप्सवतीमुपदधाति । ता उपधाय न कं च न मृश्ये(शे)त् । आरोगो भ्राज इति दक्षिणत उदीचीरात्मन्यधिविद्यमुपदधाति । आरोगस्तया० भ्राजस्तया० पटरस्तया० पतङ्गस्तया० स्वर्णरस्तया० ज्योतिषीमांस्तया० विभासस्तया० इति सप्तोपधाय यत्ते शिल्पमिति अष्टमीं दर्भस्तम्बे कश्यपमुपदधाति । तासामेवानुपश्चाद्यजमान आरोगस्य स्थाने स्वतेजसा मानीत्यादिभिरष्टावात्मेष्टका उप- धाय ॐ भूर्भुवः सुव आपो वो मिथुनमित्युपहिता उपतिष्ठते । अथाध्वर्यु.—सप्त सूर्या इत्येकामुपधाय सप्त दिशो नाना सूर्या इत्युपदधाति । यद्याव इन्द्र त इति वैशं- पायनस्यैकामुपधाय चित्रं देवानामिति च काला अप्सु निविशन्त इति तिस्र उपद-

धाति । आद्ये वाक्य इरावतीति वैष्णवीं प्रस्तारस्योत्तरत उपदधाति । एवं यजुष्मतीरुपधाय पूर्ववत् द्वाभ्यां द्वाभ्यामेवैका लोकंपृणामुपदधातीति न्यायेन लोकंपृणामुपदधाति । सर्वे द्विशता प्रस्तारा । सहस्र तु सपादम इति वचनात् । पृष्ठो दिवीति सधार्यामपि प्रच्छाद्य पुष्करपर्णे पुष्करदण्डैस्तत्तत् पुष्करैश्च सम्प्रच्छाद्य द्वितीयां चितिं चिनुते । छेदमप्र निविशत इति द्वे स्वप्नवादौ मन्त्रौ ताभ्यां द्वे इष्टके उपदधाति । किं तद्विष्णोर्बलमिति तिस्र उपदधाति। अन्त्या द्विवाक्या । पृच्छामि त्वा पर मृत्युमिति मृत्युमतीश्चतस्र उपदधाति। तृतीयचतुर्थी त्रिवाक्यौ । पृच्छामि त्वा पापकृत इति निरयवतीश्चतस्र उपदधाति। अपैतु मृत्यु जयति, इति आसगम् । अपैतु मृत्यु० पर मृत्यो० मा बिभे मृत्यो ० तमेव मृत्यु विपश्चिते पवमानाय गायति तादित्यदमिति, इष्टकामुपधाय हरिं हरन्त इत्यनुवाकेनेष्टकामुपदधाति। ततो मृत्यो पात्रमन्न पायस सकलव्याध्वर्यवे दद्यात् । तस्योपधानकर्तृत्वात् ।मुष्टचष्टाविंशतिपूर्णपात्रमित्युपदेश । आ यस्मिन् सप्त वासवा० इति दर्भस्तम्बस्य दक्षिणत उपधायाग्ने नयेत्यष्टपुरीषेण दिक्षु वाडष्टाधुपदधाति । अष्टपुरी(रु)प इति ज्ञान कर्मार्थम् । तासामेवानुपश्चाद्यजमानोऽग्ने पूर्वदिश्यस्य स्थाने स्वतेजसा मानीत्यादिभिरष्टाबात्मेष्टका पूर्ववदुपदधाति । व्याहृत्यादि रीढुमित्यन्तेनोपतिष्ठते । अथाध्वर्यु कुल्याम्य ( कूप्याम्य ) स्वाहाकारवर्जितैर्विंशतिं दर्शनीरुपधाय, अप्रचो वहन्तीभ्य इति स्वाहाकारवर्जितैरष्टौ वारुणीरुपदधाति । ततो लोकंपृणादि पूर्ववत् ।

पुष्करपर्णादिभि प्रच्छादनान्ते तृतीयां चितिं चिनुते । अम्राजमाना व्यवदातेत्यादिभिरेकादश वैद्युतीरुपदधाति । तासामुपधानप्रकार पूर्वमेवोक्त । रश्मिना( भि ) तपति स(वर्ष)ति पर्जन्य इति तदन्तमवे सभार्यामिरुपधानम् । अभ्राजमानस्तया० व्यवदातस्तया० वासुकिवैद्युतस्त० रजतस्तया० परुषस्तया० श्यामस्तया० दापिष्टस्तया० अतिलोहितस्तया० इति प्रतिदिक्षु चोपधाय, ऊर्ध्वस्तया० अवपतन्तस्तया० वैद्युतस्तया० इति तिस्रो मध्य उपदधाति । ततो यजमान पूर्ववत्प्रभ्राजमानामित्यादिभिरेकादश वासुकिवैद्युतानामित्यन्ता यजमानोपधीयमाना तृतीया पत्नी तूष्णीमन्वारभते । ततो यजमानो व्याहृत्यादिरीढुमित्यन्तेनैता उपतिष्ठते । स्वानस्तया० भ्राजस्तया० अङ्घारि(ङ्घारि)स्तया० बम्भारिस्तया० हस्तस्तया० सुहस्तस्तया० कृशानुस्तया० विश्वावसुस्तया० मूर्धवास्तया० सूर्यवर्चास्तया० कृतिस्तया० इत्येकादश गन्धर्वगणानुपदधाति । गौरीर्मिमायेत्येकामुपधाय पराभवस्तया० सतपसस्तया० विद्युन्मयस्तया० यूपवस्तया० श्वापद(य)स्तया० अहमेवास्तया० अग्निविद्विष्टस्तया० इति वर्षोदीरणास्तत्र उपदधाति । समानमेतदुदकमिति वृष्टिमतीमष्टमीमुपदधाति । सोमपाना लोकमुपदधातीति सवस्य । यदक्षर भूतकृत० जमदग्निदर्दुर्वृत० इति द्वाभ्यां मित्रावरुणाभ्या

जामदग्न्ये द्वे उपधाय राज्ञः सोमस्य तृप्तास इति त्रिवाक्येन हरितामेकां तच्छंयोरित्यष्ट· वाक्येन शंयोरेकामुपदधाति सहस्रवृदियं भूमिः, इत्यष्टौ संयानीरुपदधाति। संग्रामः, अन्वेतीत्यन्तयोः परित्यागः। तयोरेतौ वत्सावितिं ब्राह्मणम्। पवित्रवन्त इति चतस्र आङ्गिरसीरुपदधाति। ब्रह्मा देवानामिति प्रतीकग्रहणमथ सवितुर्ब्राह्मणम्। अमी य ऋक्षा निहतास इति श्यावाश्वस्य सप्तोपदधाति। द्वितीयषष्ठौ त्रिवाक्यौ। सप्तमः पञ्चवाक्यः। अन्धो मणिमविन्ददिति पञ्च वैश्वदेवीरुपदधाति। तत उपधाय प्रयोजनार्थ· मिति(मपि) नगरं न प्रविशेत्। प्रवृत्त्येकां निवृत्त्यस्यां तत्प्रभृत्येकान्तवर्ती स्यात्। नैतमृपिमित्यादि ब्राह्मणम्। आ तमग्न इति तिस्र आग्नेयीरुपदधाति। यददः संप्रयती· रिति चापां नामधेयानि चतस्र उपदधाति। देवाग्निरिति नारायणपठिताः पञ्चाऽऽध्यात्मि· कीरुपधाय पूर्ववल्लोकंपृणाभिः प्रच्छादनान्ते चतुर्थीं चितिं चिनोति। आतनुष्वेति चत· स्रोऽध्वर्युरुपदधाति। तृतीया त्रिवाक्या। मन्त्रे(आमन्द्रै)रिति पञ्चमीं यजमान उपधाया· णुमिश्वेति द्वे उपधाय सुब्रह्मण्योमिति पञ्चवाक्येनैकामैन्द्रीमुपदधाति। अरुणाश्वेति मेधवतीश्चतस्र उपदधाति। द्वितीयो मन्त्रः पञ्चवाक्यः। वासिष्ठो रौहिणेति असितवर्णा इति तिसृभिस्तिस्र उपधाय वाश्रेव विद्युदिति तिसृभिस्तिस्र उपदधाति। दिवो नो वृष्टिमिति सप्त वृष्टिसनीरुपदधाति। एताः सांहित्यः। उदुत्यं, चित्रमिति प्रतीक ग्रहणम्। ब्रह्मण उदरणमसीत्येतैर्ब्रह्मसदनीश्चतस्र उपदधाति। उपधाय ब्रह्मणे चरुं ददाति। अष्टयोनीमिति दिक्ष्ववान्तरदिक्षु चाष्टौ पुत्रानुपदधाति। सुत्रामाणं महीमूषु इति प्रतीकग्रहणम्। एवं मित्रश्च वरुणश्चेत्यादिभिर्मन्त्रैरष्टावुपदधाति। प्रथमतृतीयौ त्रिवाक्यौ। मित्रस्तयेत्यादि विवस्वांस्तयेत्यन्तम्। तामेवानुपश्चाद्यजमानो वसूनाॅ रुद्राणामित्यादिभिर्भान्ति इत्यन्तेऽष्टौ पुरुषानुपधाय व्याहृत्यादिरीद्वर्मिति एता उपतिष्ठन्ते। अथाध्वर्युर्विशीर्ष्णीमिति द्वे उपदधाति। द्वितीया षड्वाक्या। पर्जन्याय प्रगायतेति तिस्र उपदधाति। प्रथमतृतीयौ त्रिवाक्यौ। पुनर्मामैत्विन्द्रियमिति तिस्रः। ततो लोकपृणादि पूर्ववत्। पुष्करपर्णादिभिः प्रच्छादनान्ते पञ्चमीं चितिं चिनोति। आप्लवस्व प्रप्लवस्वेत्यादिषोडश दुःखक्षपण्यः। युवा सुवासाः, शतमिन्नु शरद इति प्रतीकग्रहणम्। कामप्रयवणमित्यस्य परित्यागः। एवा ह्येवेति षट् दिशो देवताः। प्रतिदिशमुपदधाति। द्वे मध्ये। कामस्तदग्र इति संकल्पवतीम्। आपो ह यद्बृहतीरित्यापवतीम्। एषा त्रिपदा। विधाय लोकानिति स्तम्भनवतीं, केतवो अरुणासश्चेत्येका, पूर्वे देवा अपरेणेति जन्मानुस्मृतौ। हंसः शुचिषदिति पुष्क· रपर्णस्य पुरस्ताद्दूरोहणमुपदधाति। अथ ब्रह्मजज्ञानमिति पुष्करपर्णस्योपरिष्टाद्रुक्म· मुपदधाति। हिरण्यगर्भः समवर्तताग्र इति केवलाष्टर्चात्मकं सूक्तोमिति त्रिः पठित्वा रुक्मस्योपरिष्टाद्धिरण्मयं पुरुषमुपदधाति। नात्र रुक्मपुरुषयोर्व्याघारणमित्यवचनात्।

अथ यजमानोऽग्नेः पश्चात्प्राङ्मुखोऽवस्थाय पुरुषमुपसंधाय ओमिति ब्रह्मेत्यनुवाकेनोपनिषत्पठितेन 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति न्यायेनानुशंसति । न पराचाऽनुशंसतीत्यन्यत्र वचनात् । सहस्रशीर्षा पुरुषः, इति पुरुषसूक्तानुवाकेन होताऽनुशंसति । भूर्भुवः सुवरित्यनुवाकेन ब्रह्मोपस्थायानन्तरमुत्थाय विष्णोर्नु कं, तदस्य प्रियमिति षड्टचोऽध्वर्युः शंसति । पुरुषस्य न दर्शनं साक्षाद्यथा न पश्यति पत्नी तथा वाससाऽन्तरितं कृत्वा—' सुप्रजसस्त्वा वयमिति सैव शंसति । तत्र यजमानो—भवा मित्र इति चेता(तृचेना)नुशंसनं कृत्वोमिति प्रणम्य तत्र ससुवर्णरथाश्वानध्वर्यवे ददाति । प्राकृताः पष्ठौह्यादयः सर्वेषामध्वर्य्वादीनां साधारणास्तथाऽरुणपाठकानां च शक्त्या दक्षिणोदपात्राणि दद्यात् ।

ततो भूरग्नि च पृथिवीं चेति दिक्षु संमार्योभिः प्रच्छाद्य पुष्करपर्णादिप्रच्छादनान्ते चितिक्लृप्त्याऽभिमृश्योपहितशिष्टानुदकसंपातान्कस्मिंश्चित्पात्रे समवनीय दक्षिणे वेद्यन्त औदुम्बर्यामासन्द्यां कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य तस्मिन्नासीनं यजमानं ( पत्नीं च ) अग्निमन्वारब्धमुदकसंपातैरभिषिञ्चति । देवस्य त्वेत्युक्त्वाऽग्नेस्त्वा साम्राज्येनाभिषिञ्चामीति महाग्निवदभिषिञ्चेत् । तैरुदकसंपातैः शनैरभिषिच्यमान आपो हि ष्ठेत्यादिभिः स्नायात् । समस्तशरीरमाप्लावयेदित्यर्थः । संततामिति वचनात् । योऽसौ तपन्नुदेतीति अयज्ञसंयुक्त इति गायेत् । तत आरोहणं जपतीत्यादि सावित्रवदग्निप्रणयनात् कृत्वा त्रिभिः स्थाणुभिः स्थितं मञ्चमुपरिष्टाच्चित्यस्य प्रतिष्ठाप्य तस्मिन्नग्निप्रणयनं कुर्यात् । अप्स्वग्नेः प्रणयनस्यात्यन्तासंभवात् । अथैनं मञ्चं समे यजति यथा पुरुषं प्रत्याहुतीर्जुहोति । अन्यत्सर्वमा समाप्तेः सावित्रवत्तस्याऽऽरुणकेतुके त्वग्निचितः । प्रकरणाद्वा तन्नियमो न सावित्रादौ नाप्सु मूत्रपुरीषं कुर्यादित्यादिस्मार्तस्यापि भवति वचनात् । श्रौतप्रायश्चित्तार्थं पुष्करपर्णानि हिरण्यं च नाधितिष्ठेत्तयोरन्योर्न पचेदन्नं कूर्मस्य मांसं नाश्नीयात् । संवत्सरं हि व्रतमिति ब्राह्मणम् । सांवत्सरिकाण्येतानि यावज्जीवं वा । तेषां सावित्रादीनां पशुबन्धेन चीयत इति श्रुतेः । सावित्राग्नौ सवितुः पशुरालभ्यः इति यस्मिन्नहन्यारुणकेतुकोऽग्निस्तस्मिन्नहनि यजमान आ वैश्रवणयज्ञसमाप्तेराग्निना पक्वं न भुञ्जीतेति दर्शनात् । न कंचन कुर्यात् । समाप्ते तु कर्मणि ततः श्वः प्रातरग्निहोत्रं हुत्वा प्राणानायम्य वैश्रवणेन यज्ञेन यक्ष्य इति संकल्प्योत्तरमपरमवान्तरदेशं गत्वा सर्वत्रैव चतुष्पथे गोमयेनानुलिप्य वटादीनां सप्त पर्णान्याहृत्य त्रीणि पर्णानि स्थण्डिलमध्ये प्रागग्राणि निधाय सर्वासु दिक्ष्वेकैकं प्रागग्रं स्थापयित्वा ताभिरद्भिः प्रोक्ष्य बलीन्वक्ष्यमाणान्कृसरादीन् स्थण्डिले स्थापयित्वा तस्मिन्नुत्तरदेशे तिष्ठन्नधस्तिरोधाऽजायतेति चतसृभिर्वैश्रवणमावाहयेत् । मन्त्रोक्तानामत्र देवतानामावाहनं भवति ।-शर्करासु वाऽप्सु वाऽग्नौ वेत्येके । एतैरावाहनमन्त्रैः

पाद्यार्घ्याचमनीयस्नानगन्धपुष्पाणि समर्प्य कृसरादीनि पिण्डानि कृत्वा श्रुतैरेवाऽऽवाहनमन्त्रैः पूर्ववत्परिहाप्य राजाधिराजायेति पद्भवनमध्ये लिप्यात् । तस्मिंस्तिलमिश्रौदनपर्णानि तेषा प्रथमपर्णे हिरण्यनामायेति नमस्कारान्तेन मन्त्रेण प्रथमं पिण्डं जुहुयात् । वचनादेके यागा इत्यवगन्तव्याः । जुहुयादिति वचनात् । द्वितीयं पिण्डं प्रथमात्पिण्डाद्भूयिष्ठं कृत्वा राजाधिराजायेति द्वितीयेन मन्त्रेण जुहुयात् । प्रथमपिण्डप्रमाणं तृतीयपिण्डं कृत्वा वैश्रवणायेति चतुर्वाक्येन स्वाहाकारान्तेन तृतीये पर्णे जुहुयात् । स्वाहाकारान्तेन वा जुहुयादिति वचनात् । अत ऊर्ध्वं यावत्प्रथमपिण्डं तद्विजानीयात्प्रमाणं पूर्वस्यां दिशि यत्पर्णं तस्मिन्यस्ते विघातुक इति पञ्चवाक्येन प्रथमं पिण्डं जुहुयात् । नलकूबरायेति तस्मिन्नेव द्वितीयं कुबेरायेति तस्मिन्नेव तृतीयम् । अत ऊर्ध्वं मध्याङ्गुलिभिर्वैश्रवणबलिदानम् । दक्षिणस्यां दिशि यत्पर्णं तत्र तिरोधा भूरित्यादि । तमग्निं स्थापयेद्यदग्नौ बलिहरणाख्यं कर्म प्रयुञ्जीत । ततो गृहं गत्वा कर्मेश्वरार्पणं कुर्यात् ।

अथ भाष्यकारमतरीत्या वैश्रवणयज्ञप्रयोग उच्यते—तत्राद्भ्य इति चतसृभिर्वैश्रवणमावाहयति । यदि बलिं हरेत् ( तै० आ० १-३१ ) इत्यत्रानग्नौ बलिहरणस्य पाक्षिकत्वं द्रष्टव्यम् । तस्मिन्पक्षे—हिरण्यनाभाय इति बलिं दद्यात् । अथवा तमग्निमादधीत स्थापयेद्यस्मिन्नग्नावेतद्बलिहरणाख्यं कर्म प्रयुञ्जीत । तस्यायं मन्त्रः—तिरोधा भूरित्यादिः । आधानानन्तरं तमग्निमुद्दीपयेत् तिरोधा भूः स्वाहा इत्यादिभिर्मन्त्रैः । यस्ते विघातुक इति बलिहरणं, राजाधिराजायेत्यादिभिरुपस्थाय केतवो अरुणासश्चेत्यादिनोपस्थानविशेषो वा । सूत्रकारेण त्वन्यथा प्रयोग उक्तः । स इह ब्राह्मणविरोधाच्चिन्त्य इति नोक्तः । इदं च कर्मान्तरमारुणकेतुके व्याख्यातम् । तदन्यत्रापि ब्राह्मणोक्तं कर्तव्यम् । यथाऽग्निहोत्रादिष्वबीष्टकोपधानम् । शेषं पूर्ववत् ॥ ३९ ॥

एवमारुणकेतुकं व्याख्याय स्वर्गसत्रमारभ्यते—

दिवःश्येनीभिरन्वहꣳ स्वर्गकामो यजेत । अपाध्याभिश्च । ता ब्राह्मणव्याख्याताः ॥ ९ ॥३६॥

इति सत्यापाढहिरण्यकेशिसूत्रे त्रयोविंशप्रश्ने तृतीयः पटलः ॥

यथोक्तलक्षणास्ताः सेष्टयः स्वर्गस्य द्वारो द्वारस्थानीयाः । प्राप्त्युपाया इत्यर्थः । एता नानामार्गा दिवःश्येनयः । दिवो द्युलोकस्य प्रापयित्र्यः । श्यैङ् गतौ, औणादिको निप्रत्यय एत्वं च । अनुवित्तय इति वाऽऽसां नाम । अनुष्ठानानन्तरमेव स्वर्गलाभहेतुत्वात् । यद्वा—दिवःश्येनीभिरन्वहं स्वर्गकामो यजेत । दिवःश्येन्यो नाम सेष्टयस्ताभिः शुक्लपक्षे प्रतिपदमारभ्य सप्तान्वहं यजेत । अन्वहमेकैकया त्रिहविष्कया ।

अग्नये कामायाष्टाकपालमाशायै चरुमनुमत्यै चरुमिति प्रथमा । सर्वास्त्वाद्योत्तमे तुल्यहविषी । मध्ये विशेषकामोऽयं ब्राह्मणे द्रष्टव्यो विधिः ।

तस्य कर्म—शुक्लपक्षेऽमावास्ययेष्ट्वा दैवःश्येनीभिर्यक्ष्ये । स्वर्गं लोकमवाप्नवानीति संकल्प्य, दैवःश्येनीय९ हविः । सर्वं पौर्णमासवत् । अग्नये कामाय जुष्टं० आशायै जुष्टं० अनुमत्यै जुष्टं० एवमासादनप्रोक्षणे नियोगः । यथाभागं व्यावर्तध्वमिति विभागः । इदमग्नेः कामस्येति पेषणार्थम् । अग्नये कामाय जुष्टमधिवपामीत्यादि । कपालान्युपधाय चरुद्वयं घर्मोऽसीति चरौ, आप्यलेपादिपुरोडाशेन प्रचर्य । आशाया अनुब्रूहि, आशां यज, आशाया अहमन्नादः० अनुमते प्रचरति । तुभ्यं ता अङ्गिरस्तम विश्वाः, अश्याम तं काममग्ने तवोती ( तै० सं० १–३–१४ ) इति कामस्य । 'आशानां त्वाऽऽशापालेभ्यः विश्वा आशा मधुना सꣳसृजामि । ( तै० ब्रा० २–५–३ ) इत्याशायाः । अनु नोऽद्यानुमतिर्यज्ञं, अन्विदनुमते त्वं मन्यासै ( तै० सं० ३–३–११ ) इत्यनुमतेः । नारिष्ठान्हुत्वाऽग्नये कामाय स्वाहा । आशायै स्वाहा । अनुमत्यै स्वाहा । प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहा । यथालिङ्गं त्यागः । अग्निं स्विष्टकृतं हव्यवाहमभिमातिषाहं, स्विष्टमग्ने० ( तै० ब्रा० २–४–१ ) इति स्विष्टकृतः ।

अथेष्टौ दक्षिणाकाले पष्ठौहीवरां कंसं ( भाजनं ) स्त्रियै चाऽऽभरणं, एतान्यन्तर्वेदि स्थापयित्वा नपुंसकबहुवचनेनोहः—ब्रह्माणि ब्रह्माणि स्थ ब्रह्मणे वो मा मा हिꣳसिष्ट हुतानि मह्य९ शिवानि भवत सहस्रधाराण्युत्सान्यक्षीयमाणानि दध्युः, दिवं च तैः पष्ठौहीकंसाभरणान्युत्तराणि मृत्युम् । ब्राह्मणा इमानि पष्ठौहीकंसाभरणानि । ब्राह्मणतर्पणान्तेयमिष्टिः । सर्वेष्टयो नाना भवन्ति याः कालभेदात् । केचिदेकाहवनीया इत्येकैकं कर्म । इष्ट्यायनमिति । नानाहवनीयपक्षेऽन्वहं संकल्पादि । अन्वहपक्ष आदावेव संकल्पः । नानाहवनीयपक्ष इष्ट्या यक्ष्य इति प्रथमवर्जाना दैवःश्येनीयाना९ हविः० । एकाहवनीयपक्षे चतुर्थैव ।

श्वोभूते संकल्पादि पूर्ववत् । तत्र विशेषः—अग्नये कामाय पुरोडाशं पुनश्च कामाय चरुम् । अग्नये कामाय जुष्टं० । कामाय जुष्टं० । अनुमत्यै जुष्टं० । तुभ्यं ता अश्याम तमित्यग्नेः कामस्य । कामो भूतस्य कामस्तदग्र इति कामस्य । अनु नोऽद्यानुमतिः, अन्विदनुमत इत्यनुमत्याः । नारिष्ठान्हुत्वोपहोमः—अग्नये कामाय स्वाहा । कामाय स्वाहा । अनुमत्यै स्वाहेत्यादि । स्विष्टकृति हव्यवाह९ स्विष्टमग्न इति । पूर्ववद्दक्षिणा । शेषं पूर्ववत् ।

श्वोभूतेऽग्नये कामायाष्टाकपालं ब्रह्मणे चरुम् । अनुमत्यै चरुम् । अग्नये कामाय जुष्टं० । ब्रह्मणे जुष्टं० । अनुमत्यै जुष्टं०, इत्यादि । तुभ्यं ता, अश्याम त इत्यग्नेः कामस्य । ब्रह्मजज्ञानं, पिता विराजेति ब्रह्मणः । अनु नोऽद्या-

नुमतिरन्विदनुमते त्वमित्यनुमत्याः । नारिष्ठान्हुत्वा—अग्नये कामाय स्वाहा । ब्रह्मणे स्वाहा । अनुमत्यै स्वाहा । इत्यादि । हव्यवाह१ँ स्विष्टमग्न इति स्विष्टकृतः । पूर्ववद्दक्षिणाः ।

अथ श्वोभूतेऽग्नये कामायाष्टाकपालं यज्ञाय चरुमनुमत्यै चरुम् । अग्नये कामाय जुष्टं० । यज्ञाय जुष्टं० । अनुमत्यै जुष्टं०, इत्यादि । यज्ञो रायो यज्ञः, अयं यज्ञो वर्धतामिति यज्ञस्य । इतरतयोः पूर्वोक्ताः । नारिष्ठान्हुत्वाऽग्नये कामाय स्वाहा । यज्ञाय स्वाहा । अनुमत्यै स्वाहा, इति । हव्यवाह१ँ स्विष्टमिति स्विष्टकृतः । पूर्ववद्दक्षिणाः ।

श्वोभूतेऽग्नये कामायाष्टाकपालमग्नये बलिमते चरुमनुमत्यै चरुमित्यादि । 'तुभ्यं भरन्ति क्षितये, यो देह्यो अनमयत्' इत्यग्नेर्बलिमतः । इतरयोः पूर्वोक्ताः । नारिष्ठा-न्हुत्वाऽग्नये कामाय स्वाहा । अग्नये बलिमते स्वाहा, इत्यादि । पूर्ववद्दक्षिणाः ।

अथ श्वोभूते—अग्नये कामायाष्टाकपालमनुवित्त्यै चरुमनुमत्यै चरुमित्यादि । पूर्वे देवा अपरेणानुपश्यन्, प्राणापानौ चक्षुः श्रोत्रमित्यनुवित्तेः । इतरयोः पूर्वोक्ताः । नारिष्ठादि । अग्नये कामाय स्वाहा । अनुवित्त्यै स्वाहा । अनुमत्यै स्वाहा, इत्यादि । पूर्ववद्दक्षिणाः । ताः सर्वा इष्टयो ब्राह्मणतर्पणान्ताः । आप ऐन्द्राग्नविकारा अवशिष्टाः सर्वा आग्नेयविकाराः । दिवःश्येनयः समाप्ताः । तत्र श्लोकौ—

इष्ट्वाऽमावास्यया तस्मिन्प्रथमायामुपक्रमः ।
दिवःश्येनीभिर्यक्ष्ये च दैवःश्येनं हविस्तथा ॥
आप ऐन्द्राग्नधर्माश्च शिष्टा आग्नेयधर्मकाः ।
पष्ठौही कंस आभरणं दक्षिणाश्च पृथक्पृथक् ॥

अथापाघा नाम पञ्चेष्टयः । एताश्च त्रिहविष्काः । उदवसानीयानन्तरमेताभिर्यजते । आसामाद्यन्तयोरग्न्यनुमत्योर्मध्ये तपः श्रद्धा सत्यं मनश्चरणमिति पञ्च देवताः । तास्व-पाघाभिर्यक्ष्ये । स्वर्गं लोकमवाप्नवानीति संकल्पः । आपाघा१ँ हविः । आग्नेयमष्टाक-पालं० तपसे चरुमनुमत्यै चरुमित्यादि । अग्निर्मूर्धा—भुव इत्याग्नेयस्य । तपसा देवा प्रथमजमिति तपसः । पूर्वोक्त एवानुमतेः । नारिष्ठान्हुत्वाऽग्नये स्वाहा । तपसे स्वाहा । अनुमत्यै स्वाहेत्यादि । पूर्ववत्पष्ठौह्यादयो दक्षिणाः ।

श्वोभूत आग्नेयमष्टाकपालं श्रद्धायै चरुमनुमत्यै चरुमित्यादि । श्रद्धया देवो० श्रद्धा देवीति श्रद्धायाः । इतरयोः पूर्ववत् । नारिष्ठान्हुत्वा, अग्नये स्वाहा श्रद्धायै स्वाहा, अनुमत्यै स्वाहेत्यादि । शेषं पूर्ववत् ।

श्वोभूत आग्नेयादि । सत्याय चरुमनुमत्यै चरुमित्यादि । आगात्सत्य यस्य प्रतिष्ठेति सत्यस्य । नारिष्ठान्हुत्वाऽग्नये स्वाहा । सत्याय स्वाहा । अनुमत्यै स्वाहेत्यादि शेषं पूर्ववत् ।

श्वोभूत आग्नेयमित्यादि । मनसे चरुमित्यादि । मनसो वशे, आकूतीनामिति मनसः । इतरयोः पूर्वोक्ताः । नारिष्ठान्हुत्वाऽग्नये स्वाहा । मनसे स्वाहा, अनुमत्यै स्वाहेत्यादि । शेषं पूर्ववत् ।

श्वोभूते पञ्चम्यामग्नये जुष्टं० । चरणाय जुष्टं० । अनुमत्यै जुष्टं०, इत्यादि । चरणं पवित्रं, लोकस्य द्वारमिति चरणस्य । इतरयोः पूर्वोक्ताः । नारिष्ठान्हुत्वाऽग्नये स्वाहा । चरणाय स्वाहा । अनुमत्यै स्वाहा, इत्यादि । शेषं पूर्ववत् । ब्राह्मणतर्पणान्ताः पञ्चेष्टयः । अपाघाः समाप्ताः । तत्र श्लोकः—

अपाघाभिस्तथा यक्ष्ये ह्यपार्थं च हविस्तथा ।
आग्नेयस्य च विध्यन्ताः तपसादेर्द्वयं द्वयम् ॥ ९ ॥ ३१ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां त्रयोविंशप्रश्ने तृतीयः पटलः ।

अथ त्रयोविंशप्रश्ने चतुर्थः पटलः ।

तत्राऽऽदौ बृहस्पतिसव उच्यते—

अथ सवानां व्याख्यातो बृहस्पतिसवः ॥ १ ॥

सूयत ईश्वरत्वेनाभिषिच्यत एष्विति सवा एकाहविशेषाः । तत्र बौधायनीये विशेषः—बृहस्पतिसवेन यक्ष्यमाणो भवति । स उपकल्पयतेऽश्वश्चतुस्त्रिंशो दक्षिणाः कृष्णाजिनं सुवर्णरजतौ च रुक्मौ पर्णमयं पात्रमाज्यमभिषेचनाय । अथ वै ब्राह्मणं भवति—परिस्रजी होता भवत्यरुणो मिर्मिरस्त्रिशुक्र इति । एष ह वै परिस्रजी यः खल्वतिः परिकेश्योऽप हैष मिर्मिरो यः शुक्लो बिल्विषस्तिलकवान्पिङ्गाक्षोऽप हैष त्रि(त्रि)शुक्रो यत्त्रिवेदो दीक्षते । तस्यैकरात्रीणस्य सोमं क्रीणन्ति । तिस्र उपसदः । तायते त्रिवृदग्निष्टोमो रथंतरसामा प्रवर्ग्यवानाग्नीध्रीयेक्रस्तोमः । मन्नातं देवसुवां हविषां करणम् । तस्य बार्हस्पत्योऽग्निप्राशः । बार्हस्पत्यः पशुरुपाकरणः । समानमाऽभिषेकस्य कालात् । अभिषेकस्य काले यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति ।

तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्यां रुक्माभ्यां पर्युपास्य पर्णमये पात्र आज्यमानीयाभिषिञ्चति–बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन् । सप्तास्यस्तुविजातो रवेण वि सप्तरश्मिरधमत्तमाꣳसि । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेण बृहस्पतिसवेनाभिषिञ्चामीति । समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनात् ।

तस्य प्रातःसवने सन्नेषु नाराशꣳसेष्वेकादश दक्षिणा नीयन्ते । एकादश माध्यंदिने सवने सन्नेषु नाराशꣳसेषु । अश्वद्वादशास्तृतीयसवने सन्नेषु नाराशꣳसेषु । माध्यंदिने सवनेऽश्वं दद्यादिति ह स्माऽऽह मौद्गल्यः । स वा एष नैमार्जनो यज्ञः । स यथा ह वा इयं गैरेयी नदी निमृजत्येवꣳ ह वा एष एतेन यज्ञक्रतुनेष्ट्वा पाप्मानं भ्रातृव्यं निमृजतेति । स एतस्मिन्नेव पूर्वपक्षे चतुष्टोमेनाग्निष्टोमेन यजेत, पुरा श्रेषाच्छान्त्यै ( १८–२ ) इति ॥ १ ॥

अथ वैश्यसवोऽभिधीयते—

वैश्यः पुष्टिकाम आग्नेयादीनि सप्त हवीꣳषि निर्वपति ॥ २ ॥

अथ वैश्यः पुष्टिकामो वैश्यसवेन यक्ष्ये । अथेष्ट्या यक्ष्ये विद्युत्० । वैश्यसवं हविः० । पात्रसादनकाले—चत्वारिंशत्कपालानि चरुस्थाली स्फ्यश्च द्वंद्वं शिष्टानि सर्वाण्यन्वाहार्यस्थाली च । निर्वपणकालेऽग्नये जुष्टं० । पूष्णे जुष्टं० । सवित्रे जुष्टं० । त्वष्ट्रे जुष्टं० । वरुणाय जुष्टं० । विश्वेभ्यो देवेभ्यो जुष्टं० । मरुद्भ्यो जुष्टमित्यादि यथार्थानि । अग्ने हव्यꣳ रक्षस्व पूषन्हव्यमित्यादि । एवं निगमा यथादैवतमूहेन । आग्नेयमष्टाकपालः पौष्णश्चरुः पिष्टानां सावित्रोऽष्टाकपालस्त्वाष्ट्रोऽष्टाकपालो वारुणोऽष्टाकपालो वैश्वदेव एकादशकपालो मारुत एकादशकपाल इत्यादि । ब्राह्मणतर्पणान्तेष्टिः संतिष्ठते । याज्यानुवाक्याश्च व्याख्याताः ॥ २ ॥

पृश्निः पष्ठौही मारुत्यालभ्यते तस्याः पुरस्तात्स्विष्टकृतो यजमानायतन ऋषभचर्म प्राचीनग्रीवमुत्तरलोमाऽऽस्तृणाति । तस्मिन्नासीनं दध्नाऽभिषिञ्चति ॥ ३ ॥

पृश्निः श्वेतवर्णा पष्ठौही चतुर्वर्षा । तादृशी काचिदजा मरुद्देवताकाऽऽलम्भ्या । एतस्य पशोर्मध्ये विष्टकृत पुरस्तादभिषिञ्चेदिति विधिरुन्नेयः । अभिषेकार्थमासनं तु ऋषभचर्मेऽध्यभिषिञ्चति ( तै० ब्रा० २–७–२ ) इति वचनात्तद्विस्य चर्मणि पर्य-

भिषिञ्चेत् । अभिषेकद्रव्यं तु दध्नाऽभिषिञ्चति ( तै० ब्रा० २–७–२ ) इति । दध्नो रसरूपत्वाद्विद्वेश्यमन्त्रेण समर्धयतीति वाक्यशेषात् ।

पशुबन्धेन यक्ष्ये । समारोपणादि सर्वं निरूढवत् । षड्ढोत्रादि । उपाकरणकाले पृश्निः पष्ठौही मारुत्यालभ्यते । मरुद्भ्यस्त्वा जुष्टमुपाकरोमीत्यादि । वनस्पतियागं कृत्वा यजमानायतनं व्याघ्रचर्माऽऽस्तीर्य तस्मिन्नासीनं यजमानं दध्नाऽभिषिञ्चति तूष्णीम् । अथ स्विष्टकृदादि । पशुबन्धः संतिष्ठते ॥ ३ ॥

ब्राह्मणो ब्रह्मवर्चसकाम आग्नेयादीन्यष्टौ हवींष्यपि निर्वपति पुरस्तात्स्विष्टकृतो हिरण्येन घृतमुत्पूय तेन कृष्णाजिन आसीनमभिषिञ्चति ॥ ४ ॥

अथ ब्राह्मणः सवं द्वितीया ( णसवो द्वितीय ) आग्नेयादयस्तस्य कर्म—अन्यस्य स्व- ( सव )स्य सूतसव इति नाम । अथ बोधायनेनोक्तं केचित् ब्राह्मणसव इति सूत- सवेन यक्ष्ये, ब्रह्मवर्चसी भूयासमिति संकल्पः । अन्वाधानादि । तस्याऽऽग्नेयोऽष्टा- कपालमित्यादि । ब्राह्मणसवेन यक्ष्य इति वाऽऽग्नेयोऽष्टाकपालः सौम्य एकादशकपालः सावित्रोऽष्टाकपालो बार्हस्पत्योऽष्टाकपालोऽग्नीषोमीय एकादशकपालः सारस्वतोऽष्टाक- पालो वारुणोऽष्टाकपालो द्यावापृथिव्य एककपालः । अत्रैककपालधर्मो न । सिद्धमिष्टिः संतिष्ठते ।

अत्रापि पृश्निः पष्ठौही मारुत्यालभ्यते । पशुबन्धेन यक्ष्य इत्यादि पूर्ववत् । पुर- स्तात्स्विष्टकृतश्चर्मण्यासीनं हिरण्येन घृतमुत्पूय तेनाभिषिञ्चति । समाप्यते पशुबन्धः । एतौ सवावमावास्यायां पौर्णमास्यां वा करोति । ततः सौत्रामणी मैत्रावरुणी च ॥ ४ ॥

अथ सोमसवोऽभिधीयते—

अथ सोमसवः । यत्किंच राजसूयमृते सोमं तत्सर्वं भवति ॥ ५ ॥ मैत्राबार्हस्पत्यं सꣳस्थाप्य सौमीं सूतवशामालभते ॥ ६ ॥ तस्याः पुरस्ता- त्स्विष्टकृतोऽषाढं युत्सु पृतनासु पप्रिमिति सौम्य- चोऽद्भिरभिषिञ्चति ॥ ७ ॥ शेषं सꣳस्थाप्य सꣳ- सृपाꣳ हविर्भिर्दशापेयेष्ट्या द्विपशुना पशुबन्धेन सात्यदूतानां हविर्भिः प्रयुजामिति यजेत ॥ ८ ॥

अभिषेकाय सौमीमृचमपाढं युत्सु० मदेम सोम, ( तै० ब्रा० २-७-४ ) इत्यन्तः । राजसूये हेमपीवत्राभिषेचनीयदशपेयकेशवपनीयव्युष्टिद्विरात्रक्षत्रधृतिसंज्ञकाः सप्त सोमयागास्तान्वर्जयित्वा यत्किंचिदनुमत्यादिकं सौत्रामण्यन्तं प्रयोगजातं तत्सर्वमस्मिन्सोमसवेऽनुष्ठेयम् । तस्मिन्राजसूयप्रयोगमध्येऽरत्नीनां हविर्भ्य ऊर्ध्वं संसृपां हविर्भ्यः पुरस्तात्सौमी सूतवशाऽऽलब्धव्या । तस्याः स्विष्टकृतः पुरस्तादभिषेकः कार्यः ।

सोमसवेन यक्ष्ये स्वर्गार्थम् । फाल्गुन्याः पौर्णमास्याः पूर्वस्याः षष्ठ्या आरम्भः । अथवा बोधायनोक्तवचनादामावास्येन हविषेष्ट्वाऽऽरम्भ इत्यादि पूर्ववत् ॥ १-८ ॥

अथ पृथिसवोऽभिधीयते—

पृथिसवेन पशुकामः । यत्किंच राजसूयमनुत्तरवेदिकं तत्सर्वं भवति ॥ ९ ॥ मैत्राबार्हस्पत्यस्य पुरस्तात्स्विष्टकृतो ये मे पञ्चाशतमिति नाराशंस्यर्चोऽद्भिरभिषिञ्चति ॥ १० ॥ समानमुत्तरं पूर्वेण पशुबन्धवर्जम् ॥ ११ ॥

पृथिनाऽनुष्ठितत्वादयं पृथिसवः । एतेन पृथिसवेन यो यजते स पशुमान्भवेदित्यर्थः । अस्मिन्पृथिसवे कर्तव्यविशेषमाह—यत्किंचेति । राजसूये ह्युत्तरवेदियुक्ताः सत्यसोमयागा द्विपशुः पशुबन्धश्चातुर्मास्यानि चैतानि वर्जयित्वा यदन्यदनुमत्यादिकं सौत्रामण्यन्तमस्ति तत्सर्वमत्र कर्तव्यम् । नरैः शंसनीयः स्वयमपि मनुष्यरूपो देवविशेषो नराशंसस्तत्संबन्धिनी—' ये मे पञ्चाशतम् ' इत्यादिका नाराशंसी तयाऽभिषिञ्चेत् ॥ ९-११ ॥

अथ गोसव उच्यते—

व्याख्यातो गोसवः ॥ १२ ॥

एष गोसवः ( तै० ब्रा० २-७-६ ) इत्यादिना व्याख्यातः। एष वक्ष्यमाणो गोसवाख्यः क्रतुरनुष्ठेयः। स च सर्वेषु स्तोत्रेषु षट्त्रिंशस्तोमयुक्त उक्थ्यसंस्थारूपः। पृष्ठस्तोत्रे बृहत्सामयुक्तः । तस्य पवमानस्तोत्रे कण्वरथंतराख्यं साम भवति । अथ वाजपेयराजसूयाभ्यामुत्कृष्टत्वेनैतं सवं प्रशंसति—यो वै वाजपेयः । स सम्राट् सवः । यो राजसूयः । स वरुणसवः । प्रजापतिः स्वाराज्यं परमेष्ठी । स्वाराज्यं गौरेव (इत्यादि) । एतदनुष्ठानं तद्वेदनं च प्रशंसति—गौरेव भवति ( तै० ब्रा० २-७-६ ) । बृहत्सामेति यदुक्तं तदेव सामद्वयरूपेण प्रशंसति-उभे बृहद्रथंतरे भवत इत्यादि । दाक्षिणात्यां

विशेषमाह—अयुतं दक्षिणाः, इत्यादि । अभिषेकद्रव्यमाहाऽऽपस्तम्बः–प्रतिधुषाऽभिषेक्ष्यति, इति प्रतिधुषा तदानीमेव दुग्धेन क्षीरेणाभिषिञ्चेत् । अथाभिषेकस्य देशकालौ विधत्ते–अनुद्धते वेद्यै दक्षिणत आहवनीयस्य बृहतः स्तोत्रं प्रत्यभिषिञ्चति । इयं वाव रथंतरम् । असौ बृहत् । अनयोरेवैनमनन्तर्हितमभिषिञ्चति ( २–७–६ ) इति । पेकार्थमन्त्रस्तु- रेवज्जाताः०, स्वाराज्येनाभिषिञ्चामीत्यन्तः ॥ १२ ॥

अथौदनसवोऽभिधीयते—

ओदनसवेनान्नाद्यकामो रोहिण्यां यजेत ॥ १३ ॥

पूर्वपक्षे रोहिण्यां चन्द्रमा युक्तस्तस्मिन्काल ओदनसवः ॥ १३ ॥

उपव्युषꣳ श्रपयति ॥ १४ ॥

उपव्युषः काल ओदनसवेन यक्ष्येऽन्नाद्यायेमिति संकल्पः । अप --- ति लौकिकाग्नौ । केचिदौपासन इति । आहवनीय इत्यपरे ॥ १४ ॥

दर्विहोमो भवति ॥ १५ ॥

प्रकृतत्वात् ॥ १५ ॥

उदित आदित्ये सिꣳहे व्याघ्र इति चतस्र आहुतीरोदनाद्धुत्वा ॥ १६ ॥

उदित आदित्ये होमकालः । चतस्र आहुतीर्जुहोति दर्विहोमवचनात् ॥ १६ ॥

राडसि विराडसीत्येतैः प्रतिमन्त्रं मन्थान् कल्पयति । आज्यमन्थं ब्राह्मणः पयोमन्थं राजन्यो दधिमन्थं वैश्य उदमन्थं शूद्रः ॥ १७ ॥

यथासंख्यं ब्राह्मणराजन्यवैश्यशूद्रा मन्थान्कल्पयन्ति ॥ १७ ॥

इन्द्राय त्वा तेजस्वते तेजस्वन्तꣳ श्रीणामीति । ब्राह्मणः सक्तुभिराज्यꣳ श्रीत्वा तेजोऽसीत्यभिमन्त्र्य तत्ते प्रयच्छामीति यजमानाय प्रयच्छति ॥ १८ ॥ तेजस्वदस्तु मे मुखमिति प्रतिगृह्य भक्षयति ॥ १९ ॥ एवमितरेषामुत्तरोत्तरप्रयणोऽभिमन्त्रणः प्रदानो भक्षणश्च यथालिङ्गम् ॥ २० ॥

तेजओजःपयआयुष्मन्तः श्रयणमन्त्रवर्णाच्च प्रयच्छामीति प्रदानार्थकत्वादध्वर्युं कर्तारमिति न्यायात् ॥ १८–२० ॥

सर्वान्यजमानो भक्षयित्वा हिरण्यं ब्राह्मणाय ददाति । तिसृधन्वꣳ राजन्याय । अष्ट्रां वैश्याय । मापकमण्डलुं शूद्राय ॥ २१ ॥

यद्धिरण्यं ददाति ( तै० ब्रा०–२–७–९ ) इत्यादि ब्राह्मणेनोक्तम् । तिसृभिरिषुभिः सहितं धनुस्तत्तिसृधन्वम् । अष्ट्रा फालं लाङ्गलमस्या लोहशलाकेत्यर्थः । ग्रत्कमण्डलुम् । आयुष्टेन ( २–७–९ ) इति ब्राह्मणम् ॥ २१ ॥

हिरण्यं यजमानायाऽऽबध्नात्यायुरसि विश्वायुरसीत्याबद्ध्यमाने जपति ॥ २२ ॥

कर्णे हिरण्याभरणबन्धनं तु यद्धिरण्यमाबध्नाति (२–७–९)इति वचनात् ॥२२॥

ओदनशेषं यजमानः प्राश्नाति ॥ २३ ॥

हुतशेषम् ॥ २३ ॥

इममग्ने आयुषे वर्चसे कृधीति प्राश्नन्तमभिमन्त्रयते ॥ २४ ॥

प्राश्नन्तं यजमानमध्वर्युरभिमन्त्रयत इत्यर्थः ॥ २४ ॥

अपां ग्रहान्गृह्णन्ति ये मन्थान्कल्पयन्त्यपां यो द्रवणे रस इत्येतैः प्रतिमन्त्रम् ॥ २५ ॥

अपां ग्रहान् गृह्णन्ति ये मन्थान्कल्पयन्ति–अपां यो द्रवणे रस इति । एतैः प्रतिमन्त्रं ब्राह्मणराजन्यवैश्यशूद्रा गृह्णन्ति । अपां यो द्रवणे रसस्तमहमस्मै गार्ग्यायणाय देवदत्ताय तेजसे ब्रह्मवर्चसाय गृह्णामीति ग्रहणम् ॥ २५ ॥

तैरेनꣳ सꣳसृष्टैरभिषिञ्चति यतो वातो मनोजवा इति ॥ २६ ॥

तैरपां ग्रहैः । वर्चसेत्यन्तः ॥ २६ ॥

समुद्र इवासि गह्मनेत्येनमभिमन्त्र्यायैनं त्रिभिर्दर्भपुञ्जीलैः पवयति । अवभृथस्याम्नायो भवतीति विज्ञायते ॥ २७ ॥

विभूरित्यन्तः । एनं यजमानम् । त्रिभिः पवयति ( २–७–९) इति विधिर्द्रष्टव्यः ।
॥ २७ ॥

अग्रेणाऽऽहवनीयं रथोऽवस्थितो भवति ॥ २८ ॥

कर्मार्थं स्थापयतीत्यर्थः ॥ २८ ॥

अभिमेहीति तं यजमानोऽभ्येति ॥ २९ ॥

सपत्नहेत्यन्तः । रथं प्रत्यागच्छेदित्यर्थः ॥ २९ ॥

आतिष्ठ मित्रवर्धन इत्यारोहन्तमभिमन्त्रयते ॥ ३० ॥

अभिभुर्वन्निरित्यन्तः । यजमानमिति शेषः ॥ ३० ॥

अङ्क्तौ न्यङ्कावभित इति रथचक्रे अभिमृशति । पयसी वा ॥ ३१ ॥

वाजपेये व्याख्याता ॥ ३१ ॥

आतिष्ठ वृत्रहन्निति पञ्चभिरारूढम् ॥ ३२ ॥

व्याख्याता ग्रहकाण्डे । अभिमन्त्रयत इत्यनुवर्तते ॥ ३२ ॥

दिदृक्षेण्यो दर्शनीयो भवति । य एतेन यजत
इति विज्ञायते ॥ ३३ ॥

बहुलं गृहे भवतीत्यर्थः । अत्र सौत्रामणी मैत्रावरुणी चाऽऽमिक्षा ॥ ३३ ॥

संतिष्ठत ओदनसवः ॥ ३४ ॥ ११ ॥

दर्विहोमकर्तव्य(कर्त्रे य)पात्रद्वं दक्षिणा ददाति । ओदनसवः समाप्तः ॥ ३४ ॥
॥ ११ ॥

अथ पञ्चशारदीयविधिरुच्यते—

व्याख्यातः पञ्चशारदीयः ॥ ३५ ॥

पञ्चसु शरत्सु संवत्सरेष्वनुष्ठेयः पञ्चशारदीयः । स्पष्टमन्यत् ॥ ३५ ॥

तथाऽग्निष्टुत् ॥ ३६ ॥

समानमिति । अग्निष्टुदाख्य एकाह इत्यर्थः ॥ ३६ ॥

---

१ क. दर्भपुञ्जीलशब्देन कतिपयदर्भनाडीयुक्ताः शाखाविशेषा उच्यन्ते ।

तत्र ग्रहग्रहणकाले पुरोरुचोऽभिधीयन्ते—

तस्य पुरोरुचः । अस्याजरासोऽग्न आयूंषि पवस इत्यैन्द्रवायवस्य । द्वितीया मैत्रावरुणस्य । तृतीयाऽऽश्विनस्य । चतुर्थी पञ्चमी च शुक्रामन्थिनोः पष्ठ्याग्रयणस्य । अन्यामाग्नेयीमुक्थ्यस्य नियुनक्ति । नित्या ध्रुवस्य । नियुनक्त्यैन्द्राग्नवैश्वदेवयोः । अग्निश्रिय इति तिस्रो मरुत्वतीयानाम् । श्रुधि श्रुत्कर्णेत्युत्तरा माहेन्द्रस्य । विश्वेषामदितिरिति तिस्र आदित्यग्रहस्य । उत्तमा सावित्रस्य ॥३७॥

अस्याजरा पुरोरुक्स्यादाग्निष्टुत्यैन्द्रवायवे ।
यजेति मैत्रावरुणे अश्विनेत्याश्विने ग्रहे ॥
द्वे विरूपे तु शुक्रस्य ग्रहे पूर्वेति मन्थिनि ।
श्रीणीत्याग्रयणे ह्यग्निनेत्यैन्द्राग्नग्रहे भवेत् ॥
अग्निर्देवा वैश्वदेवे ह्यग्निश्रिय इति त्रयम् ।
इया मरुत्वतीयेषु माहेन्द्रे तु श्रुधीत्यसौ ॥
विश्वेषां तिस्र आदित्ये नि त्वा सावित्रके ग्रहे ।
अग्निष्टुदाख्य एकाहे ग्रहाः षोडश वर्णिताः ॥ ३७ ॥

अथैन्द्रस्तुयागे ग्रहाणां पुरोरुचोऽभिधीयन्ते—

नियुनक्ति वैश्वदेवस्य । नित्या पात्नीवतस्य । नियुनक्ति हारियोजनस्य ॥ ३८ ॥ इन्द्रस्तुतेन्द्रस्तोमेनोक्थ्येनेन्द्रियकामो वीर्यकामो वा यजेत । ऐन्द्रियः पुरोरुचस्तिष्ठा हरी कस्य वृषेत्यैन्द्रवायवस्य । तृतीया मैत्रावरुणस्य । चतुर्थ्याश्विनस्य । पञ्चमी षष्ठी च शुक्रामन्थिनोः । सप्तम्याग्रयणस्य । नित्योक्थ्यस्य । नियुनक्ति ध्रुवैन्द्राग्नवैश्वदेवानाम् । नित्या मरुत्वतीयमाहेन्द्राणाम् । आ नो विश्वाभिरूतिभिरिति तिस्र आदित्यग्रहस्य । उत्तमा सावित्रस्य ॥ ३९ ॥

इन्द्रस्तुन्नामके यागे ग्रहाणां स्युः पुरोरुचः ।
तिष्ठा कस्येत्यैन्द्रवायव इन्द्रं तदनन्तरे ॥

द्वितीय इत्याश्विने स्यात्सं सुरः शुक्रसंज्ञके ।
उत त्यं मन्थिनाम्नि स्यादिन्द्रेप्वाग्रयणग्रहे ॥
महीत्यैन्द्राग्नके वैश्वदेवे तूर्णं न इत्यसौ ।
आदित्ये तिस्र आ नः स्युरिमां सावित्रकग्रहे ॥ ३८ ॥ ३९ ॥

नियुनक्ति वैश्वदेवपात्नीवतयोः । नित्या हारि-
योजनस्य । व्याख्यातोऽप्तोर्यामः ॥४०॥ १२ ॥

तत्स्वरूपं सूत्रकारेण स्पष्टमुक्तम्—अप्तोर्यामश्चेत्संधिवमसानुत्रयंश्चतुर्थ्यैश्चमसगणेभ्यो राजानमतिरेचयति, इति । संधिस्तोत्रपर्यन्तैरेकोनत्रिंशत्स्तोत्रैर्युक्तमतिरात्रप्रयोगमनुष्ठाय तत ऊर्ध्वं चतुर्थ्यैश्चमसगणेभ्यो राजानमतिरेचयेत् । ततः पुनरपि चत्वारि स्तोत्राणि भवन्ति ।-तदेवं त्रयस्त्रिंशत्स्तोत्रयुक्तोऽप्तोर्यामः । तस्य निर्वचनं दर्शयति—यदाप्नोत् । तदप्तोर्यामस्याप्तोर्यामत्वम् ( तै० ब्रा० २–७–१९ ) इति । यस्मात्कारणादनेन क्रतुना पशूनाप्नोत्तस्मात्कारणादाप्त्यर्थो यामो यज्ञ इति व्युत्पत्त्या तन्नाम संपन्नम् ॥ ४० ॥ १२ ॥

अथ यज्ञसंयुक्तालौकिको राजाभिषेकोऽभिधीयते—

राजाऽभिषेक्ष्यमाणो जनपदेषु समवेतेषु द्वयोः
पुण्याहयोः पूर्वस्मिन्स्थण्डिलं कल्पयित्वाऽग्निमुप-
समाधाय संपरिस्तीर्य वसति ॥ ४१ ॥

राजाभिषेककर्म पुरोहितेन कर्तव्यम् । जनपदेषु समवेतेषूभयोः पुण्याहयोः । ततः स्थण्डिलेऽग्निप्रतिष्ठापनान्तं कृत्वाऽधिवसतीत्यर्थः ॥ ४१ ॥

उदित आदित्ये ये केशिनो नर्वे ब्रह्मण इति द्वे
आहुती हुत्वा राडसि विराडसीति यजमानाय-
तन औदुम्बरीमासन्दीं प्रतिष्ठापयति ॥ ४२ ॥

उदिते सूर्ये तस्मिन्नग्नौ ये केशिनः—नर्वे ब्रह्मण इति द्वे आज्याहुती । आसन्दी मञ्चकं स्थापयेदित्यर्थः ॥ ४२ ॥

तां राजाऽऽरोहति ॥ ४३ ॥

तामासन्दीम् ॥ ४३ ॥

आरोह प्रोष्ठमित्यारोहन्तमभिमन्त्रयते ॥ ४४ ॥

पाप्मादिति मन्त्रान्तः ॥ ४४ ॥

अत्र वरं ददाति ॥ ४५ ॥

पुरोहिताय दक्षिणार्थं दद्यादित्यर्थः ॥ ४५ ॥

तस्यापासीनः केशान्वापयते येनावपत्सविता क्षुरेणेति ॥ ४६ ॥

सꣳसृजाथेति मन्त्रान्तः । तान्केशाञ्छकृत्पिण्डे समोप्य दर्भस्तम्बे निदधाति। वक्ष्यमाणत्वाद्विनियोगः ॥ ४६ ॥

मा ते केशानिति केशान्प्रकीर्यमाणाननुमन्त्रयते ॥ ४७ ॥

आदधादित्यन्तः ॥ ४७ ॥

तान्समोप्य दर्भस्तम्बे निदधाति तेभ्यो निधानमिति ॥ ४८ ॥

दर्भस्तम्बे तान्केशान्निदधाति । सꣳसृजाथेति मन्त्रान्तः ॥ ४८ ॥

अथैनमाज्यमिश्रेण पयसाऽनक्ति । वलं ते बाहुवोरिति बाहू । यत्सीमन्तमिति शिरः । व्याघ्रोऽयमग्नाविति सप्ताऽऽहुतीर्हुत्वा द्यौरसि पृथिव्यसीति यजमानायतने शार्दूलचर्म प्राचीनग्रीवमुत्तरलोमाऽऽस्तृणाति। तस्मिन्राजोपविशति ॥ ४९ ॥

व्याघ्रोऽयमग्नौ०, सावीर्हि देव०, भूतो भूतेषु चरति०, येभिः शिल्पैः०, येभिरादित्यस्तपति०, आऽयं मातु०, यत्ते शिल्पं०, इति सप्ताऽऽहुतीस्तस्मिन्नग्नौ हुत्वा यजमानायतनदेशे शार्दूलचर्म प्राचीनग्रीवमुत्तरलोमाऽऽस्तृणाति प्रसारयति । तस्मिन्नास्तृते चर्मणि राजोपविशेदित्यर्थः ॥ ४९ ॥

व्याघ्रो वैयाघ्र इत्यासीनमभिमन्त्रयते ॥ ५० ॥

त्वद्राष्ट्रमधिभ्रशादित्यन्तः । आसीनमभिमन्त्रयते पुरोहितः ॥ ५० ॥

अथैनं तोक्मावास्ताभिर्दूर्वावास्ताभिर्वाऽद्भिरभिषिञ्चति या दिव्या आप इति प्रतिपद्याऽऽपाद्व्रतात् ॥ ५१ ॥

छन्दसेति मन्त्रान्तः । यास्वप्सु तोक्मानि व्रीह्यङ्कुराण्यवास्तानि प्रक्षिप्तानि ता आपस्तोक्मावास्ताः । एवं दूर्वावास्ता अपीति भावः ॥ ५१ ॥

अरुणं त्वा वृकमित्यभिमन्त्र्य ॥ ५२ ॥

हुवेमेत्यन्तः । राजानमिति शेषः ॥ ९२ ॥

प्र बाह्वेति बाहू प्रसार्य ॥ ५३ ॥

हुवेमेत्यन्तः । उभौ बाहू ॥ ९३ ॥

इन्द्रस्य ते वीर्यकृत इत्युपावहरति ॥ ५४ ॥

उपावहरति । पुनः संकुचितौ कुर्यादित्यर्थः ॥ ९४ ॥

अग्रेणाग्निꣳ रथोऽवस्थितो भवति । अभिप्रे-
हीति तं राजाऽभ्येति ॥ ५५ ॥

गतः ॥ ९९ ॥

आतिष्ठ वृत्रहन्तम इत्यारोहन्तमभिमन्त्रयते ॥ ५६ ॥

व्याख्यातः ॥ ९६ ॥

अङ्कौ न्यङ्काविति रथचक्रे अभिमृशति ।
पक्षसी वा ॥ ५७ ॥

पारयन्त्विति मन्त्रान्तः । अङ्कशब्दश्चक्रवाची । न्यङ्कशब्दश्चक्रयुक्तपक्षवाची । द्रव्य-
पृथक्त्वादभ्यावर्तेत इति न्यायादभिमर्शनमन्त्रावृत्तिः ॥ ९७ ॥

नमस्त ऋप इति पुरोहितमभिमन्त्रयते ॥ ५८ ॥

ब्रह्मन्तवेदमस्त्विति मन्त्रान्तः ॥ ९८ ॥

तिष्ठा रथ इति सारथिम् ॥ ५९ ॥

अभिमन्त्रयत इत्यनुवर्तते ॥ ९९ ॥

आ रश्मीनिति रश्मीनालभते ॥ ६० ॥

रश्मीन् प्रग्रहान् ॥ ६० ॥

आतिष्ठ वृत्रहन्निति पड्भिरारूढम् ॥ ६१ ॥

सत्पतिं पतिमिति मन्त्रान्तः । अभिमन्त्रयत इत्यनुवर्तते ॥ ६१ ॥

परि मा सेन्या इति द्वे वाचयित्वा ॥ ६२ ॥

सौभगा युवमिति मन्त्रान्तः । राजानमिति शेषः ॥ ६२ ॥

उत्तराभिस्तिसृभिरभिमन्त्र्य ॥ ६३ ॥

द्वीपिनमप्स्वन्त इति मन्त्रान्तः ॥ ६३ ॥

उदसावेत्वित्यादित्यमुदीक्षयति ॥ ६४ ॥

भवन्त्विति मन्त्रान्तः । सूर्यमवेक्षयेद्राजानम् ॥ ६४ ॥

अन्नवतामिति जनपदाननुवीक्षते ॥ ६५ ॥

ग्रामानवेक्षेत ॥ ६५ ॥

संतिष्ठते राजाभिषेकः ॥ ६६ ॥

राजाभिषेकः समाप्तः ॥ ६६ ॥

अथ विघनाख्यः कश्चिदेकाहविशेष उच्यते—

व्याख्यातो विघनः ॥ ६७ ॥

विहन्त्यनेनेति व्युत्पत्त्या कर्मणो विघननाम । तत्राधिकारिणं दर्शयति—यं राजानं विशो नापचायेयुः ( तै० ब्रा० २-७-१८ ) इत्यादि । यं राजानं स्वकीयाः प्रजा न पूजयेयुः करं न दद्युः । अथवा यो वा ब्राह्मणस्तमोरूपेण पाप्मना प्रकर्षेणाऽऽवृतः स्यात् । सोऽयमुभयविधः पुरुषोऽत्राधिकारी । स च विघनाख्येनैव क्रतुना यजेत । तथा प्रातिकूल्यं विनाश्य प्रजानामाधिपत्यं राजा गच्छति । ब्राह्मणश्च विपाप्मा भवति । स्तोत्रविशेषं तु तस्य विघनाख्यस्य क्रतोर्द्वादशाख्येन स्तोमेन युक्तं स्तोत्रद्वयं कर्तव्यम् । तथा चतुर्विंशाख्येन स्तोमेन युक्तं स्तोत्रद्वयं कर्तव्यम् । तच्च स्तोत्रचतुष्टयमौद्भिद्य-मेवोद्भेदनसाधनमेव । अत्र च प्रकृते क्षत्रस्य राज्ञः स्वकीयाः प्रजाः करं प्रयच्छन्तीति यदेतदेवौद्भिद्यं प्रातिकूल्यस्योद्भेदनं तच्च स्तोत्रचतुष्टयेन सिध्यतीति ॥ ६७ ॥

संतिष्ठन्ते सवाः सवाः ॥ ६८ ॥ १३ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे त्रयोविंशप्रश्ने चतुर्थः पटलः ।
इति सत्याषाढहिरण्यकेशिसूत्रे त्रयोविंशः प्रश्नः ।

गतोऽर्थः । द्विरुक्तिः प्रश्नसमाप्त्यर्था ॥ ६८ ॥ १३ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोग-चन्द्रिकायां त्रयोविंशप्रश्ने चतुर्थः पटलः ।
त्रयोविंशः प्रश्नश्च समाप्तः ॥

---

# सत्याषाढविरचितं श्रौतसूत्रं—

## वाञ्छेश्वरसुधीविरचितव्याख्यासमेतम् ।

अथ चतुर्विंशप्रश्ने प्रथमः पटलः ।

---

वन्दे दुण्ढिं महालिङ्गं विश्वेशं मणिकर्णिकाम् ।
ईश्वरश्रीनिवासार्याहोबलाख्यगुरूत्तमान् ॥
हिरण्यकेशिनां सूत्रं प्रवर्ग्यस्य यथामति ।
व्याचष्टे श्रुतिमालोच्य श्रीमान्वाञ्छेश्वरः सुधीः ॥

प्रवर्ग्यं संभरिष्यन्नमावास्यायां पौर्णमास्यामापूर्यमाणपक्षे वा पुण्ये नक्षत्रे तूष्णीं काण्टर्की समिधमाधाय युञ्जते मन इति चतुर्गृहीतं जुहोति ॥ १ ॥

अथ हिरण्यकेशिसूत्रे प्रवर्ग्यसूत्रं व्याख्यायते । तत्रानारभ्याधीतत्वाज्जोतिष्टोमप्रकरणे प्रवर्ग्यः सूत्रकृता न व्याख्यातः । अत एव सर्वक्रत्वन्ते तन्निरूपणं युज्यते । न चाऽऽपस्तम्बादिभिः क्रतुप्रकरणे पठित इति भ्रमितव्यम् । प्रवर्ग्यपरित्यागेन तत्पूर्वोत्तरप्रयोगस्यैवाऽऽपस्तम्बानुक्तता(युक्त)त्वेन ज्योतिष्टोमप्रयोगमध्ये प्रवर्ग्यप्रयोगसूत्रस्याऽऽधुनिकप्रक्षिप्तत्वेन तत्राप्यनारभ्याधीतत्वस्य स्फुटत्वात् । अत एव ज्योतिष्टोमप्रकरणे धूर्तप्रभृतयो न व्याचख्युः । प्रवर्ग्य इति कर्मनामधेयम् । प्रवृज्यते तप्यतेऽस्मिन्घर्म इति व्युत्पत्तेः । तस्य साधनसंपादनं संभरणं तच्च पर्वणि पूर्वपक्षे पुण्ये नक्षत्रे वा नियतम् । पुण्यनक्षत्रशब्देन देवनक्षत्रं ग्राह्यमिति बोधायनचयनसूत्रव्याख्यायां स्पष्टम् । तेन योऽमावास्यायां यक्ष्यमाणोऽपरपक्षे प्रवृञ्ज्यात् । तेन प्रागेव पूर्वपक्षादौ प्रवर्ग्यः संभरणीयः । न च क्रयपूर्वदिनत्वं संभरणस्य तदानीं न संपद्यत इति वाच्यम् । पौर्णमासीसुत्यापक्ष एव तस्य संभवात् । न च संकोचो दोषः । सुत्याप्रवृञ्जनपक्षे तत्संकोचावश्यंभावात् । दृश्यते हि जातेष्ट्यादावन्यथानुपपत्तिबाधितस्य निमित्तशास्त्रस्य शौचपर्वादिशास्त्रेणापि

---

( महादेवशास्त्रिसंकलितप्रवर्ग्यटिप्पणी )

विनेययुक्ताखिलसिद्धवर्यंलसच्चिदानन्दसुखं मुनीन्द्रम् ।
नमामि सूत्रार्थविदे मुदाऽहं हिरण्यकेश्याख्यगुरुं कृपाब्धिम् ।
त्रयोविंशे कौलिलीयं सावित्रचयनानि च ।
वक्ष्यतेऽथ चतुर्विंशे प्रवर्ग्यः शुक्रियव्रतम् ॥

तप्ते घृते पयःप्रक्षेपः प्रवृञ्जनम् । तद्यस्मिन्कर्मविशेषे विद्यते सोऽयं प्रवर्ग्यः । स कर्मविशेषो यथा संपद्यते तथा प्रवृञ्जनं कुर्यादित्यर्थः । प्रवर्ग्यं संभरिष्यन्निति । तं प्रवर्ग्यं संभरिष्यन्नुपकल्पयते, खादिरीमौदुम्बरीं वैणवीं वैकङ्कतीं वाऽभ्रिं व्याममात्रीं वाऽरत्निमात्रीं—

भावः । तथा च प्रकृतेऽपि सुत्याप्रवृञ्जनवचनसंकुचितस्य क्रयपूर्वदिनत्वस्य पूर्वपक्षपुण्यनक्षत्रबोधकशास्त्रेणापि संकोचे न काचिदनुपपत्तिः । तत्र यदा बहिष्क्रतु संभरणं कुर्यात्तदा क्रतुसंकल्पं कृत्वाऽप उपस्पृश्य सौमिकानेव ऋत्विजो वृत्वाऽग्निं च विहृत्य संभरेत् । तूष्णीं मन्त्रं विना काण्टकीं कण्टकवतीं समिधमाधाय समिधमग्नौ प्रक्षिप्य युञ्जते मन इत्यनेन मन्त्रेण चतुर्गृहीतमाहवनीये जुहुयात् ॥ १ ॥

---

प्र०दि०बोमयतः क्षुणं मृदं च भावितां करणीयां कृष्णाजिनं वराहविहतं वल्मीकवपां मू(पू)तीकस्तम्बं बादरस्तम्बं वा छागापयोऽर्मकपालानि शर्करा अयाञ्जनपिष्टा अजलोमानि कृष्णाजिनलोमानि सूनामाधिकरणीं कर्तारं कुशलं वेणुकाण्डं मदन्तीः, ( बौ० श्रौ० ९–१) इत्याह भगवान्बोधायनः । आपूर्यमाणपक्षः शुक्लपक्षः । पुण्यं नक्षत्रम् । 'यत्पुण्यं नक्षत्रम् (तै०ब्रा० १–५–२) इति ब्राह्मणम् । अमावास्यायां पौर्णमास्यां वेति त्रीण्यपि तुल्यविकल्पितानि । पूर्वं प्रातरारम्य प्रवृञ्जत इति भाष्यकृत् । आपूर्यमाणपक्षपुण्यनक्षत्रयोः समुच्चयः । नापरपक्षपुण्यनक्षत्रेऽन्यान्यपरपक्षेषु पुण्यनक्षत्रेण ज्योतिर्ज्ञाः प्रामाण्येन संगृह्णन्ते । दीक्षितस्य समन्त्रकत्वादिह तूष्णींग्रहणम् । काण्टकी कण्टकसमित् । क्रतुसंकल्पः कर्मणामादौ । इतरथा यत्कर्म क्रियमाणं तत्कर्म तस्य क्रतोरङ्गमिति न ज्ञायतेऽसंकल्पिते क्रतौ । अतः क्रियते पूर्वं संकल्पः । विमुच सदनन्तरं, यथा दीक्षितः प्रवर्ग्यं संभरिष्यंस्तस्य कर्मक्रमं कृत्वा संकल्पः विमुच, ततः सोमप्रवाकादिमधुपर्कान्तं, ततोऽग्निप्रणयनं समिदाधानादि प्रतिपद्यते । दीक्षितश्चेत्तेष्वेवाग्निषु यानि शक्यन्ते कर्तुं युञ्जत इत्यादि कृष्णाजिनमुपनह्यत्येवमन्तमग्नयो धार्यन्ते । अदीक्षितश्चेत्तन्मध्ये पतितान्यग्निहोत्रादीनि तस्मिन्नेव विहारे कर्तव्यानि दीक्षणीयोत्तरकाल एव प्रतिषेधो न पूर्वम् ।

केचित्तु संकल्पादेवाग्निहोत्रादीनां प्रतिषेधः । दीक्षणीयोत्तरकाल एवेत्यवचनादिति । तदनुपपन्नम् । अग्निहोत्राविच्छेदनार्थत्वाद्व्रतस्य तस्य च पुनर्विधीयते । दीक्षणीयायामग्निहोत्रप्रतिषेधं व्रतं न च क्रियते । तत्कथम् । अग्निहोत्रसंततः । तस्मादग्निहोत्रं च हूयते यज्ञान्ते च न दर्शपूर्णमासादीनि । यथदीक्षितश्चेदेवं सर्वत्र वर्तिषु यद्युखासंभरणाच्च । पशुसौत्रामणी त्रैधातवीया साकंप्रस्थायीयापञ्चबिलपञ्चशारदीयापश्वादिष्वङ्गभूतेष्वपि केचित्प्रवर्ग्यसंभरणमात्र एवापकृष्यमाणे यो वदन्त्यायः प्रकृतावुखाशब्दस्वादिति । तेषामविद्यमानत्वान्नास्ति प्रयोगसंबन्धः । प्रधानानामप्यङ्गप्रधानविधित्वाद्यथा दर्शपूर्णमासचातुर्मास्यकौकिल्यश्वमेधसाधस्क्रपञ्चशारदीयादिषु विद्युद्वृष्टी च सर्वं प्रयोक्तव्यमिति न्यायः । सर्वेषाऽसंकल्पिते क्रतौ यत्किंचित्कर्म तस्य क्रतोरङ्गमिति न ज्ञायते । एवंप्रकाराणि क्रतुसंकल्पात्पूर्वमपि कर्तव्यानि । यथा द्रव्यकल्पनेष्टकाकरणेष्टकाश्रपणे स्रुक्कल्पनादीनि तूष्णीकानि एवंप्रकाराणि कर्तव्यानि । अनयर्थोऽनाहुतिगणत्वात् ' युञ्जते मनः' (तै० आ० ४–२ ) इति चतुर्गृहीतं जुहोति ॥ सविता देवता ॥ १ ॥

न दीक्षितस्य जुहुयात्काण्टकीमेवैतया समिध-
मादध्याद्यजुरेव वा वदेदित्येके ॥ २ ॥

चतुर्गृहीतमित्येतदनुवर्तते । दीक्षितस्य दीक्षासंस्कृतस्य चतुर्गृहीतं न जुहुयात्। किंतु एतयर्चा काण्टकीं समिधमेवाऽऽदध्यात् । न चतुर्गृहीतमित्येवकारार्थनिषेधस्तु न गिरा गिरेति ब्रूयादितिवदेवकारार्थानुवादः । अत्र दीक्षितस्य जुहुयात्समिधमेवाऽऽदध्यादित्येताभ्यां समिद्विधिचतुर्गृहीतनिषेधाभ्यां प्रतीयमानः समिद्धोमः पूर्वोक्ततूष्णींहोमापेक्षया भिन्न एव न तु तस्मिन्नेव होमे मन्त्रविधिः । तथात्वे यजुरेव वा वदेदित्यग्रिमपक्ष एवकारेण होमव्यावृत्तौ तूष्णींहोमस्यैव निवृत्त्यापत्तेः । अतो मन्त्रसाध्यसमिद्धोमस्तूष्णींहोमाद्भिन्नः । एवकारनिषेधत्वाच्च रात्रिश्राद्धं न कुर्यादितिवच्चतुर्गृहीतमात्रनिवृत्तिः । तत्रैव होमे केवलमन्त्रपाठस्य विकल्पः । यजुरेव मन्त्रमेव वदेत् पठेदुच्चारयेत् । ऋचि यजुःशब्दो यजुर्वेदे मन्त्रपाठाद्गौणः । केचित्तु प्रवर्ग्यमन्त्रानृचो यजूंषि वाक्ये वाक्ये विच्छिद्य विच्छिद्य प्रयुञ्जते तत्र मूलं चिन्त्यम्। अर्धर्चादन्यत्र विच्छेदे प्रमाणाभावात् । बोधायनस्तु दीक्षितस्य जपमात्रमाह ॥ २ ॥

देवस्य त्वेत्यग्निमादत्ते खादिरीमौदुम्बरीं वैणवीं वैकङ्कतीं
वा पूर्ववत्प्रमाणामभ्रिरसि नारिरसीत्यभिमन्त्रयते ॥ ३ ॥

देवस्य त्वेत्यनेन मन्त्रेणाभ्रिमादद्यात् । अभ्रिर्व्याख्याता चयनप्रकरणेऽस्माभिः । अभ्रिप्रकृतिभूतान्वृक्षानाह—औदुम्बरीमित्यादि । अग्निप्रकरणेऽभ्रिप्रकृतिवृक्षेष्वभिहितेषु पुनरत्र वृक्षविशेषग्रहणं तत्रत्यपलाशादिव्यावृत्त्यर्थम् । पूर्ववत्प्रमाणा मुष्टिमात्रप्रादेशमात्रारत्निमात्रत्वादिपूर्वोक्तप्रमाणाम् । आपस्तम्बस्तु तामग्निप्रकरणोक्तामेवेहातिदिशति । तामभ्रिरसि नारिरसीत्यनेनाभिमन्त्रयेत् ॥ ३ ॥

---

भ० टि०—होमप्रतिषेधस्तस्य । यदि दीक्षितः प्रवर्ग्यसंभरणं कारिष्यन् केचिदेतयर्चा द्वितीया समिधं मा भूत्कर्मविलोप इति । एकामेव समिधं न तूष्णीमेवेत्यवधारणात् । पुनर्वृक्षनियमाच्च । यजुर्वेदपाठाद्यजुः ( तै० आ० ५–२ ) इत्युच्यते । दीक्षित( स्य ) तामेव काण्टकीमेतयर्चाऽऽदध्यादृचमेव वा केवलं ( ला ) वदेत् । ऋचि यजुःशब्दो याजुर्वेदिकत्वात्। आदद इति मन्त्रान्तः॥ २ ॥ तामौदुम्बरादयो वानस्पत्याः । 'स खादिरोऽभवत्' ( तै० आ० ५–१–२ ) इति । अतोऽभ्रिः खादिरी कर्तव्या । महावीराख्यं पात्रं निष्पादयितुं मृत्खननार्थोभयतस्तीक्ष्णा व्याममात्री काष्ठरुद्रारुरूपाऽभ्रिरित्युच्यते । व्याममात्रत्वादिलक्षणानि, एकादश उखासंभरणप्रस्तावे व्याख्यातानि । अध्वरकृद्देवेभ्य इत्यन्तः ॥ ३ ॥

उत्तिष्ठ ब्रह्मणस्पत इति ब्रह्माणमामन्त्रयते ।
उपोत्तिष्ठति ब्रह्मोभावुत्तरमर्धर्चं जपतः ॥ ४ ॥

उत्तिष्ठ ब्रह्मणस्पत इति मन्त्रेण ब्रह्माणमाह्वयेत् । ब्रह्मोपोत्तिष्ठति स्वस्थानादुत्थायाध्वर्युसमीपमागच्छतीत्यर्थः । उभौ ब्रह्माध्वर्यू उत्तरमर्धर्चमुपप्रयन्त्वित्येनं जपतः पठतः ॥ ४ ॥

प्रैतु ब्रह्मणस्पतिरिति प्राञ्चोऽश्वप्रथमा गच्छन्ति यत्र संभारान्वेछच( रात्श्रेष्य )न्तो गच्छन्ति पुरस्ताद्देवास्यैते परिश्रितेऽभ्युदाहृता भवन्तीति विज्ञायते ॥ ५ ॥

प्राञ्चः पूर्वाभिमुखाः । अश्वः प्रथमोऽग्रयायी येषां तेऽश्वप्रथमाः । अश्वं पुरस्कृत्य व्रजन्तीत्यर्थः । यत्र यस्मिन्पूर्वदिक्प्रदेशे संभारान्मृदो वेत्स्य ( दः खनिष्य )न्तो भवन्ति जानन्तीत्यर्थः । प्राच्यामेव दिशि यत्र मृल्लभ्यते तत्र गच्छन्तीत्यर्थः । पक्षान्तरमाह—पुरस्तादिति । अस्य प्रवर्ग्यस्यैते वक्ष्यमाणाः संभाराः परिश्रिते सर्वतस्तिरस्करणीयुक्ते प्रथममेवाभ्युदाहृता आनीता भवन्ति, इति विज्ञायते । श्रुतौ श्रूयत इत्यर्थः ॥ ५ ॥

कोऽसौ देशस्तत्राऽऽह—

अग्रेणाऽऽहवनीयं मृत्खनः पूर्वः पूर्व इतर उत्तरेण मृत्खनं कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य देवी द्यावापृथिवी इति द्यावापृथिवी अभिमन्त्रयते मृत्खनं वध्यासमिति मृत्खनेऽभ्र्या प्रहरति मखस्य शिर इत्यपादाय मखाय त्वेति हरति मखस्य त्वा शीर्ष्णे इति कृष्णाजिने निवपति ॥ ६ ॥

प्रवर्ग्यार्था मृद्यत्र खन्यते स मृत्खनो देशः । सोऽग्रेणाऽऽहवनीयादाहवनीयस्य पुरस्ताद्भवति । इतरो वराहविहतादिस्ततः पूर्वस्तस्मात्पूर्वप्रदेशे पूर्वभागे भवति ।

---

प्र० टि०—उत्तिष्ठन्ब्रह्माणमामन्त्रयतेऽध्वर्युः । यजमान इति वाधूलः । यथा शृणोति तथेति भाष्यकृत् । उपप्रयन्त्विति ब्रह्माध्वर्यू जपत इत्यर्थः ॥ ४ ॥ गच्छन्ति अभिप्रव्रजन्ति स यजमानोऽस्य कर्मणोऽप्रति(मि)समी[क्षा]हार्यत्वान्न पत्नीमानयति । वचनात्केचिदानयन्ति यजमानतुल्यत्वात् । यत्र यस्मिन्देशे मृद्बियते तत्र गच्छन्ति । पुरस्ताद्देवेति वचनादस्य प्रवर्ग्यस्यैते संभाराः परिश्रिते कटादिना प्रथममेवाऽऽहृता भवन्तीति श्रुतौ पठति ॥ ५ ॥ कोऽसौ देशस्तमाह—यत्र मृत्खन इत्याकाङ्क्षा चेत्तत्राग्रेणाऽऽहवनीयम् ।

उत्तरेण मृत्खनं मृत्खनस्योत्तरदेशे कृष्णाजिनं प्राचीना ग्रीवा यस्य तादृशम्, उत्तरलोम, उत्तराणि उपरितनानि लोमानि यस्य तत्तथोक्तम् । आस्तीर्य प्रसार्य । देवी द्यावापृथिवी इति द्यावापृथिवी अभिमन्त्रयते । अनेन मन्त्रेण मृत्खनं वाऽभिमन्त्रयते । ऋध्यासमद्येति मन्त्रेण मृदं खनति । मखस्य शिर इति अपादाय गृहीत्वा मृदमिति शेषः । मखायेति हरति नयति । मखस्य त्वा शीर्ष्ण इति कृष्णाजिने निवपति निदधाति ॥ ६ ॥

एवं द्वितीयं च तृतीयं च हरति ॥ ७ ॥

स्पष्टम् । प्रहरणादिनिवपनान्तेनानुसमयस्तं त्रिरावर्तयति मृत्खनाभिमन्त्रणं तु सकृदेव ॥ ७ ॥

तूष्णीं चतुर्थं यावतीं मृदं प्रवर्ग्यपात्रेभ्य आप्तां मन्यते ॥ ८ ॥

तूष्णीमित्यादि स्पष्टम् । यावतीं मृदं प्रवर्ग्यपात्रेभ्यो महावीरादिकरणायाऽऽप्तां पर्याप्तां मन्यते तावतीं चतुर्थ एव पर्याये हरतीति पूर्वेण संबन्धः ॥ ८ ॥

एवमितरेभ्यः ॥ ९ ॥

इतरेभ्यः संभारेभ्य एवमेव हरति । सकृदादावभिमन्त्रणं त्रिभिस्त्रिभिः पर्यायै-राहरणं चतुर्थे हरति ॥ ९ ॥

इयत्यग्र आसीरिति वराहविहतमभिमन्त्रयते देवीर्वम्रीरिति वल्मीकवपामिन्द्रस्यौजोऽसीति पूतिकानग्निजा असि प्रजापते रेत इति

प्र० टि०—तस्मात्पूर्वदेश इत्यर्थः । इतरश्च संभारः पूर्वः पूर्वस्तस्मिन्पूर्वदेश इत्यर्थः । अनु मेऽमंस्तासामिति मन्त्रान्तः । यां मृत्तिकां ग्रहीष्यन्स्यात्तामिति । मृदं यावतीं पर्याप्तां मन्यते तावतीं गृह्णाति । यत्र मृद्गृह्यते स मृत्खन उच्यते । तद्भ्या-सवति(ती) ऋध्यासमद्येति । आदाय हरति कृष्णाजिनसमीपम् । प्राचीनग्रीवमुत्तरलो-मास्तृते ॥६॥ एवं प्रहरणादिनिवपनान्त एको हरणपर्यायः, अभिमन्त्रणवर्जम् । एवमि-तरान्संभारानाहरणेऽभिमन्त्रणे च विशेषः । हरतीति शेषः ॥ ७ ॥ यावतीं मृदं पर्याप्तां मन्यते तावतीं चतुर्थपर्याये(ण) तूष्णीं हरति । 'तूष्णीं चतुर्थं हरति । अपरि-मितादेव' (तै० आ० ५–२) इति ब्राह्मणम् ॥८॥ येन प्रकारेण मृदाहरणमुक्तं तेनैव प्रकारेणेतरे सर्वे संभाराः संपादनीयाः । अभिमन्त्रणे तु तत्र तत्र मन्त्रविशेषोऽस्ति । देवी द्यावापृथिवी (स० श्रौ० २४–१–१३) इत्यत्र मृदभिमन्त्रणो द्रष्टव्यः ॥ ९ ॥

कृष्णाजिनलोमान्यजलोमानि च सꣳसृष्टानि संभृत्याऽऽयुर्धेहि प्राणं धेहीत्येतैरश्वेनावघ्राप्य मधु त्वा मधुला करोत्वित्यजया पुंछगल- याऽभिदोग्धि ॥ १० ॥

वल्मीकवपां पूतिकानित्युभयत्रापि अभिमन्त्रयत इत्यनुषङ्गः । अग्निजाऽसीत्यस्य संसृष्टसंभरणे विनियोगः । आयुर्धेहि प्राणं धेहीत्यस्याश्वावघ्रापणे । मधु त्वा मधुला करोत्वित्ययमभिदोहनमन्त्रः । अभिदोहनमुपरिदोहनम् । छगलो नायास्तनंधयः । स पुमान् यस्याः सा पुंछगला ॥ १० ॥

अभिदोहनमेके पूर्वꣳ समामनन्ति ॥ ११ ॥

उपस्थितत्वादवघ्रापणादिति संबध्यते । तथा चाऽऽपस्तम्बः—'अभिदोहनमेकेऽवघ्रा- पणात्पूर्वं समामनन्ति' इति । शेषं स्पष्टम् ॥ ११ ॥

बहव आर्याः परिगृह्य हरन्त्युत्तरेण विहारं परिश्रित उद्धतेऽवोक्षिते सिकतोपोप्ते निदधाति ॥ १२ ॥

आर्यास्त्रैवर्णिका न शूद्रादयः । उत्तरेण विहारस्योत्तरभागे परिश्रिते परिश्रयणयुक्ते विहारस्य परिश्रितत्वेऽपि पुनः परिश्रित इति वचनं स्वतन्त्रपरिश्रयणान्तरप्राप्त्यर्थम् । उद्धत उद्धननादिसंस्कृतेऽवोक्षितेऽवोक्षणसंस्कृते सिकताभिरुपोप्ते स्थण्डिलीकृते निद- धाति स्थापयति ॥ १२ ॥

मधु त्वा मधुला करोत्विति मदन्तीभिरुपसृज्यैतैरे- वोखासꣳसर्जनैः सꣳसृजति यत्किंच भवर्ग्यं उदक-

---

प्र०टि०—सर्वत्राभिमन्त्रयत इति शेषः । इह स्वियत्यग्र आसीरिति मन्त्रः । वराहो दंष्ट्रया यं मृद्विशेषं संपादयति तन्मृत्स्वरूपं वराहविहतम् । वल्मीकस्य वपा निष्पादिका क्षुद्र- जन्तुस्वरूपा यस्य ताम् । *आग्नेयी वा एषा यदजा* इत्यजाया आग्नेयत्वश्रवणात् । अग्निर्देवेभ्यो निलायत कृष्णो रूपं कृत्वा ( तै० ब्रा० १–१–२ ) इति श्रवणाच्च । उभयस्याग्नित्वमभिप्रेत्य तल्लोम्नामग्निजत्वमुक्तम् । महावीरदार्ढ्यहेतुत्वात्प्राजापत्यसृष्टौ लोम्नां सारत्वम् । आयुर्धेहीत्यवघ्रापणमजयाऽभिदोहनं मृदेव नान्येन पात्रेण हस्तेन शक्यत्वात् । मधु त्वेति तेनावघ्राणात्पूर्वमापस्तम्बादयो मन्यन्ते ॥ १० ॥ ११ ॥

आर्याः पूज्याः सदाचारसंपन्ना ब्राह्मणा एव परिहरन्ति । तेनाऽऽर्या(णां) परि- ग्रहणेन रक्षांस्यपहतानि भवन्ति । तेषां बहुत्वेनास्मिन्द्रव्ये पूजा कृता भवति । उत्तरेण विहारादुद्धत्ते, अद्भिरवोक्षितेन गृह्णाति । परिश्रिते कटादिभिर्वा ॥ १२ ॥ तथा अपो मदन्त्यः, तन्मेलनादस्मिन्द्रव्ये तेजः संपादितं भवति । यद्यपि जलसेचनादेव महावीर-

कृत्यं मदन्तीभिरेव सत्क्रियत इत्यत्यन्तप्रदेशो
नैनं स्त्री प्रेक्षते न शूद्रो न कुर्वन्नभिप्राणि-
त्यपहाय मुखमनभिप्राणन्वेणुना करोति ॥ १३ ॥ (ख० १) ॥

---

मदन्तीभिस्तप्तोदकैः संभारान्मृदादीन्संसृजति संमेलयति । एतैरेवैतैरप्युपात्तसंसर्जनी-येरर्मकपालादिभिर्दृढीकरणार्थैः संसृजति । आपस्तम्बीया मृदंशस्यार्थे ग्राह्यम् । यत्किंचित्प्रवर्ग्ये उदककृत्यमुदकेन करणीयं यत्किंचित्कर्म तत्सर्वं मदन्तीभिरेव कुर्यां-न्नान्योदकेन । तथा तैरेव सर्वप्रवर्ग्यस्यापि विविच्यते न संभारमात्रविषयः । नैनं स्त्री प्रेक्षते । न शूद्रः । प्रेक्षत इति संबन्धः । न कुर्वन्नभिप्राणिति । प्रवर्ग्यपात्राणि कुर्वन्नध्वर्युर्न तेषामुपरि श्वसिति । अपहाय मुखं परावृत्त्याऽन्यत्र श्वसितीत्यर्थः । अन-भिप्राण[न्] नभिश्वसन्वेणुना करोति । पुनरभिप्राणनविषयः प्रत्यक्षेण मृत्पा-निश्वासप्रतिषेधार्थः सन्कथंचिद्दैवान्मानुषाद्वाऽपराधकृन्मन्ते दन्तौष्ठादनुष्ठेय-मित्येतदर्थम् ॥ १२ ॥ ( ख० १ ) ॥

न प्रवर्ग्यमादित्यं च व्यवेयादन्तरेण विप्रक्रान्ते
प्रवर्ग्ये आदित्योऽप्यन्तर्हितो भवतीत्येव विप्रकृ-
ष्टीभूते नैनं समाहरेत् ॥ १२ ॥

---

प्रवर्ग्यमादित्यं च न व्यवेयादिति प्रवर्ग्यादित्ययोर्मध्ये व्यवधानं न कुर्यात्। तयो-र्मध्ये यो न व्यवहितः प्रत्यक्षो देशस्तं कश्चिदपि नातिक्रामेदिति यावत्। विप्रक्रान्ते प्रक्रम्यापरिसमाप्ते सति प्रवर्ग्ये यत्र क्व च यदा कदाचिदादित्योऽस्तमियादस्तं गच्छेत्तदा कृतान्तादेव विरमेत्। आदित्ये दृश्ये यावत्कृतं तावत्येव समाप्नुयात्। अन्ये तु अस्य वचनस्य प्रवर्ग्यसंभरणमात्रविषयत्वं वदन्ति। तन्न युज्यते। यत्र क्व च विप्रक्रान्ते प्रवर्ग्य इति प्रवर्ग्यसंबन्धिकर्ममात्रे क्रियमाण आदित्योऽस्तमियादिति सामान्यवचनेन सर्वविष-यत्वज्ञापनेन संभरणमात्रविषयत्वाभावात्। अन्यथा यत्र क्वचेत्यस्य वैयर्थ्यापत्तेः। अपात्यन्तप्रदेश इत्याधिकारसूत्रेण सर्वप्रवर्ग्यसाधारणधर्माधिकारविरोधाच्च। तस्मात्सा-धारणोऽयं धर्मविधिः॥ १४॥

संम्लोन्माय[1] मृदं मखस्य शिरोऽसीति पिण्डं करोति यज्ञस्य पदे स्थ इत्यङ्गुष्ठाभ्यां निगृह्य गायत्रेण त्वा छन्दसा करोमीति त्रिभिश्छन्दोभिर्म-हावीरं करोति वायव्यमकारं त्र्युद्धिं पञ्चोद्धि-मपरिमितोद्धिं वा॥ १५॥

संम्लोन्माय मथित्वाऽङ्गुष्ठाभ्यां निगृह्य निष्पीड्य गायत्रेण त्वा छन्दसा करोमी-त्यादिभिस्त्रिभिः। आदिशब्देन त्रैष्टुभेन जागतेनेत्यनयोर्ग्रहणम्। तथा चाऽऽपस्तम्बः— त्रैष्टुभेनेति द्वितीयं जागतेनेति तृतीयमिति। तैस्त्रिभिश्छन्दोभिर्महावीरं करोति। यत्र घर्मस्तप्यते स महावीरः, मृन्मय ऊर्ध्वमुखपात्रविशेषः। उक्तस्य प्रकारस्य वायव्येष्व-प्युक्तत्वान्निदर्शितं वायव्यप्रकारमिति। उद्धिरग्र( द्ध )ावयवः। अपि वा सर्वे-रेकैकमित्यापस्तम्बः॥ १५॥

प्र०टि०–यद्यत्कर्म क्रियते प्रवर्ग्य आदित्योऽस्तमियात्तस्मिन्नेव काले विरम्य श्वोभूते कृतान्तात्प्रक्रमः कृष्णाजिन उपनह्य सृजति, इत्येवमन्तं कृत्वा विरामः। 'प्रवर्ग्येण प्रच-रिष्यन्त इत्येतत्प्रभृति—यत्र क्व च विप्रक्रान्ते' इत्येतद्भवति॥ १४॥ संपिष्य मृदं मदन्त्योद-केन मिश्रयति। ततः पिण्डं करोति। अङ्गुष्ठाभ्यां निपीड्य महावीरं करोति। तत्प्रकार-माह—भाण्डस्योपरि भाण्डान्तरप्रक्षेपे यादृश आकारो भवति तादृश आकार उद्धिरि-त्युच्यते। ऊर्ध्वाधोभावेनावस्थितभाण्डत्रयवद्विविवा उद्धयो यस्य महावीरस्य सोऽयं त्र्युद्धिः। एवं पञ्चोद्धिः। अपरिमितशब्देन न संख्यावाचकत्वं सप्त नवैकादश वोद्धि-रूर्ध्वं यद्ध्री(द्ध्रि)यते मृदा सपिण्डा ऊर्ध्वसानुप्रादेशमात्रमित्युक्त्वा वायव्यप्रकारमित्य-नुक्तेऽपि एतान्येव वायव्यप्रकाराणि (इति) पुनर्वायव्यप्रकारवचनं यस्य कस्य वायव्यस्य रूपं करोति। यथैन्द्रवायव्यत्ववत्॥ १५॥

1 ग. °म्लोन्नाय्य मृ°। घ. °म्लोम्नाय मृ°।

मुखस्य रास्नाऽसीति मध्यदेश उपबिलं वा रास्नां करोति अदितिस्ते बिलं गृह्णात्विति वेणुपर्वणा बिलं करोति यावद्वेदनाय सौविष्टकृतायाग्निहो-त्राय भक्षायाऽऽप्तं मन्यते ॥ १६ ॥

मध्यदेशे महावीरमध्यप्रदेशे उपबिलं बिलसमीपे वा रास्नां रज्ज्वा(रज्ज्वाकृत्या)-कारवलयं बिलं कुक्षिं यावति बिले कृते देवताय सौविष्टकृतायाग्निहोत्राय भक्षाय पर्याप्तो घर्मस्तिष्ठति तावद्बिलं करोतीत्यर्थः ॥ १६ ॥

सूर्यस्य हरसा श्रायेत्युत्तरतः सिकतासु प्रति-ष्ठाप्य मखोऽसीत्यभिमन्त्रयते मखाय त्वेति वैव-मितरावपि वा गायत्रेणेति प्रथमं त्रैष्टुभेनेति द्वितीयं जागतेनेति तृतीयं तूष्णीमितराणि ॥ १७ ॥

सूर्यस्येति मन्त्रेणोत्तरतः सिकतासु प्रतिष्ठाप्य स्थापयित्वा मखोऽसीत्यभिमन्त्रयते महावीरमिति शेषः । मखाय त्वेति वा । अभिमन्त्रयत इत्यनुषज्यते । एवमितराविति । करोतीत्यध्याहारः । पिण्डकरणाद्यभिमन्त्रणान्तो विधिरावर्तते । अपि वेति पक्षान्तरे । गायत्रेणेति प्रथमं महावीरमित्येवं त्रैष्टुभेनेति द्वितीयं जागतेनेति तृतीयम् । उभयत्रापि महावीरमिति शेषः । तूष्णीमितराणि पात्राणीति शेषः ॥ १७ ॥

एतस्या एव मृदो दोग्ध्रे यथा सुगदण्डेवं हस्त्योष्ठ्ये वर्षीय आध्वर्यवं हसीयः प्रति-प्रस्थानमाज्यस्थालीं रौहिणकपाले च परि-

एतस्याः संस्कृताया मृदो दोग्ध्रे दोहने हस्त्योष्ठ्ये हस्तस्य गजस्येवोष्ठाकारे प्रसेच-नसमर्थं मुख्यं यथा स्रुगदण्डा दण्डरहिता दण्डं विना स्रुक्स्रुवदित्यर्थः । स्रुगाकारां

प्र० टि०—महावीरमध्यदेशे बिलसमीपे वा राह्ना रशना तां करोति । पादृक्षेन छन्दसेति मन्त्रशेषः । लौकिकेषु मृत्पात्रेषु मन्त्रमन्तरेणैव कुम्भकारा बिलं कुर्वन्ति । अत्र सु. मन्त्रेणेति व्याख्यातिः । तृतीयवेलामतिनयति ( आप० श्रौ० १६-१-१७ ) इत्यापस्तम्बः । तृतीयवेला त्रिभ्यः पर्याप्तमिति मन्यते । अग्निहोत्रशेषादेव भक्षः । अपरे तु भक्षणं तेषां तुल्यमिति मत्वा भक्षायाऽऽप्तमित्युच्यते । महावीरमिति शेषः ॥ १६ ॥ अभिमन्त्रयत इत्यर्थः । एवमुक्तप्रकारेणेतरौ द्वौ मखस्य शिरोऽसीत्यारभ्यानुवीक्षणा-न्तमावर्तते । करोतीति शेषः । प्रवर्ग्यपात्राणीति शेषः ॥ १७ ॥ एतस्याः संस्कृताया दोग्ध्रे दोहने करोति । यथा स्रुगदण्डं स्रुगाकारमदण्डं च करोतीत्यर्थः । हस्त्योष्ठ्ये प्रसेचनवती

मण्डले घर्मेष्टकां कुलायिनीं च यदि साग्नि-
चित्यो भवति ॥ १८ ॥

करोतीत्यर्थः । येनाध्वर्युश्चरति तदाध्वर्यवं वर्षीयो महत्करोतीति शेषः । ह्रसीयो न्यून-परिमाणं प्रतिप्रस्थानम् । येन प्रतिप्रस्थाता कर्म करोति तत् प्रतिप्रस्थानम् । तदेवाऽऽह-आज्यस्थालीं रौहिणकपाले च, ते परिमण्डले बुध्न्ये । घर्मेष्टकां कुलायिनीं च । यदि साग्निचित्यो भवति । क्रतुरिति शेषः । अप्रवर्ग्येऽपि क्रतावेते इष्टके कार्ये इत्यर्थः ॥ १८ ॥

गार्हपत्येऽश्वशकृन्त्युपसमाधाय वृष्णे अश्वस्य निष्पदसीति प्रथमकृतं महावीरं शफाभ्यां परिगृह्य धूपयत्येवमितरौ तूष्णीमितराणि शफा-भ्यामेवात ऊर्ध्वं महावीरानादत्ते ॥ १९ ॥

गार्हपत्येऽश्वशकृन्त्युपसमाधायाश्वकरीषाणि प्रक्षिप्य वृष्ण इत्यादिमन्त्रेण प्रथमकृतं महावीरं धूपयत्येवमितरौ धूपयतीत्यनुवृत्तिः । एवमग्रेऽपि । इतराणि पिन्वन् (?)रोहिण-कपालादीनि । अत ऊर्ध्वं शफाभ्यामेव महावीरानादत्ते न हस्तादिना । घर्माभिष्टवना-नन्तरं शफाभ्यां ग्रहणस्य सिद्धत्वेऽपि संसादनादावपि शफाभ्यामेव ग्रहणं यथा स्यादि-त्येवमर्थं वचनम् ॥ १९ ॥

अग्रेण गार्हपत्यमवटं खात्वा लोहितपच-नीयैः संभारैरवस्तीर्य देव पुरश्चरसघ्यासं

अग्रेण गार्हपत्यं गार्हपत्यस्य पुरस्तादवटं गर्तं खात्वा लोहितपचनीयैः साधनै-स्तृणादिभिः पक्वानि लोहितायन्ते यैस्तैर्लोहितपचनीयैरवस्तीर्य । अवटमित्यनुवर्तते । देव पुरश्चर सघ्यासं त्वेत्यनेन मन्त्रेण प्रथमकृतं महावीरमुपावहरति निदधाति ।

---

प्र० टि०—इत्यापस्तम्बः । येन प्रतिप्रस्थाता कर्म करोति तत्प्रतिप्रस्थानम् । करोतीति शेषः । आज्यस्थाली रौहिणकपाले च द्वे वर्तुलाकारे इत्यर्थः । घोटकप्रकारे वेत्यापस्तम्बः । यदि साग्निचित्क्रतुस्तदा द्वे इष्टके करोति । चशब्दः समुच्चयार्थः ॥ १८ ॥ अत्राप्यापस्तम्बे विशेषः—श्लक्ष्णीकरणैः श्लक्ष्णी कुर्वन्ति । अहतचण्डातकैर्गवीधुकैः क्षौतकाभिर्वेणुपर्वाभि-राज्येनेति । वृष्णो अश्वस्य शकृद्गार्हपत्ये ( आप० श्रौ० १९-१-४९ ) इति । गार्हपत्येऽश्वशकृन्त्युप्याश्वशफेन धूपयतीति दर्शनाच्चाश्वेन धर्मणेति मन्त्रान्तः । एवं द्वितीयं तृतीयं च धूपयतीत्यापस्तम्बः । गतमन्यत् । यथा महावीरो न पतति तथा यन्त्रयित्वाऽध्वर्युरेवाऽऽदत्ते । महावीराणामेव शफाभ्यां ग्रहणं नेतरेषां प्रवर्ग्यपात्राणामिति गम्यते ॥ १९ ॥ अग्रेण गार्हपत्यमवटमिति पाकस्थानवादः । लोहिता भवन्ति यैः पक्वास्ते

त्वेति तेषु प्रथमकृतं महावीरमुपावहरत्येव-
मितरौ तूष्णीमितराण्यन्ववधाय लोहि-
तपचनीयैः संभारैः प्रच्छाद्य गार्हपत्ये
मुञ्जप्रलवानादीप्यार्चिषे त्वा शोचिषे त्वे-
त्येतैः प्रतिमन्त्रं प्रतिदिशमुपोषति सर्वैः
सर्वतः ॥ २० ॥

एवमितरौ महावीरावनेन मन्त्रेणोपावहरति तूष्णीं मन्त्रं विना । इतराणि पिन्वनादी-न्यन्ववधाय निधाय लोहितपचनीयैस्तृणकाष्ठादिभिर्गर्ते प्रच्छाद्य गार्हपत्ये मुञ्जप्रलवान् मुञ्जानादीप्यार्चिषे त्वेत्यादिभिश्चतुर्भिर्मन्त्रैः प्रतिदिशमोषति दहति । अपि वेति विकल्पे । सर्वैश्चतुर्भिर्मन्त्रैः प्रतिदिशमुपोषतीत्यनुषङ्गः ॥ २० ॥

अभीमं महिना दिवमित्येताभ्यां पच्यमानान्यु-
पचरति पक्वेषु सिद्ध्यै त्वेति धृष्टी आदाय देवस्त्वा
सवितोद्वपत्विति प्रथमकृतं महावीरमुद्वास्यापच्यमानः
पृथिव्यामाशा दिश आपृणेत्युत्तरतः
सिकतासु प्रतिष्ठापयत्येवमितरौ तूष्णीमितरा-
ण्युद्वास्य ॥ २१ ॥

पच्यमानान् महावीरादीनुपचरति मन्त्राभ्यां शकृत्प्रलेपादिभिः संधुक्षयतीत्यर्थः । पक्वेषु सिद्ध्यै त्वेति मन्त्रावृत्त्या धृष्टिद्वयग्रहणम् । अन्यथैकवचनविरोधात् । देवस्त्वेत्यादिनोद्वासनावटं निष्काश्यापच्यमान इत्यनेनोत्तरदेशे सिकतासु स्थापयति । एवमनेन मन्त्रेणेतरौ महावीरौ । इतराणि तूष्णीमुद्वास्य ॥ २१ ॥

सूर्यस्य त्वा चक्षुषाऽन्वीक्ष इत्यन्वीक्षत इदमह-
ममुमामुष्यायणं विशा पशुभिर्ब्रह्मवर्चसेन पर्यूहा-

आमुष्यायणमिति गोत्रनिर्देशः । यथा प्रावाहणिरितिवत् । पित्रादिनिर्देश इत्यन्ये ।

---

प्र०टि०—प्रलोहितपचनीयास्ते. संभारैरवन्तीर्य प्रच्छाद्य चोपावहरति । उपोषति दहति । अथवा सर्वत इति षष्ठी । सर्वैर्मन्त्रैश्चतुर्भिरित्यर्थः ॥ २० ॥

शकृत्काष्ठलेपादिग्नदर्थो व्यापार उपचारः । उत्तरया वेत्याप्नन्त्यः । पक्वेषु सत्सु । धृष्टी आदाय भस्मापोह्य प्रथमकृत महावीरं दाराभ्या परिगृह्योद्वासयति । अपच्यमान इति वाक्यचतुष्टयेन वालुकासु स्थापयति परिश्रिते देशे ॥ २१ ॥

गतः । इदमहं देवदत्तादयं ब्रह्मवर्चसेन पर्यूहामीति ब्राह्मणस्य । न तु क्षत्रियवैश्ययोर्व-

मीति त्रिः प्रदक्षिणं सिकताभिः पर्यूहति विशेति राजन्यस्य पशुभिरिति वैश्यस्य गायत्रेण त्वा छन्दसाऽऽच्छृणद्मीत्येतैरजक्षीरेणाऽऽच्छृणत्ति त्रिभिस्त्रिभिरेकैकः सर्वैर्वैकैकं तान्कृष्णाजिन उपनह्य देव पुरश्चर सघ्यासं त्वेत्यासजत्युपरिष्टा-

तत्र राजन्यवैश्ययोर्विकारः । आम्नातो मन्त्रो ब्राह्मणस्येति सिद्धं भवति । अन्ये तु ब्राह्मणस्य ब्रह्मवर्चसेनेत्येतावद्भवति पारिशेष्यादित्याहुः । तन्न । सर्वपाठविरोधापत्तेः । यदि तावदेवाभिप्रेतं स्यात्तदा तावदेव वदेन्न तु कृत्स्नम् । यथा ब्रह्माणि धारयेति राजन्यस्य । तथाऽऽदावुक्तम् । ब्राह्मणेऽपि प्रथमस्य त्रिभिर्वर्णैः फलार्थवाद उक्त्वा एकैकेनोत्तरयोरित्युक्तं यथा दिशा पशुभिर्ब्रह्मवर्चसेन पर्यूहामीत्यादि । तस्माद्यथा पठित एव ब्राह्मणस्य मन्त्रः । छृणत्तिर्दीप्तिकर्मा । मृन्मयानि ह्यचिरपक्वानि अजाक्षीरेणोक्षितानि उज्ज्वली भवन्तीत्यर्थः । तत्र गायत्रेणेत्यादिनवयजुषां मध्ये प्रथमैस्त्रिभिः प्रथमकृतं महावीरं छृणत्ति, मध्यमैर्द्वितीयमुत्तरैस्त्रिभिस्तृतीयमित्यर्थः । गायत्रेण त्वा छन्दसा छृणद्मि छृणत्तु त्वा वाक्छृन्धि वाचमित्यादि सर्वैर्वैकैकमेभिः सर्वैरपि मन्त्रैरेकैकमाच्छृणत्ति । तानित्यादि । तान्महावीरान् कृष्णाजिने बद्ध्वा सह निदधाति मन्त्रेण । तूष्णीमितराणि ।

---

प्र० टि०—( योः पृथग्व )चनात् । पारिशेष्याद्ब्रह्मवर्चसं ब्राह्मणस्य । केचिदक्रमपाठात्सर्वं ब्राह्मणस्येत्येवं भवति । मन्त्रब्राह्मणयोश्चेदमहममुमामुष्यायणं विशां पशुभिर्ब्रह्मवर्चसेन पर्यूहामीत्याह । 'विशैवैनं पशुभिर्ब्रह्मवर्चसेन पर्यूहति ' ( तै० आ० ५–२ ) इति । सर्वस्याऽऽमुष्यायणेति पितुर्नामेति भाष्यकृत् । क्षत्रियवैश्ययोर्मन्त्रप्रयोगे विशेषमाह— पशुभिर्ब्रह्मवर्चसेनेत्येतावत्क्षत्रियं प्रति परित्यजेत् । वैश्यं प्रति तु विशा ब्रह्मवर्चसेनेत्येतावत्परित्यजेत् । अथैनान्प्रभूतेनाजापयसा छृणत्ति—अथैनान्प्रभूतेनाजापयसाऽऽच्छृणत्तीत्यापस्तम्बभरद्वाजौ । प्रभूतवचनान्नैकस्याः पयसा । यदाऽप्येकवचनं कृतमेकस्या एव । यद्येकैकमिहापि स्याद्गायत्रेण त्वा छन्दसाऽऽछृणद्मि च्छृणत्तु त्वा वाक्, छृन्धि वाचमिति प्रथमकृतं महावीरमाच्छृणत्ति सिञ्चति । त्रैष्टुभेन त्वा च्छन्दसाऽऽच्छृणद्मि । छृणत्तु त्वोर्क्, छृन्ध्यूर्जमिति द्वितीयम् । जागतेन त्वा छन्दसाऽऽच्छृणद्मि, छृणत्तु त्वा हविः । छृन्धि हविरिति तृतीयम् । एवं छन्दसामन्यतिषङ्गाय । सर्वैरेकैकमित्यस्मिन्पक्षे यथापूर्वं त्रिभिस्त्रिभिरपचारानर्थक्यायेति न्यायः पूर्वैस्त्रिभिः प्रथमकृतमिति भाष्यकृत् । उभयपक्षेऽप्येवमेवोत्तरैरित्यर्थः । गतः । एतान्महावीरानेकत्र बद्ध्वाऽऽसजति निदधाति क्वचिन्मन्त्रेण । तूष्णीमितराणि पात्राणि कृष्णाजिन उपनह्य बद्ध्वाऽऽसजति ।

त्काल एष मन्त्रो भवतीति विज्ञायते ॥ २२ ॥
इति सत्याषाढहिरण्यकेशिसूत्रे प्रवर्ग्याख्यचतुर्विंशप्रश्ने
प्रथमः पटलः ।

उपरिष्टात्काल एष मन्त्रो भवतीति विज्ञायते । अनेन नियम्यते। अयं मन्त्रो निधानाङ्गमिति निधानोत्तरमेव प्रयोक्तव्यः । मन्त्रान्ते हि कर्मसंनिपातः परिभाषाजैमिनिसूत्राभ्यां सिद्धान्तितः । अत्र पुनः श्रुतिप्रामाण्याद्विपरीतमनुष्ठेयमिति विज्ञायत इति पदं प्रयुञ्जानस्याऽऽशयः । आपस्तम्बस्तु निधानोत्तरं वा निधानात्पूर्वं वाऽयं मन्त्रः प्रयोज्य इति विकल्पमाह । कात्यायनस्तु पक्वानामेवेष्टकानां यजुषा करणमाह ॥ २२ ॥ (ख. २) ॥

इति श्रीमत्कावेरीतीरविराजमानकुम्भकोणनिवासिवाञ्छेश्वरसुधीविरचिते
हिरण्यकेशिप्रवर्ग्यसूत्रव्याख्याने प्रथमः पटलः ।

(अथ द्वितीयः पटलः ।)

प्रवर्ग्येण प्रचरिष्यन्तः संवृण्वन्ति द्वाराणि परि-

अवान्तरदीक्षोपायनानन्तरं प्रवर्ग्येण प्रचरिष्यन्तो द्वाराणि संवृण्वन्ति आच्छादयन्ति। प्राग्वंशस्येति शेषः । स्वस्थानस्थितया पत्न्या यथा न दृश्यते तथाऽऽच्छादयन्तीत्यर्थः । न पत्न्यवेक्षत इति निषेधात्तिरस्कृत्य यजुर्वाचयतीति तिरस्करणीविधानाच्च । अत्र

---

प्र०टि०—निधानोत्तरकालं वा मन्त्रं वदेत् । मन्त्रान्तैः कर्मादीनित्यस्यापवादः। पक्वानामेव पात्राणां यजुषा करणमनुज्ञातवान्कात्यायनः—'यथा दर्भेषु यजुष्क्रियासंभवात्' (का० श्रौ० २५–१–९) इति । उपरिष्टात्सर्वत्र भूमौ न स्थापयति महताऽभिप्रायेण सूत्रकारः सर्वत्र भूमौ न चोदितत्वादुपरिष्टात्कालेऽग्रेण गार्हपत्यं दर्भेषु यदुपावहरणं तत्र मन्त्रेण तूष्णीमिहेत्यपरं विधानम् । पूर्वं महावीरं च दृढं यथा भवति तथा कृत्वा पश्चान्न्यवहरणादिमन्त्राः प्रयोक्तव्याः । उक्तं च भारद्वाजेन—

छिन्ने पिष्टे तथा लूने सान्नाय्ये मार्तिकक्रिये ।
पक्त्वा मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः ॥ इति ॥ २२ ॥

इति सत्याषाढहिरण्यकेशिप्रवर्ग्यसूत्रटिप्पण्यां महादेवशास्त्रिसंकलितायां
प्रथमः पटलः ।

प्रवर्ग्येणेति कर्मनाम । प्रचरिष्यन्तोऽध्वर्य्वादयः । द्वाराणि संवृण्वन्ति कटादिभिराच्छादयन्ति । कस्मादेनं स्त्री प्रेक्षते । न शूद्र इति निषेधात् । प्राग्वंशस्य द्वाराणि संवृण्वन्तीत्यर्थः ।

श्रयन्ति पत्न्याः ॥ १ ॥

प्रसङ्गात्पत्नीशालापरिश्रयणविषये किंचिल्लिख्यते । केचित्प्रयोगकर्तारः प्राग्वंशात्पश्चिमभागे पदचतुष्टये स्वतन्त्रां पत्नीशालां विधाय तत्र तां स्थापयित्वा पत्नीशालाद्वाराच्छादनं कृत्वा प्रवर्ग्यमनुतिष्ठन्ति बोधायनानुसारिणस्तन्निर्मूलम् । प्राग्वंशात्परतो देवयजनदेशस्यैवाभावेन तत्र पत्न्यवस्थाने तस्याः प्रवर्ग्यकर्तृत्वानापत्तेः । न चेष्टापत्तिः । प्रवर्ग्यकर्तॄनाहूयेत्यनेनाऽऽह्वा( ह्वा )नविधानस्य स्वयमेव लिखितत्वेन पूर्वोत्तरविरोधात् । तत्रैव प्रकरणे पत्न्येहि पद्यस्वेति प्रैषस्य पठितत्वात् । न च पत्नीशालेति स्वतन्त्रसंज्ञया भेदसिद्धिरिति वाच्यम् । प्राग्वंशस्यैव पत्नीशालेति संज्ञान्तरोपपत्तेः । अन्यथा शुल्बसूत्रस्य स्वतन्त्रदेवयजनविधायकस्य तदनुक्तौ न्यूनतापत्तेः । न च प्राग्वंशस्य पत्नीशालात्व आह्वा ( ह्वा ) नविधिर्व्यर्थ इति वाच्यम् । प्रणिधानार्थतया तदुपपत्तेः । तस्या दूरस्थत्वे तिरस्करणीविधायकश्रुत्यदृष्टार्थतापत्तेः । न चादृष्टार्थमाह्वानविधिरिति वाच्यम् । दृष्टे संभवति अदृष्टकल्पनस्य मन्त्राधिकरणादिविरुद्धत्वेनान्याय्यत्वात् । प्रवर्ग्यकर्तॄनाहूयेत्यनेन सामान्यतः प्रवर्ग्यकर्तॄणामाह्वानं विधायाध्वर्व्वादिवत्पत्न्या अप्याह्वानविधानेन तस्या अपि प्रवर्ग्यकर्तृत्वावश्यंभावात् । दूरस्थायाः प्रवर्ग्यकर्तृत्वासंभवात् । न च प्राग्वंशस्यैव पत्नीशालात्वे किं प्रमाणमिति वाच्यम् । पूर्वया द्वारा पत्नीशालां प्रपद्येति आश्वलायनाचार्यैः कण्ठरवेण स्फुटतरमभिधानेन प्राग्वंशस्य पत्नीशालात्वसंभवात् । तस्मान्न च पत्न्यवेक्षत इति निषेधात्तस्या दर्शनस्य प्रतिषेधेऽपि कर्तृत्वं पूर्वोक्तरीत्या निरपवादमेव दक्षिणतः पृष्ठ्यायास्त्रिपदे चतुष्पदे वा पत्नीशालेत्युक्त्याऽपि अयमर्थः सिध्यति । न च परिश्रयणे वि(द्वि)तीयया पत्नीमीक्षत इति विहितेक्षणानुपपत्तिरिति वाच्यम् । ईक्षणार्थं तिरस्करणीनिष्कासनोपपत्तेः । सामान्यनिषेधस्य विशेषविधिनाऽग्नीषोमीयविधिनाऽहिंसाशास्त्रस्येव संकोचोपपत्तेः । क्वचिद्बोधायनसूत्रादौ पत्नीशालायाः स्वतन्त्रायाः कीर्तनेऽपि तस्मिन्नेव सूत्रे प्राग्वंशेऽपि पत्नीशालाशब्दप्रयोगेण प्राग्वंशस्यैव तथात्वोपपत्तेः । अस्तु वा बोधायनयजमानस्य स्वतन्त्रा पत्नीशाला नाऽऽश्वलायनादेरिति तत्पक्षे प्रवर्ग्यवेलायां बोधायनयजमानकर्तृकेऽपि प्रयोगे प्रवर्ग्यादौ न स्वतन्त्रपत्नीशालास्थत्वं पत्न्याः । तथा सति तस्याः प्रवर्ग्यकर्तृत्वानापत्तेः । प्रस्तोत्रे मुखवेष्टनविनियोगविरोधापत्तेश्च । तस्माद्विहारार्थं तत्र स्थलनिर्माणेऽपि न कर्मानुष्ठानावसरे तत्रावस्थानप्रसक्तिः । एवं चाऽऽह्वानमपि संगच्छत इति अस्मत्कृतशुल्बविवरणे विस्तरः । आचार्येण दक्षिणतो विहारात्पत्न्या विहारदेशोक्तावपि कर्मकाले तत्र नावस्थानप्रसक्तिः ॥ १ ॥

---

प्र०टि०—पत्न्यो अपि परिश्रयणमाच्छादनं स्व आयतन एव नान्यत्रोपविशेत् । संनिधानेऽपि सति दर्शनमात्रप्रतिषेधः पत्न्यदर्शनमिति कात्यायनः ॥ १ ॥

पश्चाद्धोतोपविशति पुरस्तादध्वर्युर्दक्षिणतो ब्रह्मा यजमानश्च दक्षिणतः पश्चात्प्रस्तोतोत्तरत आग्नीध्रः प्रतिप्रस्थाता च ॥ २ ॥

प्रवर्ग्यकर्तारोऽनेन क्रमेणोपविशेयुः । प्रस्तोता दक्षिणत इत्यापस्तम्ब आह । उत्तरेण खरं प्रवृज्य पश्चादस्योपविश्येत्याश्वलायनोऽप्याह ॥ २ ॥

मदन्तीभिरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वोत्तरेण विहारं मुञ्जप्रलवान्संस्तीर्य देव पुरश्चर सघ्यासं त्वेति तेषु प्रथमकृतं महावीरमुपावहरत्येवमितरौ तूष्णीमितराणि ॥ ३ ॥

ननु शान्तिकरणं किमर्थमिति चेन्न । उग्रो ह्ययं प्रवर्ग्यः । कुतः यज्ञशिरसाऽछिन्नस्य प्रवर्ग्यरूपत्वेन संस्तवनात् । अतस्तत्कर्तृभिराद्यन्ताभ्यामनुवाकाभ्यां शान्तिः कार्या । तदर्थतया समुच्चारणमेव शान्तिकरणम् । मुञ्जप्रलवान्संस्तीर्य मन्त्रावृत्त्या त्रयाणां महावीराणां निधानमितरेषां तूष्णीं निधानम् । आपस्तम्बस्तु एकवद्बद्धानां सकृदेव मन्त्रेण निधानमाह । इतराणि रौहिणकपालादीनि तूष्णीं मन्त्रं विनेत्यर्थः ॥ ३ ॥

अत्रैव सर्वं परिघर्म्यं संपादयत्यौदुम्बराणि

अत्रैवेदानीमेव सर्वमुक्तं वक्ष्यमाणं च परिघर्म्यं घर्मसाधनं संपादयति परिकल्पयति ।

---

प्र०टि०—सर्वत्रोपविशतीत्यन्वयः । अपरस्य खरस्य पश्चादुपविशति होता । एवमितरे पुरस्ताद्दक्षिणत उत्तरतश्चेति । घर्ममेवाभिमुखा भवन्ति सर्व ऋत्विजो यजमानश्च तदर्थोपवेशननियमात् ॥ २ ॥

तत्रोदकमुपस्पृशन्त्यृत्विजः प्रवर्ग्यकर्तारः । प्रथमेनानुवाकेन 'नमो वाचे न' (तै० आ० ४–१ ) इत्यनेन शान्तिं सर्वे कुर्वन्ति । अनधीतोऽधीत्य करोति । घर्मस्य शमनार्थत्वाच्छान्तिः । अथोत्तरस्य देवर्षिपितृविद्वन्मनुष्येभ्यो नमोऽस्तु तेषामनुकरणं शान्तिरित्युच्यते । तस्मादे(दे)कश्रुत्योच्चारणमनुवाकस्य धर्मकरणरूपत्वात् । वागादीनां नमस्करणं प्रत्यगाशीर्भिर्वाक्यैः शान्तिं करोति । उत्तरेण विहारमिति दर्शनादापस्तम्बोक्तक्रमेण गार्हपत्यं मा भूदित्येवमर्थम् । मुञ्जग्रहणाद्दर्भाणां निवृत्तिः । आस्तीर्य प्रसार्य तेषूपावहरति प्रसारयति देव पुरश्चेति मन्त्रेण ॥ ३ ॥

घर्मसाधनानि द्रव्याणि पात्राणि घर्म्यमित्युच्यते । वक्ष्यमाणानि सर्वाणि पात्राणि ।

---

१ क. 'प्रथमा' ।

व्याख्यास्यामः सम्राडासन्दीमग्रेण यथा राजासन्दीं राजासन्दीं वर्षीयसीमेके समामनन्ति सम्राडासन्दीमेके मौञ्जीभी रज्जुभिरेकसराभिर्व्यूता च ॥ ४ ॥

औदुम्बराणि उदुम्बरप्रकृतिकानि पात्राणि व्याख्यास्यामः प्रतिपादयामः। तदेवाऽऽह—सम्राडासन्दीमग्रेण राजासन्दीं स्थापयेदित्यर्थः। तां सम्राडासन्द्या राजासन्दीं वर्षीयसीं महतीमेक आचार्याः समामनन्ति प्रतिपादयन्ति। अन्ये त्वाचार्या राजसन्द्याः सम्राडासन्दीमेव महतीं समामनन्तीत्यन्वयः। मुञ्जमयीभी रज्जुभिः प्रोतां सम्राडासन्दीं कुर्यात् ॥ ४ ॥

चतस्रः स्रुचस्तासां द्वे अनिष्ठ्ये ते रौहिणहवन्यौ निष्ठ्व्ययोर्वर्षीयस्युपयमनी प्रोक्षणीधान्यन्या स्रुवौ धृष्टी शफौ महावीरसंमितावस्कौ मेथी त्रीन्

चतस्रः स्रुचः कार्याः। तासु द्वे स्रुचावनिष्ठ्व्ये अनुपविद्धाबिले भवतः। ते अनिष्ठ्व्ये रौहिणसाधने। निष्ठ्व्ययोर्बिलवत्योर्मध्य उपयमनी वर्षीयसी महती। प्रोक्षणीधानी प्रोक्षण्यो यस्यामाधीयन्ते सा प्रोक्षणीधानी। सा उपयमन्यपेक्षया ह्रसीयसी कार्या। स्रुवौ प्रसिद्धौ। धृष्टी अङ्गाराभिवर्तनार्थकाष्ठविशेषौ। व्रस्कौ महावीरग्रहणोपयोगी छिद्रप्रदेशविशेषः। तौ महावीरेण संमितौ। यावान्स्थूलो महावीरस्तावत्स्थूलौ कार्यौ।

---

प्र० टि०—चतुष्पादयुक्ता हस्तमात्रयुक्तेति वैखानसः। नितरां निकृष्टतरां ह्रस्वाम्। सम्राडासन्द्या द्विगुणामिति समामनन्ति पठन्ति शाखान्तरे। वर्षीयसीमिति शेषः। शाखान्तरे तु पूर्वस्माद्विकल्पः। एकसरा न समासिता विध्युक्ता प्रकल्पिता विधयस्ता विविधमूला अप्रकल्पिता शुल्बमेकसरम् रशनान्तरमिति भाष्यकृत् ॥ ४ ॥

परिसङ्ख्या। अबिलवत्यौ। ते द्वे। निष्ठ्व्ये बिलवत्यौ तयोर्दीर्घा उपयमनी भवति। इतरा(अन्या) प्रोक्षणीधानी। चतस्रो हस्तमात्रा इति वैखानसः। स्रुवौ द्वौ हस्तमात्रौ। (शफौ महावीरग्रहणसाधनकाष्ठविशेषौ) महावीरग्रहणार्थे दीर्घकाष्ठे शफौ, तयोर्यः प्रदेशस्तद्ग्रहणार्थमावृश्च्यते स आव्रस्कः (स्क)। अङ्गारनिरूहणार्थे काष्ठे धृष्टी। गोबन्धनार्थं काष्ठं मेथी। मयूखाः शङ्कवः, ते च त्रयोदश,

मयूखान् पट् शकलान् त्रयोदश वैकङ्कतान्परिधीन् काण्टकीं च समिधं वैणवानि धर्मेन्धनानि खादिराणि पालाशान्यौदुम्बराण्यर्कमयानि शमीमयानि वा ॥ ५ ॥

तथा च महावीरसंमितौ मस्कौ ययोस्तौ तादृशौ शफौ महावीरग्रहणार्थकाष्ठविशेषौ । मेथी गोबन्धनार्थशङ्कुः । मयूखास्ते च वत्साजावर्करादीनां बन्धनार्थाः । काण्टकी तु यज्ञियवृक्षजा न त्वौदुम्बरी तस्याकण्टकत्वात् । परिधयो महावीरार्थत्वात् तत्संमिताः प्रादेशमात्राः कार्याः ॥ ६ ॥

( कृष्णाजिनं ) त्रीणि कार्ष्णाजिनानि धवित्राणि शुक्लकृष्णलोमानि तेषां वैणवा बाहुमात्रा दण्डा भवन्त्यौदुम्बरा वा रजतसुवर्णौ रुक्मौ पृथक्शतमानौ मौञ्जानि व्याख्यास्यामो द्वौ वेदौ तयोरन्यतरः परिवासितोऽभिधानी निदाने चत्वारि विशाखदामानि मलवान् ग्रामविशीर्णाग्रान्स्वरेभ्यः

धवित्राणि व्यजनानि । पूर्ववदन्वयः । तेषां धवित्राणां बाहुमात्रा अल्पायामा वैणवा औदुम्बरा वा दण्डाः कार्याः । रजतसुवर्णौ द्वौ रुक्मौ । प्रत्येकं शतमानौ कार्यौ । मौञ्जानि मुञ्जप्रकृतिकानि । द्वौ वेदौ कार्यौ । अन्यतर एकः परिवासितः छिन्नाग्रः । अर्धादेकः साग्र इति बोध्यम् । तौ च मन्त्रं विना कार्यौ । अविधानान्मन्त्रस्य । अनेष्टिकत्वाच्च । अभिधानी गोबन्धनार्था रज्जुः । निदाने पद्बन्धनार्थे । वत्सनिबन्धनार्थानि द्विशिरस्कानि दामानि विशाखदामानि । मुञ्जतृणान्येव स्वयं शीर्णानि मुञ्जप्रलवाः । ते

प्र०टि०—वत्साजावर्कराणां बन्धनार्थाः । काण्टकी तु यज्ञियवृक्षान्तरजा न त्वौदुम्बरी । तस्या अकण्टकत्वात् । परिधयो महावीरार्थत्वात् । तत्संमितायामाः । प्रादेशमात्रा इत्येव कात्यायनः ॥ ६ ॥

कृष्णाजिनेन कृतानि धवित्राणि व्यजनान्यग्निसंधुक्षणसाधनानि । तेषां धवित्राणां वैणवा दण्डा बाहुमात्रा बाहुपरिमिता भवन्त्यथ वौदुम्बरदण्डा औदुम्बरदण्डानीत्यपरमित्यापस्तम्बः । येन केनचिन्मानेन मीता तौ शतमानौ भवतः । मुञ्जमयानि वक्ष्यन्ते मुञ्जप्रलवान्तानि । द्वौ वेदौ तयोरेको भिन्नाग्र उपकल्पितेर्द्वयोः सहविधानात् । स्वयं होता मन्त्रेणोत्पवनमासामित्यर्थमाससंमानामाचाच तूष्णीं क्रियते । अभिधानी धेनुबन्धनार्था रज्जुः । पादबन्धनार्थे निदाने । वत्सादिबन्धनार्थानि द्विशिरस्कानि दामानि विशाखदामानि । मुञ्जप्रलवा मुञ्जतृणान्येव स्वयं शीर्णानि

सिकता रौहिणयोः पिष्टान्यफलीकृतानां मौञ्जे पवित्रे दर्भमये वा तूष्णीमाज्यं प्रोक्षणीश्च सꣳस्कृत्य ॥ ६ ॥ (ख० ३) ॥

प्रकृतेऽप्रतिशीर्णाग्रा ग्राह्याः। फलीकृतानां तुषविमोकमात्रेणावहतानां तण्डुलानां विशेषतः फलीकरणरहितानां तेषां पिष्टानि कुर्यात्। खरेभ्यः खरार्थं सिकताः संपादयेत्। पवित्रे अपि तूष्णीके। ते मौञ्जे दर्भमये वा कार्ये। तूष्णीं मन्त्रं विनाऽऽज्यं प्रोक्षणीश्च संस्कृत्य। केचित्तु तूष्णीमित्यस्य मध्ये पठितस्य देहलीदीपन्यायेनोभयत्र संबन्धमुक्त्वा पवित्रयो राज्यप्रोक्षण्योश्च तूष्णीकत्वमिच्छन्ति ॥ ६ ॥

ब्रह्मन्प्रवर्ग्येण प्रचरिष्यामो होतर्घर्ममभिष्टुह्याग्नीध्रौहिणौ पुरोडाशावधिश्रय प्रतिप्रस्थातर्विहर प्रस्तोतः सामानि गायेति संप्रेष्यति ॥ ७ ॥

पवित्रान्तर्हितायामित्यादिरापोदेवीरग्रेगुवः इति मन्त्रव्याख्यातो मदन्तीनां संस्कारः ॥ ७ ॥

ब्रह्मायजुर्युक्तꣳ सामभिराक्त खं त्वेत्यनुद्रुत्योमिन्द्रवन्तः प्रचरतेति प्रसौति प्रसूतो यमाय त्वा मखाय त्वेति सर्वं परिघर्मं त्रिः प्रोक्षति ॥ ८ ॥

अनुद्रुत्योक्त्वा। प्रसौत्यनुजानाति। आपस्तम्बस्तु यजुर्युक्तꣳ सामभिराक्तखंत्वत्योपांशुत्वं विधायेन्द्रवन्त इत्यादेरनुज्ञापनमन्त्रस्योच्चैस्त्वमाह। तयेन्द्रवन्त इत्यस्य लोपेन प्रचरतेत्यस्यैवानुज्ञायां विनियोगमाह। यमाय त्वेत्यादि सकृन्मन्त्रमुक्त्वा त्रिः प्रोक्षति॥८॥

---

प्र०टि०—प्रभूतानि बहूनि मुञ्जाना प्रलवास्तृणान्युभयतश्छिन्नानि मुञ्जप्रलवा इत्युच्यन्ते। प्रभूतान्मुञ्जप्रलवानित्यापस्तम्बभरद्वाजौ। खरेभ्यः खरार्थम्। अफलीकृतानां तुषविमोचनमात्रेणावहतानां तण्डुलाना पिष्टानि। समे अप्रच्छिन्नाग्रे मौञ्जकृते प्रादेशमात्रे पवित्रे तूष्णीं क्रियेते। उपकल्पितैर्द्रव्यैः सह विधानात्। दर्विहोमसंस्कारेणाऽऽज्यमिति वचनात्पवित्रयोश्च तूष्णीं वेत्यपरमित्यापस्तम्बः। प्रोक्षणीनामावृता इत्यापस्तम्बोक्तेस्तूष्णीमुत्पवनादि क्रियते। यद्येवं न स्यात्। एवमाह भरद्वाजः—'प्रोक्षणीः सꣳस्कृत्य ब्रह्माणमामन्त्रयते' इति ॥ ६ ॥

अनुजानाति। पवित्रान्तर्हितायां प्रोक्षणीधान्यां मदन्तीरानीयोत्पूय समीक्ष्य ब्रह्मादीनामन्त्रयते ॥ ७ ॥

सकृदेव मन्त्रः। अभिपूर्वं त्रिः प्रोक्षतीत्यापस्तम्बः। अभि पूर्वं कृतं यस्मात्प्रथममभिप्रोक्षति पुनः प्रोक्षति सकृदेव मन्त्र इति वैखानसः ॥ ८ ॥

प्रोक्षितानि प्रतिप्रस्थाता व्यायातयतीति विज्ञायत एतस्मिन्काल आग्नीध्रस्तूष्णीमुपचरितौ रौहिणौ पुरोडाशावधिश्रयाति ॥ ९ ॥

व्यायातयति व्यावर्तयति । एतस्मिन्काल आग्नीध्रस्तूष्णीमुपचरितौ धृष्टयादानादिमन्त्राद्यूहनान्तैरमन्त्रकैः संस्कृतौ । अधिश्रयणं चाऽऽहवनीये गार्हपत्ये वा । पात्रीसंवापस्तु नेष्यते । संव्यवनं तु भवन्तीमिर्मवत्येव ॥ ९ ॥

सम्राडासन्दीमग्रेणाऽऽहवनीयं पर्याहृत्य पुरस्ताद्राजासन्द्या निदधाति तस्यां कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य देव पुरश्चर सघ्यासं त्वेति तस्मिन्नितरौ महावीरौ प्राञ्चावुपधायौ निदधाति तावप्रचरणीयौ भवतो मेथीं मयूखान्विशाखदामानीत्यादायाग्रेण होतारं दक्षिणाऽतिक्रम्य दक्षिणया द्वारोपनिष्क्रम्य दक्षिणेन मेथीं

सम्राडासन्दीं प्रवर्ग्यपात्रनिधानार्थामाहवनीयस्य पूर्वतो नीत्वा राजासन्द्याः पूर्वभागे स्थापयित्वा तस्यां कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य देव पुरश्चर सघ्यासं त्वेत्यनेन मन्त्रेण । अप्रचरणीयौ महावीरौ प्राग्बाधुपशयौ शयानौ सादयेत् । महावीरावप्रचरणीयौ भवतः । एकस्यैव महावीरस्योपयुक्तत्वेन तयोः प्रचारसाधनत्वाभावात् । कृष्णाजिनबन्धं विसृज्य शफाभ्यामेवोपावहृत्य मन्त्रावृत्त्या नयेत् । ततो मेथीमयूखविशाखदामान्यादाय होतृगार्हपत्यमध्ये गत्वा दक्षिणया द्वारा निर्गम्य दक्षिणद्वारस्य दक्षिणतो

म० टि०—व्यायातयति प्रसज्य ( विमज्य ) गमयति । प्रोक्षितानि व्यायातयति विरलीकृतानि । श्रुतौ विज्ञायत इत्यर्थः । एतस्मिन्काल इति वचनादापस्तम्बोक्तप्रैषं मा भूदिति । आग्नीध्रग्रहणमन्यनिवृत्त्यर्थम् । अधिश्रयणार्थान्येव कर्माणि प्रारभते, न तु निर्वापणादीनि । धृष्टयादानादि मन्त्राध्यूहनान्तं दर्शपूर्णमासवत्तूष्णीं क्रियते । तूष्णीमुपचारिताविति वचनात् । केचिद्दर्विहोमवदुपचारितौ न दर्शपूर्णमासवदिति । तेषां च तूष्णींग्रहणमनर्थकं स्यात् ॥ ९ ॥

पूर्वोसादितां सम्राडासन्दीमादायाऽऽहवनीयस्य पुरतो नीत्वा पुरस्ताद्राजासन्द्याः सादयत्यध्वर्युः । तस्यामासन्द्यां कृष्णाजिनं प्रसार्य तस्मिन्कृष्णाजिने निदधाति मन्त्रेण । द्रव्यैकत्वाद्भ्यावर्तेत इति न्यायान्मन्त्रावृत्तिः । तस्मिन्नप्रचरणीयौ इत्यापस्तम्बेऽपि प्रतिषेधात् । मेथ्यादीन्यादायाग्रेण होतुर्नीत्वा गार्हपत्यप्रश्रयणमानप्रस्तोतृणां च पश्चान्नीत्वा

* — तत्सके प्रचरणीयौ इति पाठः ।

निहन्ति होतुः समीक्षाया एतस्या एव पूर्वस्या द्वार्याया दक्षिणतो वत्सस्य शङ्कुमेतस्या एवापरस्या द्वार्याया दक्षिणतोऽजाया उत्तरतोऽभ्यन्तरं बर्करस्य तेषु विशाखदामानि व्यायातयति तान्येवमेव व्याततानि भवन्त्योद्वासनात् ॥१०॥

मेथीं निहन्ति। मेथी व्याख्याता । होतुः समीक्षायै प्रयोजनाय। यादृशस्थाने मेथ्यां निहतायां घर्माभिद्रवणं कुर्वतो होतुर्दर्शनं भवति तथा निहन्यादित्यर्थः। होतुः समीक्षावचनात्। दक्षिणद्वाराभावेऽपि यत्र द्वारमस्ति तत्र निहन्यादिति ज्ञायते। एतस्या एव द्वारः पूर्वस्या द्वार्याया द्वारस्थूणाया दक्षिणतो वत्सस्य शङ्कुं निहन्तीत्यन्वयः। अभ्यन्तरमिति द्वार्याया दक्षिणतो वत्सशङ्कोरुत्तरत इत्यर्थः। तथा तमुत्तरेण च्छागाया इत्येव बोधायनः। बर्करश्छगलपर्यायोऽजायाः स्तनंधयः। तदर्थमपरस्या द्वार्याया उत्तरतः। प्राग्वंश एव शङ्कुं निहन्ति । प्राग्वंशाद्बहिरजाशङ्कुपक्ष उत्तरामित्यन्ये। तेषु शङ्कुषु विशाखदामानि पूर्वोक्तानि वितत्य बध्नाति । तान्येव दामानि व्याततानि भवन्ति उद्वासनपर्यन्तं नान्यानि ॥ १० ॥

तैरेनान्काले बध्नन्त्युत्तरेण गार्हपत्याहवनीयौ

तैरेतैर्दामभिरेनान्वत्साजादीन्काले दोहनकाले। ततः खरानुपवपति। तान्खरान्सि-

---

प्र०टि०–स्वयमध्वर्युर्होतुरपि पश्चादेव गच्छति नाभ्यन्तरतः। अभ्यन्तरं परिहृत्य बहिर्गच्छति। अन्यत्रापि स्थानभूतकर्मप्रयुक्तं च यज्ञाङ्गभूतं तस्मात्परिहृत्यैव वर्तेरन्। तदुक्तं परिभाषान्यायसूत्रे–'अन्तराणि यज्ञाङ्गानि' इति। अध्वर्युवर्जमेवायं विधिः। तस्याङ्गत्वादिति भाष्यकृत्। दक्षिणद्वारस्य दक्षिणतो होतुः समीक्षायै यथा होता प्रेक्षते तथा निहन्ति। मेथी शङ्कुः। एकद्वारं क्रियते समीक्षणवचनाद्धोतुः। निहन्तीति शेषः। द्वार्या द्वारस्थूणा। अभ्यन्तरमिति वचनाद्वत्सशङ्कोरुत्तरतस्तथा तमुत्तरेण च्छागायै शङ्कुं निहत्य च्छागात्तिमघ्नन्ति (बौ० श्रौ० ९–५) इति बोधायनः। पूर्वद्वारस्थूणाया दक्षिणतो बहिरेव वत्साया अभ्यन्तर एवाजाया उत्तरतो बर्कराय शङ्कुं निहन्ति। बहिरजाया अभ्यन्तरतो बर्करायेति भाष्यकृत्। बर्करश्छागविशेषः। तदर्थमपरस्या द्वार्याया उत्तरतः प्राग्वंश एव शङ्कुं निहन्ति। बहिरेव प्राग्वंशादजाशङ्कपेक्षयोत्तरत्वमित्येके। तेषु शङ्कुषु विस्तृतशाखया निर्मितानि दामानि रज्जूरेकदेशे बध्नन्ति ॥ १० ॥

तैर्दोहनकाले वत्साजानर्करान्बध्नन्ति । खरावन्तः प्राग्वंशमेवोपवपति

खराद्युपनिवपत्युत्तरपूर्वमवान्तरदेशं प्रत्युच्छिष्टखरं बाह्यतो निषेचनवन्तमुत्तरेणाऽऽहवनीयं शकलानुपसादयति काण्टकीं च समिधम् ॥ ११ ॥
( ख० ४ ) ॥

कताभिः कल्पयति । उत्तरेण गार्हपत्यमेकमुत्तरेणाऽऽहवनीयमेकम् । खरावन्तः प्राग्वंश एवोपवपति । उत्तरेणेत्येनपा दूरत्वनिषेधात्संवृतत्वाद्द्वाराणामुपवपतीत्येकवचनाच्च । प्रादेशमात्रं परिमण्डलमिति खरयोः प्रमाणं बौधायनेनोक्तम् । उत्तरपूर्वमवान्तरदेशं प्रत्युच्छिष्टखरं करोति बाह्यतो निषेचनवन्तम् । भारद्वाजस्तूत्तरपूर्वमवान्तरदेशं प्रतीत्येवाऽऽह । प्राग्वंश एव खरं पूर्ववत् । तयोत्तरेण शालामण्डप इत्येवं बौधायनः । उच्छिष्टार्थः खर उच्छिष्टखरः । घर्मोच्छिष्टक्षालनार्थ इत्यर्थः । तथा च वक्ष्यति । तदुच्छिष्टखरे प्रक्षालयेदित्यादि । अन्ये तु यजमानस्याऽऽचमनार्थमुच्छिष्टखरमन्यदपि तत्रेच्छन्ति । तदसत् । प्रमाणाभावात् । बाह्यतः खरस्थण्डिलादुदकनिर्गमनमार्गो यस्य स तथोक्तः । बाह्यतः प्राग्वंशादित्यन्ये । उत्तरेणाऽऽहवनीयं शकलान् काण्टकीं च समिधम् । शकलाः षट्पूर्वोक्ताः ॥ ११ ॥ ( ख० ४ ) ॥

इति श्रीमद्वाञ्छेश्वरसुधीविरचिते सत्याषाढहिरण्यकेशिसूत्रव्याख्याने महालिङ्गसमाख्याने प्रवर्ग्याख्यचतुर्विंशप्रश्ने द्वितीयः पटलः ।

---

प्र०टि०—उत्तरेण गार्हपत्यमेकम् । उत्तरेणाऽऽहवनीयमेकम् ( आप० श्रौ० १५—२—१२ ) इति चाऽऽपस्तम्बः सूत्रयामास । उत्तरेणेत्येनपा दूरत्वनिषेधात्तथा संवृतत्वाद्द्वाराणामुपनिष्क्रमणस्येत्यवचनाच्च । खरयोः प्रमाणं चाऽऽह बौधायनः—प्रादेशमात्रं परिमण्डलम् ( बौ० श्रौ० ९—२—६ ) इति । एकद्वारेऽप्युत्तरपूर्वे किंचिदालोकं करोति । बहिर्निर्गच्छति यथोदकं तथा करोति । तयोत्तरपूर्वमवान्तरदेशं प्रतीत्येव भारद्वाजः । तत्र चान्तःप्राग्वंशमेव खरः पूर्ववत् । तयोत्तरे शालामण्डलः(पः) ( बौ० श्रौ० ९–२–६ ) इत्येव बौधायनः । उच्छिष्टार्थः खर उच्छिष्टखरः । घर्मोच्छिष्टक्षालनार्थ इत्यर्थः । स्वयमेव वक्ष्यति तदुच्छिष्टखरे प्रक्षाल्येत्यादि । बाह्यतो निषेचनवन्तमिति वचनाद्बाह्यतः खरस्थण्डिलादर्घ निर्गमनमार्गो यस्य स तथोक्तः । बाह्यतः प्राग्वंशादित्यपरम । स्थापयति । शकलाः षट्पूर्वोक्ताः । चशब्द एवार्थे ॥ ११ ॥

इति सत्याषाढहिरण्यकेशिप्रवर्ग्यसूत्रटिप्पण्यां महादेवशास्त्रिसंकलितायां द्वितीयः पटलः ।

निहन्ति होतुः समीक्षाया एतस्या एव पूर्वस्या द्वार्याया दक्षिणतो वत्सस्य शङ्कुमेतस्या एवापरस्या द्वार्याया दक्षिणतोऽजाया उत्तरतोऽभ्यन्तरं पर्करस्य तेषु विशाखदामानि व्यायातयति तान्येवमेव व्यावितानि भवन्त्योद्वासनात् ॥१०॥

मेथी निहन्ति । मेथी व्याख्याता । होतुः समीक्षायै प्रयोजनाय । यादृशस्थाने मेथ्यां निहतायां घर्माभिष्टवनं कुर्वतो होतुर्दर्शनं भवति तथा निहन्यादित्यर्थः । होतुः समीक्षावचनात् । दक्षिणद्वाराभावेऽपि यत्र द्वारमस्ति तत्र निहन्यादिति ज्ञायते । एतस्या एव द्वारः पूर्वस्या द्वार्याया द्वारस्थूणाया दक्षिणतो वत्सस्य शङ्कुं निहन्तीत्यन्वयः । अभ्यन्तरमिति द्वार्याया दक्षिणतो वत्सशङ्कोरुत्तरत इत्यर्थः । तथा तमुत्तरेण च्छागाया इत्येव बोधायनः । बर्करश्छगलपर्यायोऽजायाः स्तनंधयः । तदर्थमपरस्या द्वार्याया उत्तरतः । प्राग्वंश एव शङ्कुं निहन्ति । प्राग्वंशाद्बहिरजाशङ्कुपक्ष उत्तरमित्यन्ये । तेषु शङ्कुषु विशाखदामानि पूर्वोक्तानि वितत्य बध्नाति । तान्येव दामानि व्याततानि भवन्ति उद्वासनपर्यन्तं नान्यानि ॥ १० ॥

तैरेनान्काले बध्नन्त्युत्तरेण गार्हपत्याहवनीयौ

तैरेतैर्दामभिरेनान्वत्साजादीन्काले दोहनकाले । ततः खरानुपवपति । तान्खरान्सि-

---

प्र० टि०—स्वयमध्वर्युर्होतुरपि पश्चादेव गच्छति नाभ्यन्तरतः । अभ्यन्तरं परिहृत्य बहिर्गच्छति । अन्यत्रापि स्थानभूतकर्मप्रयुक्तं च यज्ञाङ्गभूतं तस्मात्परिहृत्यैव वर्तेरन् । तदुक्तं परिभाषान्यायसूत्रे—'अन्तराणि यज्ञाङ्गानि' इति । अध्वर्युवर्जमेवायं विधिः। तस्याङ्गत्वादिति भाष्यकृत् । दक्षिणद्वारस्य दक्षिणतो होतुः समीक्षायै यथा होता प्रेक्षते तथा निहन्ति । मेथी शङ्कुः । एकद्वारं क्रियते समीक्षणवचनाद्धोतुः । निहन्तीति शेषः । द्वार्या द्वारस्थूणा । अभ्यन्तरमिति वचनाद्वत्सशङ्कोरुत्तरतस्तथा तमुत्तरेण च्छागायै शङ्कुं निहत्य च्छागाभिप्रध्नन्ति (बौ० श्रौ० ९-६) इति बोधायनः । पूर्वद्वारस्थूणाया दक्षिणतो बहिरेव वत्साया अभ्यन्तर एवाजाया उत्तरतो बर्कराय शङ्कुं निहन्ति । बहिरजाया अभ्यन्ततो बर्करायेति भाष्यकृत् । बर्करश्छागविशेषः । तदर्थमपरस्या द्वार्याया उत्तरतः प्राग्वंश एव शङ्कुं निहन्ति। बहिरेव प्राग्वंशादजाशङ्कपक्षयोत्तरत्वमित्येके । तेषु शङ्कुषु विस्तृतशाखया निर्मितानि दामानि रज्जुरेकदेशे बध्नन्ति ॥ १० ॥

तैर्दोहनकाले वत्साजाबर्करान्बध्नन्ति । खरावन्तः प्राग्वंशमेवोपवपति ।

खरावुपनिवपत्युत्तरपूर्वमवान्तरदेशं प्रत्युच्छिष्टखरं बाह्यतो निषेचनवन्तमुत्तरेणाऽऽहवनीयꣳ शकलानुपसादयति काण्टर्कीं च समिधम् ॥ ११ ॥
( ख० ४ ) ॥

कताभिः कल्पयति । उत्तरेण गार्हपत्यमेकमुत्तरेणाऽऽहवनीयमेकम् । खरावन्तः प्राग्वंश एवोपवपति । उत्तरेणेत्येनपा दूरत्वनिषेधात्संवृतत्वाद्द्वाराणामुपवपतीत्येकवचनाच्च । प्रादेशमात्रं परिमण्डलमिति खरयोः प्रमाणं बोधायनेनोक्तम् । उत्तरपूर्वमवान्तरदेशं प्रत्युच्छिष्टखरं करोति बाह्यतो निषेचनवन्तम् । भारद्वाजस्तूत्तरपूर्वमवान्तरदेशं प्रतीत्येवाऽऽह । प्राग्वंश एव खरं पूर्ववत् । तथोत्तरेण शालामण्डप इत्येवं बोधायनः । उच्छिष्टार्थः खर उच्छिष्टखरः । घर्मोच्छिष्टक्षालनार्थ इत्यर्थः । तथा च वक्ष्यति । तदुच्छिष्टखरे प्रक्षालयेदित्यादि । अन्ये तु यजमानस्याऽऽचमनार्थमुच्छिष्टखरमन्यदपि तत्रेच्छन्ति । तदसत् । प्रमाणाभावात् । बाह्यतः खरस्थण्डिलादुदकनिर्गमनमार्गो यस्य स तथोक्तः । बाह्यतः प्राग्वंशादित्यन्ये । उत्तरेणाऽऽहवनीयं शकलान् काण्टर्कीं च समिधम् । शकलाः षट्पूर्वोक्ताः ॥ ११ ॥ ( ख० ४ ) ॥

इति श्रीमद्वाञ्छेश्वरसुधीविरचिते सत्याषाढहिरण्यकेशिसूत्रव्याख्याने महालिङ्गसमाख्याने प्रवर्ग्याख्यचतुर्विंशप्रश्ने द्वितीयः पटलः ।

---

प्र०टि०—उत्तरेण गार्हपत्यमेकम् । उत्तरेणाऽऽहवनीयमेकम् ( आप० श्रौ० १५—२—१२ ) इति चाऽऽपस्तम्बः सूत्रयामास । उत्तरेणेत्येनपा दूरत्वनिषेधात्तथा संवृतत्वाद्द्वाराणामुपनिष्क्रमणस्येत्यवचनाच्च । खरयोः प्रमाणं चाऽऽह बौधायनः—प्रादेशमात्रं परिमण्डलम् ( बौ० श्रौ० ९—२—१ ) इति । एकद्वारेऽप्युत्तरपूर्वे किंचिदालोकं करोति । बहिर्निर्गच्छति यथोदकं तथा करोति । तथोत्तरपूर्वमवान्तरदेशं प्रतीत्येव भारद्वाजः । तत्र चान्तःप्राग्वंशमेव खरः पूर्ववत् । तथोत्तरे शालामण्डलः(पः) ( बौ० श्रौ० ९—२—१ ) इत्येव बौधायनः । उच्छिष्टार्थः खर उच्छिष्टखरः । घर्मोच्छिष्टक्षालनार्थ इत्यर्थः । स्वयमेव वक्ष्यति तदुच्छिष्टखरे प्रक्षाल्येत्यादि । बाह्यतो निषेचनवन्तमिति वचनाद्बाह्यतः खरस्थण्डिलादर्घ निर्गमनमार्गो यस्य स तथोक्तः । बाह्यतः प्राग्वंशादित्यपरम् । स्थापयति । शकलाः षट्पूर्वोक्ताः । चशब्द एवार्थे ॥ ११ ॥

इति सत्याषाढहिरण्यकेशिप्रवर्ग्यसूत्रटिप्पण्यां महादेवशास्त्रिसंकलितायां द्वितीयः पटलः ।

अथ तृतीयः पटलः ।

आदाय महावीरं देव पुरश्चर संघासं स्वेत्य परिवासितेन वेदेन संमार्ष्टि प्राणाय स्वाहा व्यानाय स्वाहेति स्रुवेणाऽऽहवनीये सप्त प्राणाहुतीर्जुहोत्येकादश वोत्तमस्य शेषेण देवस्त्वा सविता मध्वाऽनक्त्विति महावीरमनक्ति तं निधायान्यस्मै वा प्रदाय पृथिवी तपसस्त्रायस्वे त्यपरस्मिन्खरे राजतं रुक्मं निधाय द्वयान्मुञ्जप्रलवानादायार्चिरसीति दक्षिणेषामग्राणि गार्हपत्य आदीपयति शोचिरसीति तेषामग्रैरुत्तरेषां मूलानि ज्योतिरसीति तेषां मूलैर्दक्षिणेषां मूलानि तपोऽसीति तेषां मूलैरुत्तरेषामग्राणि

आदायेत्यादि । प्रचरणीयं महावीरं शफाभ्यां परिगृह्याप्रच्छिन्नाग्रेण वेदेन संमृज्यात्तूष्णीम् । शफाभ्यामिति परिमार्षासूत्रप्रापमप्यविस्मरणार्थम् । प्राणाय स्वाहेत्यादिभिः सप्तभिरेकादशभिर्वाऽऽहवनीये प्राणाहुतीर्जुहुयात् । आहवनीयग्रहणं सूत्रान्तरे गार्हपत्ये होमवचनाम्नानात्तद्व्यावृत्त्या आहवनीयस्यै( ए )व प्राप्तिर्य आ( णाहुतिहोमो यथा ) स्यात् । प्राणाहुतिशब्दो लिङ्गसमवायात्सप्तसु एकादशसु वा गौणः । प्राणसंबन्धाच्च प्राणाहुतिव्यपदेशः । शफौ सव्येन पाणिना संगृह्य दक्षिणेन हस्तेन स्रुवाहुतयः संमार्गश्च । तथा बौधायनोऽपि 'सव्ये पाणौ समाधृत्ये'त्याह । अन्ये तु रुक्मादन्यत्र महावीरप्रतिष्ठापनं रुक्मयोरुत्तरवचनादित्याहुः । दक्षिणेषां

---

प्र० टि०—महावीरं शफाभ्यामित्यापस्तम्बः । अप्रच्छिन्नाग्रेण वेदेन महावीरस्योपरिष्टात्संमार्ष्टि बिलम् । स्रुवेणेति वचनात्स्रुचो निवृत्तिः । प्राणाहुतिहोमोऽपि मुखसदृशत्वादाहवनीय एव । सप्तैकादश वेत्यापस्तम्बः । सप्तपक्षेऽष्टमप्रभृतीनां लोपः । शेषेणाऽऽज्यशेषेणेत्यर्थः । स्रुवेणोपर्याहवनीये महावीरमङ्क्त्वेत्यापस्तम्बः । महावीरस्याभ्यन्तरतोऽनक्ति । निरुक्ते प्रतिष्ठापयतीत्युत्तरत्र विधानान्मन्त्र एव । अन्यस्मा एकतराय प्रतिप्रस्थात्राग्नीध्रयोस्तयोरिह प्रकृतत्वात् । द्वाभ्यां हस्ताभ्यां पूर्वोसादितान्मुञ्जप्रलवानादाय दक्षिणहस्तगतानग्राणि गार्हपत्ये प्रदीपयति । प्रज्वलयतीत्यर्थः । अर्चिरसीति पूर्वप्रयुक्तैः प्रतिमन्त्रं दक्षिणेषामग्रैरुत्तरेषां मूलानि सव्यहस्तस्थानि, सव्यहस्तस्थैर्मूलैर्दक्षिणहस्तस्थानि मूलानि,

तान्व्यत्यस्तानुपरिरुक्मे निधाय ॥ १ ॥

दक्षिणहस्तस्थानाम्। एवमग्रेऽपि। तान्मुञ्जप्रलवान्व्यत्यस्तान्कांश्चित्प्रागग्रानितरान्प्रत्यगग्रान्कृतानुपरि रुक्मे निधाय प्रदीप्तान्स्थापयित्वा ॥ १ ॥

सःसीदस्वेति तेषु महावीरः साद्यत्यञ्जन्तीत्याज्येनानक्त्यभिमन्त्रयते वाऽनाधृष्या पुरस्तादित्येतैः प्रतिमन्त्रं प्रतिदिशमसःस्पृशन्यजमानो महावीरं प्राञ्चं प्रादेशं धारयति मनोरश्वाऽसि भूरिपुत्रेत्युत्तरतः पृथिवीमभिमृशति ॥२॥

सःसीदस्वेतीत्यादि। संसीदस्वेत्यनेन तेषु प्रदीप्तेषु मुञ्जेषु महावीरं निदध्यात्। अञ्जन्तीत्यनेनाऽऽज्येन महावीरमभ्यञ्ज्यात्। यजमानो महावीरमसंस्पृशन् अनाधृष्येत्यादिमन्त्रैस्तत्तद्दिक्प्रकाशैः प्राचीनमेव सर्वान्प्रादेशान्धारयेत्। मनोरश्वाऽसीत्यनेनोत्तरतः पृथिवीमभिमृशेत् ॥ २ ॥

सिद्ध्यै त्वेति धृष्टी आदायाध्वर्युः प्रतिप्रस्थाता च तपो ष्वग्न इति गार्हपत्यादुदीचोऽङ्गारान्निरूह्य चितः स्थ परि चित इति प्रदक्षिणमङ्गारैर्महावीरं पर्यूह्य वैकङ्कतैः परिधिभिः परिधत्तो मा असीति

परिधत्त इत्यत्र महावीरमित्यनुषज्यते। अध्वर्युः प्रतिप्रस्थाता चेत्यविशेषेण कर्मो-

---

प्र० टि०—दक्षिणहस्तस्थैर्मूलैः सव्यहस्तस्थान्यग्राणि। तानुभयहस्तस्थान्व्यत्यस्तान्दक्षिणस्य प्रागग्राण्युत्तरस्योदगग्राणि विपरीतं वा ॥ १ ॥

तेषु प्रज्वलितेषु तृणेषु संस्थापयति महावीरम्। यदा मन्त्रेणानक्ति तदाऽभिपूरयत्येव तूष्णीम्। यदाऽप्यभिपूरयति मन्त्रेण तदा लुप्यत एवाञ्जनम्। अभिपूरणेनैव निवृत्तत्वात्। अभिपूरणं तावद्धर्मनिष्पत्त्यर्थत्वान्नित्यम्। अथैनमाज्येनाभिपूरयति (बौ० श्रौ० ९—३—७) इति बौधायनोक्तम्। एतैः पञ्चमन्त्रैः—अनाधृष्या पुरस्तादिति प्रागग्रं धारयमाणो जपति। पुत्रवती दक्षिणत इति दक्षिणाग्रं धारयमाणः। सुषदा पश्चादित्यपराग्रं धारयमाणः। आश्रुतिरित्युत्तराग्रं धारयमाणः। विधृतिरुपरिष्टादित्यूर्ध्वाग्रं धारयमाणः (वैखा० श्रौ० १९—३) इति वैखानसः। जपतीति सर्वत्रान्वयः। अध्यधि महावीरमित्यापस्तम्बः। अध्यध्युपर्युपरि महावीरमसंस्पृशन्महावीरं न स्पृशन् मन्त्रान्ते प्रादेशधारणम्। उत्तरत इत्यापस्तम्बः। पृथिवीमभिमृश्य जपति नोत्तरत इति भाष्यकृत् ॥ २ ॥

चशब्देनाऽऽग्नीध्रो गृह्यते विकल्पेन। धृष्ट्यादानादि परिधिपरिदानान्तमुभयोः। स्वाहा मरुद्भिः परिश्रयस्वेति चितः स्थेति मन्त्रान्तः। अङ्गारेषु परितः सेवकव-

प्राञ्चावध्वर्युर्निदधाति । ममा असीत्युदञ्चौ प्रतिप्रस्थाता । एवमेव पूर्वेणाध्वर्युरुत्तरेण प्रतिप्रस्थाता । अन्तरिक्षस्यान्तर्धिरसीत्यध्वर्युरेव त्रयोदशं दक्षिणतो निदधाति ॥ ३ ॥ ( ख० ५ ) ॥

ण्येतानि द्वावपि कुरुतः । प्राञ्चौ दक्षिणत उत्तरतश्च । उदञ्चौ पश्चात्पुरस्ताच्च । तत्र द्वयोः परिध्योरेकैकस्य मन्त्रस्याऽऽवृत्तिः । प्रतिप्रस्थाता निदधातीत्यन्वयः । अन्तिमस्यानावृत्तिराध्वर्यवत्वात् । तमेवार्थं द्योतयत्येवकारः ॥ ३ ॥ ( ख० ५ )

महावीर आज्यमानीय दिवं तपसस्त्रायस्वेत्युपरिष्टात्सौवर्णेन रुक्मेणापिधायाऽऽभिर्गीर्भिरिति तिसृभिरुपतिष्ठते धवित्राण्यादत्ते गायत्रमसीति प्रथमं त्रैष्टुभमसीति द्वितीयं जागतमसीति तृतीयं

गायत्रमसीत्यादिभिस्त्रिभिर्मन्त्रैरध्वर्युर्धवित्राण्यादायोर्ध्वमभिधूनोति उपवीजयति त्रयो मधुशब्दा मन्त्रस्त्वेकस्तेन सकृदुक्तेन मन्त्रेण त्रिरग्निमुपवीजयति । तेषां धवित्राणां मध्य एकं प्रतिप्रस्थात्रे प्रयच्छति एकमाग्नीध्राय । तृतीयं तु स्वयमेव धारयतीत्यर्थाज्ज्ञायते । त्रयाणां ग्रहणमुक्त्वा द्वयोरेव विनियोगेन तृतीयस्याविनियोगात् । आग्नीध्रप्रथमा एते

---

प्र० टि०—त्स्थितेषु मध्ये स्थितस्य महावीरस्य राज्ञ इव पूजा संपद्यत इति भाष्यकाराशयः । प्राञ्चौ दक्षिणत उत्तरतश्च । उदञ्चौ पश्चात्पुरस्ताच्च । तत्र द्वयोर्द्वयोः परिध्योरेकैकस्य मन्त्रस्याऽऽवृत्तिर्द्रव्यपृथक्त्वादेकवचनाच्च । निदधातीत्यन्वयः । एवं त्रिभिर्मन्त्रैर्विषमसंख्योपेतैरध्वर्युर्दिग्द्वये प्रागग्रान्षट्परिधीन्परिदधाति । समसंख्योपेतैर्मन्त्रैः प्रतिप्रस्थाता दिग्द्वय उदगग्रान्षट्परिधीन्परिदधाति । अनेन मन्त्रेणोर्ध्वलोकदिग्व्यवधानबुद्ध्या दक्षिणभागेऽध्वर्युरेकं परिधिं परिदध्यात् । ज्योतिःशास्त्रविदः कदाचित्कदाचित्संक्रान्तिरहितोऽधिकमासस्त्रयोदशोऽस्तीत्येवमाहुः । त्रयोदशेन परिधिना तन्मासप्राप्तिर्भवति ॥ ३ ॥

आज्येनाभिपूरिते महावीरे महावीरमपि दधाति रुक्मेण सुवर्णकृतेन । तिसृभिरभिमन्त्रयत इत्यापस्तम्बः । तिसृभिरन्ते सकृदुपस्थानमिति भाष्ये । वायुना ज्वालोत्पादकं-व्यजनं धवित्रम् । धवित्राण्यादत्ते ( ९–४ ) इति श्रुतेः । एनं महावीरम् । त्रयो मधुशब्दा एको मन्त्रः । तेन सकृदुक्तेन त्रिरग्निमुपवीजयति । यद्वा—एकैकस्मिन्नुपवीजन एकैको मधुशब्दः ।

तैरेनमूर्ध्वं त्रिभिर्धूनोति मधु मध्विति तेषामेकम-
ग्नीधे प्रयच्छत्येकं प्रतिप्रस्थात्रे त आग्नीध्रप्रथमास्त्रिः
प्रदक्षिणमूर्ध्वं धून्वन्तो महावीरं परियन्ति मधु
मध्विति प्रणवेन संराधयन्तीति विज्ञायते ॥ ४॥

पूर्वोक्ता अध्वर्यूवादयस्त्रिः प्रदक्षिणमूर्ध्वं धून्वन्तो यथा महावीरस्याग्न्यतिपक्वो भवति तथा वीजयन्तः परियन्ति परितो यन्ति। त्रिः प्रदक्षिणं कुर्वन्तीत्यर्थः। आग्नीध्रः प्रथम-स्तमन्वितरयोः क्रमनियमः। प्रणवेन होतृप्रणवेन संराधयन्तीति विज्ञायते ॥ ४ ॥

यथालोकमुपविश्य समञ्जत इन्धाना आसते
प्रज्वलिते रुक्ममपादत्त इति विज्ञायते ॥ ५ ॥

अपि तमुपविष्टानां मध्ये स्थितस्य महावीरस्य यथाऽऽलोकः प्रकाशो भवति तथाऽऽ-स्थित्वा यथास्थानमिति वा समञ्जत इन्धाना अग्नीन्धनं कुर्वन्तः। प्रज्वलिते ज्वलितुमा-रब्धेऽग्नौ रुक्मं विलस्योपरि स्थितं रुक्ममपादत्ते गृह्णाति ॥ ५ ॥

याभिर्वर्तिकां ग्रसितामुञ्चतामित्युच्यमाने दश
प्राचीर्दश भासि दक्षिणेत्येतमनुवाकं यजमानं
वाचयत्यप्रस्वतीमश्विना वाचमस्मे इत्युच्यमाने
रुचितो घर्म इत्युपोत्तिष्ठन्नाह यथेतं त्रिरनभिधू-

याभिर्वर्तिकामिति होत्रोच्यमाने दश प्राचीरित्यनुवाकं यजमानं वाचयतीत्यर्थः। आपस्तम्बपक्षेऽयमनुवाक आध्वर्यवो बोध्यः। अप्रस्वतीमिरित्युच्यमान उत्तिष्ठन्नुतरु-चितो घर्म इत्याह। यथेतं यथाऽऽगतास्तथैवानभिधून्वन्तः प्रतिपरियन्ति त्रिः। त्रिवारं

---

प्र०टि०—तेषां पवित्राणामेकमग्नीधे प्रथमं प्रयच्छत्यपरं प्रतिप्रस्थात्रे। ततः पश्चादेवम-ध्वर्युरादत्ते। ऊर्ध्वेमग्निं प्रति धून्वन्तः परिक्रामन्ति। आग्नीध्रः प्रथमम्, इति भरद्वाजा-पस्तम्बाभ्यामपि समाम्नानात्। होतुः प्रतिप्रणवमेकीकृत्य संराधयन्तः परिसमस्यन्त इत्यर्थः॥ ४ ॥

अवकाशो विरामः। 'तमभिमुखाः पर्युपविशन्ति—पुरस्तादध्वर्युः। दक्षिणतः प्रति-प्रस्थातोत्तरत आग्नीध्रः' (आप० श्रौ० १५-२-१९) इत्यापस्तम्बः। आज्येन समञ्जन्त ओमितीन्धाना दीपयन्तः समिद्भिरित्यर्थः। समन्ततो ज्वलनं यथाग्नेर्भवेत्ततो रुक्मम-पादत्ते। ईषज्ज्वलितेऽप्यपादत्ते ॥ ५ ॥

यत्राभिजानाति याभिर्वर्तिकामित्यापस्तम्बः। तदुपोत्तिष्ठन्नध्वर्युराह रुचितो घर्म इति।

न्वन्तः प्रतिपरियन्ति ॥ ६ ॥

प्रत्यागमनेऽध्वर्युमुखा इत्याहाऽऽपस्तम्बः ॥ ६ ॥

तस्मिन्काले प्रतिप्रस्थाता प्रत्येत्य धवित्राण्यादायाग्रेणाऽऽहवनीयं पर्याहृत्य सम्राडासन्द्यां निदधाति स्वाहा त्वा सूर्यस्य रश्मिभ्य इति प्रातः स्वाहा त्वा नक्षत्रेभ्य इति सायं यथालोकमुपोत्थायापश्यं गोपा इति सर्व ऋत्विजो यजमानश्चाधीयन्तो महावीरमवेक्षन्ते त्वष्टीमती ते सपेयेति परिश्रिते प्रतिप्रस्थाता पत्नीं वाचयति ॥ ७ ॥ (ख० ६) ॥

यथालोकं यथास्थानं सर्वे ये धर्मसंबन्धिनस्ते सर्वेऽधीयन्तोऽधीयाना एवावेक्षन्ते न स्वन्ततः । परिश्रिते सर्वतः परिश्रिते देशे स्थितां पत्नीं वाचयति ॥ ७ ॥ (ख० ६) ॥

इति श्रीवाञ्छेश्वरसुधीविरचितायां सत्याषाढहिरण्यकेशिप्रवर्ग्यसूत्रव्याख्यायां महाडिङ्गसमाख्यायां चतुर्विंशप्रश्ने

तृतीयः पटलः ।

अथ चतुर्थः पटलः ।

अग्नीद्रौहिणौ पुरोडाशावासादयेति संप्रेष्यत्यनिष्ठुभयोराग्नीध्र उपस्तीर्णा(र्या)भिघारयति

अग्नीद्रौहिणाविति संप्रैषः । आग्नीध्रोऽङ्गारापोहनादिविधिना तूष्णीकेनानिष्ठुभयोः

प्र०टि०—' अध्वर्युप्रथमा अनभिधून्वन्तस्त्रिः परियन्ति ' इति भरद्वाजापस्तम्बौ ॥ ६ ॥

धवित्राण्यादायाध्वर्युः प्रतिप्रस्थात्रे प्रयच्छति । तानि प्रतिप्रस्थाताऽग्रेणाऽऽहवनीयं पर्याहृत्य सम्राडासन्द्यां सादयतीत्यापस्तम्बः । यथालोकं यथास्थानं सर्वे ये धर्मसंयोगिन ऋत्विजो यजमानोऽधीयन्तोऽधीयाना एवावेक्षन्ते न स्वन्ततः । नपत्न्यूर्ध्वावर्जैकश्रुत्या इति न्यायः परिश्रितवचनं पत्न्याः स्वशालायामेवोपवेश्य (वोपवेशयति) आ प्रवर्ग्यपरिसमाप्तेः ॥ ७ ॥

इति सत्याषाढहिरण्यकेशिप्रवर्ग्यटिप्पण्यां महादेवशास्त्रिसंकलितायां

तृतीयः पटलः ।

अध्वर्युराग्नीध्रं प्रति प्रेष्यति । तूष्णीमुपचरितवानिति वचनाद्वेदेन पुरोडाशे साङ्गारं भस्मापोह्येत्येवमादिप्रतिष्ठापनार्थम् । अनिष्ठुभयोः स्रुचोः पात्रस्थाने कपालाभ्यञ्जनं

तौ रौहिणौ पुरोडाशावासादयति दक्षिणं परिधि-
संधिमन्वेकमुत्तरमन्वितरमत्रैव शृतं दध्यासाद-
यति ॥ १ ॥

स्रुचोरेवेद्वास्य ताभ्यां सह पश्चात्परिधिसंध्योरासादयति । गार्हपत्येऽधिश्रयणे तूद्गात्रा-दिनाऽऽत्मनश्चाग्निपरिहारः परिहर्तव्यः । शेषं स्पष्टम् । अत्रैवेदानीमेव शृतं दध्यासादयति । एवकारेण सूत्रान्तरोक्तपूर्वकालशृतदध्यासादनव्यवच्छेदः ॥ १ ॥

देवस्य त्वेति रशनामादायादित्यै रास्नाऽसीत्य-
भिमन्त्र्य पूर्वया द्वारोपनिष्क्रम्याध्वर्युर्घर्मदुघमाह्व-
यतीड एह्यदित एहि सरस्वत्येहीति त्रिरुपांशु-
श्वसावेह्यसावेहीति त्रिरुच्चैर्यथानामा भवति यथेतं
प्रत्येत्याभिधानीं निदाने दोग्ध्रे चाऽऽदायाध्वर्यु-
राग्नीध्रः प्रतिप्रस्थाता च दक्षिणया द्वारोपनि-
ष्क्रम्य ॥ २ ॥

देवस्य त्वेत्यादिनाऽभिधानीं गृहीत्वाऽदित्यै रास्नाऽसीत्यभिमन्त्र्य पूर्वया द्वारा गत्वाऽध्वर्युर्घर्मदुघमिड एहीत्यादिभिस्त्रिभिरुपांश्वाह्वयति । असावेहीति त्रिरुच्चैराह्वयति यथानामा भवति गौः । यथानामा यादृशनामवती तेन नाम्नाऽसावेहीति त्रिरुच्चैराह्व-यति । यथा गङ्ग एहीति । अन्ये तु त्रिभिर्नामभिराह्वयति मनुष्यनामभिरेवैना-माह्वयतीति वदन्ति । तच्चिन्त्यम् । स्वनाम्नैवाऽऽह्वानवचनादेकस्या गोस्त्रिनामत्वा-नियमाच्च । तथा च बोधायनः—यदस्या नाम भवति तेनासावेह्यसावेहीति । कात्याय-नस्तु नाम्ना त्रिरुच्चैरित्याह । ब्राह्मणं तु जात्याख्याभिप्रायं द्रष्टव्यम् । यथेतं प्रत्येत्य यथागतमागत्याभिधानीं निदाने दोग्ध्रे चाऽऽदायाध्वर्य्वादयो दक्षिणया द्वारा गच्छेयुः ॥ २ ॥

अदित्या उष्णीषमसीत्यध्वर्युर्घर्मदुघमभिदधाति

अभिदधाति बध्नाति वत्सं विशाखदाम्ना बध्नातीत्यन्वयः । वत्सायां स्त्रीलिङ्गेनोक्तौ

प्र॰ टि॰—धोपस्तरणाभिधारणमिति वचनात् । यावदुक्तमेवेति भाष्यकृत् । आसा-दनं स्रुच्या सह । यदा तु गार्हपत्येऽधिश्रिते तदा होत्रादीनामात्मनश्च परिहारः परि-हर्तव्यः ॥ १ ॥

रशनामादायाभिमन्त्र्य निष्क्रम्य प्राग्वंशात्पूर्वया द्वारोपदशाह्वानमेव । स्व आयतने देवतामभिरिति । यथा—गङ्ग एहि गङ्ग एहीत्यादि ॥ २ ॥

घर्मदुघं बध्नाति पूर्वगृहीतया रज्वा । विशाखदाम्ना बध्नाति । वत्सं (वत्सप्रतिकृतिं वा)

वायुरस्यैड इति वत्सं पूषा त्वोपावसृजत्विति वत्समुपसृजति यस्ते स्तनः शशय इत्यध्वर्युर्घर्मदुघमभिमन्त्रयत उस्र घर्मं१ शिंष्वेति वत्सं निदाय बृहस्पतिस्त्वोपसीदत्वित्युपसीदति दानवः स्थ पेरव इति स्तनान्संमृशत्यश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्वेत्येतैर्वर्षीयसि दोग्ध्रे दोग्धि तूष्णीं प्रतिप्रस्थाता हसीयस्यजाम् ॥ ३ ॥

मन्त्रः । उपावसृजति दोहनार्थं घर्मधुक्समीपं प्रापयति । वत्सं निदाय बद्ध्वा वर्षीयसि महति अध्वर्युर्दोग्ध्रे प्रतिप्रस्थाता बन्धनादिविधिना तूष्णीं मन्त्रं विनाऽजां दोग्धि । गोरजाया अलाभे तद्दुग्धमात्रलाभे दुग्ध एव सर्वे दोहनमन्त्राः प्रयोक्तव्याः । दोहनमन्त्राः पुनः सांनाय्ये दर्शिताः ॥ ३ ॥

अग्नीधे पयसी प्रदाय यथेतं प्रत्येत्य शफावध्वर्युरादत्ते गायत्रोऽसीति प्रथमं त्रैष्टुभोऽसीति द्वितीयं

अग्नीध आग्नीध्राय गोपयोऽजापयश्च दत्त्वा यथेतं यथागतं प्रतिनिवर्त्य प्राग्वंशं गत्वा शफौ पूर्वोक्तावध्वर्युर्गृह्णीयात् । अध्वर्युग्रहणं स्पष्टार्थं प्रतिप्रस्थातृनिवृत्त्यर्थं वा । जाग-

---

प्र० टि० —वत्सं संसृजति । स्पष्टोऽर्थः । निदाय वत्सं पुनर्बद्ध्वा वत्सं विशाखदाम्ना । उपसीदत्युपविशति दोहनार्थम् । स्तनान्सकृदभिमृशति सकृदेव मन्त्रो बहुवचनत्वात् । अश्विभ्यां पिन्वस्वेत्येकैकेन वाक्येनैकं स्तनं दोग्धि । वाक्यत्रयेण चतुर्थं, सर्वानुक्त्वा स्तनचतुष्टयं दोग्धीति भाष्यकृत् । स्वदोग्ध्रे इति सिद्धे वर्षीयसीति वचनाद्वर्षीयसि स्वयं पयो दोग्धि बहुवचनादध्वर्युरिति । अल्पे प्रतिप्रस्थाताऽध्वर्युणा गृह्यते । इदानीं प्रतिप्रस्थातुर्ग्रहणं विस्पष्टार्थमिति । अजाबन्धनादिकर्म प्रतिप्रस्थाता तूष्णीं सर्वं करोति । यस्तु गवाजे अलभमानो दुग्धमेव तयोर्लभते, तस्य दुग्धे दोहनमन्त्रो नास्ति । अत एव तूष्णीमिति विस्पष्टार्थम् ॥ ३ ॥

यत्राभिजानात्युत्तिष्ठ ब्रह्मणस्पत इति तदुपोत्तिष्ठन्त्याग्नीध्रहस्ते पयसी द्वे प्रदाय दत्त्वा यथेतं प्रत्येत्य, तप्तस्य महावीरस्य हस्ताभ्यां ग्रहीतुमशक्यत्वात्संदंशवदुभयतः काष्ठद्वयमध्ये महावीरं संदष्टं कृत्वा काष्ठद्वयस्य मूलद्वयमग्रद्वयं च धृत्वाऽध्वर्युप्रतिप्रस्थातारावानयतः, तौ काष्ठविशेषौ शफावित्युच्येते । महावीरस्याधस्ताद्धार्यमाणोऽग्निहोत्रहवणीवत्पात्रविशेष उपयम इत्युच्यते । यत्राभिजानात्युपद्रवपयसा गोर्ग्राभिततदाऽऽग्नीध्रो-

जागतमसीत्युपयमनं प्रतिप्रस्थातोपद्रवपयसा गोधुगित्युच्यमान आग्नीध्रः पूर्वः प्रतिपद्यते सहोर्जो भागेनोप मेहीति पयसी प्रतीक्षत आह्रियमाणे प्रतीक्षत इन्द्राश्विना मधुनः सारघस्येति ॥ ४ ॥ ( ख० ७ ) ॥

तमसीत्यनेनोपयमनं प्रतिप्रस्थाता गायत्रोऽसीति मन्त्राभ्यां प्रथमद्वितीयावादत्त इत्यनुपक्रमेणान्वयः । होत्रोपद्रवपयसा इत्युच्यमान आग्नीध्रः पूर्वं प्रतिपद्यते पूर्वस्यां दिशि पयसी गृहीत्वाऽऽगच्छतीत्यर्थः । आह्रियमाणे पयसी सहोर्जो भागेनेत्यादिना प्रतीक्षते सम्यक्पश्यतीत्यर्थः ॥ ४ ॥ ( ख० ७ ) ॥

महावीरे गोपय आनयति स्वाहा त्वा सूर्यस्य रश्मय इत्युद्यन्तमूष्माणमनुमन्त्रयते मधु हविरसी त्यजापयः प्रतिप्रस्थाताऽजापय एके पूर्वं समामनन्ति ॥ ५ ॥

महावीरे गोपयआनयन दोग्ध्रेणैव न पात्रान्तरेण । विना वचनं पात्रान्तरग्रहणासंभवात् । केचित्तु न हि मृन्मयमाहुतिमानशेति वचनात् । अन्ये न दारुपात्रेणेत्याहुः । तच्चिन्त्यम् । आनयेतिचोदनाचोदितत्वेनाहोमत्वात् । न च वषट्कुर्यादित्यनेन करणमन्त्रगतवषट्कारविधानात्तदन्तमन्त्रकरणस्य कर्मणो होमत्वमिति वाच्यम् । अतत्परत्वाच्छ्रुतेः । अन्यथाऽसौ तत्समानब्राह्मणस्य स ते वायुरिति ' मृत्खनने अप आनयति' इत्यस्यापि होमत्वप्रसङ्गात् । तस्माद्दोग्ध्रेणैवाऽऽनयति । उद्यन्तं महावीरादुद्यन्तमूष्माणमभिमन्त्रयते । अजापयः प्रतिप्रस्थाताऽऽनयतीति संबन्धः । एकेऽजापयः पूर्वं समामनन्ति ॥ ५ ॥

---

प्र० टि०—ऽनुप्रपद्यते, इत्यापस्तम्बः । यस्मिन्काले होतुः शब्दं शृणोति । गोपय एव मुख्यत्वाद्वेक्षते । अथवा पदम्याह्रियमाण आग्नीध्र प्रतीक्षते । केचिदध्वर्युप्रतिप्रस्थातारावेवेक्षेते इति तद्व्याख्यानं न समञ्जसम् । प्रतीक्षत इत्येकवचनप्रयोगदर्शनादाग्नीध्रमेव प्रतीक्षत इति सिद्धं भवति । पय प्रतीक्षत इति भाष्यकृत् ॥ ४ ॥

आनयनमन्येन दारुपात्रेण, न हस्तेन । न दोग्ध्रानभिमृशन्नीति प्रतिषेधात् । अन्येन वा दारुमयेण पात्रेणाऽऽहुतिधर्मत्वात् । आनयनचोदितत्वादनाहुतिरिति येन केनचित्प्रकारेणेति भाष्यकृद्व्याचष्टे । उद्यन्तं घर्ममनुमन्त्रयते । उद्यन्तं महावीरादुद्यन्तम् । आनयतीत्यनुवर्तते । एके शाखिनः पठन्ति ।

द्यावापृथिवीभ्यां त्वा परिगृह्णामीति शफाभ्यां महावीरं परिगृह्णाति वेदेन प्रमृज्यान्तरिक्षेण त्वोपयच्छामीत्युपयमनेन प्रतिप्रस्थातोपयच्छति देवानां त्वा पितृणामनुमतो भर्तुꣳ शकेयमित्यादायोपोत्तिष्ठति ॥ ६ ॥

सव्ये पाणौ समावृत्त्या महावीरमध्वर्युणा प्रमृष्टे प्रतिप्रस्थातोपयच्छति तमुपयच्छन्तमुपयमनेनाध्वर्युरादाय तमुपोत्तिष्ठति ॥ ६ ॥

तेजोऽसि तेजोऽनुप्रेहीति हरति समुद्राय त्वा वाताय स्वाहेति गच्छन्नेवानवानं पञ्च वातनामानि व्याचष्टेऽपान्याग्नये त्वा वसुमते स्वाहेति पञ्चोत्तराण्यवशिष्टा विकल्पार्थाः ॥ ७ ॥

अनवानमनुच्छ्वसन्। पष्ठसप्तमयोर्वातनामधेययोश्चतुर्थपञ्चमाभ्यां विकल्पः। उत्तराणि यजूꣳषीति शेषः। तत्रापि पष्ठो विकल्पार्थः ॥ ७ ॥

एतस्मिन्काले प्रतिप्रस्थाता दक्षिणं रौहिणं जुहोत्यहर्ज्योतिरिति प्रातः रात्रिर्ज्योतिरिति सायमपरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्य विश्वा आशा

रौहिणं पुरोडाशं प्रतिष्ठितं जुहोतीत्यापस्तम्बः। प्रतिष्ठितं यथा न चलति तथा। स्रुचाऽनिष्ठुष्यता प्रतिष्ठितं जुहोतीति भारद्वाजः। अहर्ज्योतिरिति प्रातः। ढ्लोपे पूर्वस्य दीर्घोऽण इति दीर्घः। अपरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्य विश्वा

---

प्र० टि०–शफाभ्यां महावीरमित्यादानार्थत्वाच्छफग्रहणं किमर्थं क्रियते। अभ्यन्तरेणाऽऽदानं विधीयते द्यावापृथिवीभ्यां त्वा परिगृह्णामीति। महावीरसंलग्नं मस्मापनीयोपयमनेनोपयच्छति महावीरसमीप उपयच्छत्यध्वर्यवे प्रतिप्रस्थाता। अध्वर्युरुपयमनेनोपयम्याऽऽदत्ते। महावीरमुपयमनं च तूष्णीमुत्तिष्ठति॥ ६ ॥

आहवनीयं प्रतिहरति। सर्वैर्वाक्यैर्मेनगच्छन्वातनामानीति परिज्ञानार्थम्। अनवानमनुच्छ्वसन्व्याचष्टे वाक्ये वाक्ये स्थित्वा वाक्यान्तरे नोच्छ्वसितेति। पञ्चानामेवानुच्छ्वासनियमः। तथोत्तरेषामिति भाष्यकृत्। परिभाषार्थमेतत् ॥ ७ ॥

कालवचनाच्छन्दोगानां सामान्ते वा दक्षिणं रौहिणं जुहोति। अध्वर्युरपरेणाऽऽहवनीयमतिक्रम्य ब्रह्माणमीक्षते मन्त्रेण। ईक्षत इत्यनुकर्षः। गतः। दर्शपूर्णमासविकारे

दक्षिणसदिति ब्रह्माणमीक्षते विश्वान्देवानया-
डिहेति होतारं स्वाहाकृतस्य घर्मस्येति घर्म-
माश्राव्य प्रत्याश्रावितघर्मस्य यजेति संप्रेष्यति ॥ ८ ॥

आशा इति ब्रह्माणमीक्षते । विश्वान्देवानिति होतारम् । ईक्षत इत्यनुषङ्गः । एवमग्रेऽपि ॥ ८ ॥

उत्तमया वाचा प्रचरति स्वाहाऽग्नये यज्ञिया-
येति वषट्कृते जुहोति स्वाहेन्द्रा वषडित्यनुवषट्-
कृते घर्ममपातमश्विनेति हुतं घर्ममुपतिष्ठते ॥ ९ ॥

उत्तमया वाचोत्तमस्वरेणोच्चैः स्वरेणेति । स्वाहाऽग्नये यज्ञियायेत्यनेन यजमान उपतिष्ठत इति शेषः । एवमग्रेऽपि ॥ ९ ॥

नमो दिवे नमः पृथिव्या इत्यनुवाकशेषेण यज-
मान उपर्यग्नौ धार्यमाणं प्रतिप्रस्थाता शृतदध्नाऽ-
भिपूरयतीषे पीपिहीति विक्षरन्तमनुमन्त्रयते
दिशोऽन्तःपरिध्यनुप्रहावयति ॥ १० ॥

उपर्यग्नौ अग्नेरुपरि धार्यमाणमध्वर्युणा महावीरमिति शेषः । एवमग्रेऽपि । प्रतिप्रस्थाता शृतदध्ना शृतातङ्केन दध्ना पूरयति, इषे पीपिहीत्यनेन । दधि विक्षरन्तं महावीरमध्वर्युरनुमन्त्रयते । क्षरतिश्च क्वचित्सकर्मकोऽपि च्छन्दसि दृश्यते । मधु क्षरन्ति सिन्धव इति । लोकेऽपि मधुस्रवेत्यादि प्रयोगो द्रष्टव्यः । उत्तरदेशसंयोगानुकूलव्यापारः क्षरत्यर्थ इति सकर्मकत्वनिर्वाहः । अन्ये तु अनुवक्तस्य महावीरशब्दस्य महावीरास्थितदधिपरत्वमङ्गीकृत्य विक्षरद्दध्यनुमन्त्रयत इत्यर्थ इत्याहुः । अस्मिन्पक्षे विक्षरत्पददधिपदयोर्भिन्नलिङ्गकत्वेऽपि विशेषणविशेष्यभावश्छान्दसो बोध्यः । तथाऽकर्मक एव धातुरुपपादयितुं शक्य इति बोध्यम् । दिशः प्रति अन्तः परिधि अनुप्रहावयति प्रतिदिशं होमं कारयतीत्यर्थः ॥ १० ॥

---

पु० टि०–उत्करे तिष्ठन्प्रत्याश्रावयति । सोमे इति वचनात्सोमाहुतिषु आग्नीध्रीये प्रत्याश्रावयतीति ॥ ८ ॥

उत्तमया याज्यया प्रचारः । वषट्कार एव । जुहोतीत्यनुकर्षः । पितृन्घर्मपानाच्छेत्स्यन्तः । यथालिङ्गं देवता उपतिष्ठते ॥ ९ ॥

धार्यमाणं महावीरं पूर्वोदितं यदुत्तरेणाऽऽहवनीयस्य शृतग्रहणं यदि विनाशो दूषितं वा केशादिभिः पुनर्ग्रहणं शृतमेव यथा स्यादिति शृतग्रहणं क्रियते ॥ १० ॥

तदेवाऽऽह—

त्विष्यै त्वेति पुरस्ताद् द्युम्नाय त्वेति दक्षिणत इन्द्रियाय त्वेति पश्चाद्भूत्यै त्वेत्युत्तरतः प्रत्याक्रम्योपयमने शेषमानीय पूर्वस्मिन्खरे राजतं रुक्मं निधाय धर्मोऽसीति तस्मिन्महावीरं सादयति नेत्त्वा वातः स्कन्दयादित्यभिचरतः ॥ ११ ॥ ( ख० ८ ) ॥

त्विष्यै त्वेत्यादिना पूर्वादिदिक्षु प्रह्वावयतीत्यनुषङ्गः । णिजर्थस्याविवक्षितत्वाज्जुहोतीत्येवार्थ इति केचिदाहुः । अन्ये तु स्वयं हुत्वा पश्चात्प्रतिप्रस्थातारं ह्वावयतीत्यर्थ इत्याहुः । तच्चिन्त्यम् । प्रतिप्रस्थातुर्व्यवहितस्यात्र संबन्धासंभवात् । विक्षरन्तमनुमन्त्रयत इत्यध्वर्युरेवोपात्तः । दिगुपलक्षणस्यानोरध्वर्व्वनुमन्त्रणपश्चाद्भावबोधकत्वानुपपत्तिश्च । न च तथापि णिच्प्रत्ययानुपपत्तिः । स्वार्थणिच्प्रत्ययस्यापि दृश्यमानत्वात् । भारद्वाजोऽप्यध्वर्युं कर्तारमाह । अथैनमुपर्याहवनीये धारयञ्शृतदध्नाऽभिपूरयति विक्षरन्तमनुमन्त्रयत इषे पीपिहीति । अथैनं दिशोऽनुप्रह्वावयतीति । तत्राभिपूरणमप्याध्वर्यवमित्येतावान् विशेषः । प्रत्याक्रम्योत्तरतो गत्वा उपयमने धर्मशेषमानीय पूर्वस्मिन्खरे राजतं रुक्मं निधाय धर्मोऽसीत्यनेन रुक्मोपरि महावीरं निदधाति । अभिचरतस्तु नेत्त्वा वातः स्कन्दयादिति सादयेत् । आपस्तम्बस्तु ब्रह्माणि धारयेत्यादिभिः क्रमेण त्रयाणां वर्णानां सादनं नेत्त्वा वातः स्कन्दयादित्यस्य सर्वशेषतामभिचारेऽमुष्य त्वा प्राणे सादयामीति शत्रुनामयुक्तेन सादनं चाऽऽह ॥ ११ ॥ ( ख० ८ ) ॥

इति श्रीवाञ्छेश्वरसुधीविरचिते सत्याषाढहिरण्यकेशिप्रवर्ग्यसूत्रव्याख्याने महालिङ्गसमाख्याने चतुर्विंशप्रश्ने चतुर्थः पटलः ।

---

प्र० टि०—मह्यं ज्यैष्ठ्याय पीपिहीति मन्त्रान्तः । अध्वर्युर्विक्षरन्तमनुमन्त्रयते पूर्वमानीतं दधि । दृष्टश्च क्षरतिधातुः सकर्मकः । मधु क्षरन्ति इति । दिशोऽन्तः परीत्यनु एनं दिशोऽन्विरयापस्तम्बः । प्रह्वावयति स्नावयति । तस्मिन्रुक्मे महावीरं प्रतिष्ठापयति । ब्राह्मणादिवर्णत्रयविषयेषु मन्त्रत्रयेष्वनुषङ्गद्योतनाय पृथगुपदर्शनम् । मन्त्रशेषः सर्वत्र । यद्यभिचरेदमुष्य त्वा प्राणे सादयामीति सादयेत् (आप०श्रौ० १५–३–२४) इत्यापस्तम्बसूत्रे विशेषः । यद्यभिचरञ्शत्रुं कर्तुमिच्छेद्यजमानो देवदत्तस्य त्वा प्राणे सादयामीति सादयेत् ॥ ११ ॥

इति सत्याषाढहिरण्यकेशिप्रवर्ग्यटिप्पण्यां महादेवशास्त्रिसंकलितायां चतुर्थः पटलः ।

अथ पञ्चमः पटलः ।

शकलानुपयमने समज्य पूष्णे शरसे स्वाहेत्येतैः प्रतिमन्त्रमाहवनीयेऽभ्यादधाति षष्ठं सर्वेषु लेपेष्वङ्क्त्वा रुद्राय रुद्रहोत्रे स्वाहेत्युत्तरया द्वाराऽनन्वीक्षमाणो निरस्याप उपस्पृशेदेतस्मिन्काले प्रतिप्रस्थातोत्तरं पुरोडाशं जुहोति यथापुरस्तात् ॥ १ ॥

पूर्वोक्तान्षट्शकलानुपयमने समज्य पूष्ण इत्यादिभिः प्रतिमन्त्रमाहवनीयेऽभ्यादधाति । एकैकं शकलमुपयमने समभ्यज्य यथाऽग्नौ बिन्दवश्चोतन्ते तथाऽऽदध्यादित्यर्थः । पित्र्यं प्राचीनावीत्यादधाति । षष्ठं शकलं सर्वेषु लेपेष्वङ्क्त्वोत्तरया द्वारा गत्वाऽनन्वीक्षमाणो रुद्रायेत्यादिना निरस्याप उपस्पृशेत् । एतस्मिन्काले प्रतिप्रस्थातोत्तरं रौहिणं जुहोति प्रतिष्ठितम् । आपस्तम्बः शकलहोमात्पूर्वं रौहिणहोममाह ॥ १ ॥

अध्वर्युः काण्टकी॰ समिधमादधात्यपीपरो माऽह्नो रात्रियै मा पाहीति सायमपीपरो मा रात्रिया अह्नो मा पाहीति प्रातः ॥ २ ॥

अपीपर इत्येताभ्यां मन्त्राभ्यां सायं प्रातर्यथाक्रमं काण्टकीं समिधमादध्यात् । आपस्तम्बस्तूष्णीं समिदाधानमाह ॥ २ ॥

शेषादुपयमनेनाग्निहोत्रं जुहोत्यग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति साय॰ सूर्यो ज्योतिर्ज्योतिः सूर्यः

शेषादिति । एतस्मादिति शेषः । अग्निर्ज्योतिरित्यनेन सूर्यो ज्योतिरित्यनेन चाग्निहोत्रं जुहोति । यथाकालं भूः स्वाहेति व्याहृत्या वा । आपस्तम्बस्तूष्णीं होममप्याह ।

प्र॰ टि॰—शकलान्पूर्वोसादितानुपयमनेऽभ्यज्य दधाति । तत्र पितृभ्य इति प्राचीनावीतिना पितृलिङ्गकत्वाच्च । तूष्णीं पष्ठमभ्यज्य रुद्राय रुद्रहोत्र इत्युदश्चं निरस्यति । 'उदश्चं बर्हिः प्रासरुः,' इति बौधायन. । अपामुपस्पर्शनं श्रौतम् ( श्रुत्युक्तम् ) । अहर्ज्योतिरिति प्रतिष्ठितं जुहोति प्रतिप्रस्थाता । अहर्ज्योतिर्देवता ॥ १ ॥

अत्रानुग्रहमाहाऽऽपस्तम्बः— तूष्णीं काण्टकी॰ समिधमादधातीति । नास्ति मन्त्र इति सूत्रकाराभिप्रायः । तूष्णीं सायं प्रातः काण्टकी॰ समिधमादधातीति वचनात् । पलाशानिवृत्त्यर्थमिह काण्टकी समित् ॥ २ ॥

हुतदोषात् । अग्निहोत्रहवणीनिवृत्त्यर्थमुपयमनग्रहणम् । नत्वग्निहोत्रग्रहणमनर्थकम् । आग्ने॰

स्वाहेति प्रातर्व्याहृत्या वोभयत्र शेषं९ समुपहूय सर्वे भक्षयन्त्यसावुपह्वयस्वेति कर्मनामधेयेनाऽऽ-मन्त्रण उपहूत इति प्रतिवचनो होता प्रथमो भक्षयति यजमान उत्तमोऽपि वा यजमान एवाव-

अत्र केचित् । अग्निहोत्रं जुहोतीत्यनेन मासाग्निहोत्रवन्नामातिदेशे पुनर्मन्त्राम्नानं ज्ञाप-यति । ग्रहमेधीयाज्यभागन्यायेन क्लृप्तोपकारप्राकृतमन्त्रपुनःश्रवणं चोदकलोपेन तदि-तराङ्गपरिसंख्यार्थमिति । तेन प्रधानमात्रानुष्ठानं कार्यमित्याहुः । अन्ये तु अग्निहोत्रं जुहोतीति नामातिदेशेन कृत्स्नधर्मप्राप्त्युपपत्तेर्मन्त्राम्नानवैयर्थ्यं व्याहृत्या विकल्पबोध-नार्थम् । प्राकृतस्यैवानुवादसंभवात् । तस्मादिध्माधानादि कृत्स्नमेवाग्निहोत्रं कार्यम् । तथा कात्यायनोऽप्याहाग्निहोत्रस्याऽऽवृता हुत्वेति । तथा बोधायनोऽप्याह—अग्नि-होत्रविधिनेष्ट्वेति । न च तर्हि दोहनाद्युपसादनान्तस्यापि प्राप्तिः स्यादिति वाच्यम् । उपदिष्टशेषद्रव्येणातिदिष्टद्रव्यबाधे दोहादीनामर्थलोपादित्युपपत्तेः । तत्र काण्टकीवच-नेन पालाशद्रव्याभावाच्चाऽऽपराग्निकहोमः । सर्वभक्षत्वाच्च । निर्लेहनादि उदगुद्देशान्तं कर्म वचनाल्लुप्तम् । प्रत्याम्नातं यत्ततोऽन्यत्सर्वं कार्यमिति वदति । उपयमन इत्यादि । उपयमनं होत्रे प्रदाय ततः सर्वे धर्मसंबन्धिनो भक्षयन्ति । कर्मनामधेयेनेत्यादि व्याख्या-तम् । क्रमनियमार्थमाह—होता प्रथमो भक्षयति । यजमान उत्तमो भक्षयतीत्यनुषज्यते । इतरेषां क्रमस्तु—अध्वर्युर्ब्रह्मा प्रतिप्रस्थाताऽग्नीदित्यापस्तम्बोक्त्या ग्राह्यः । अनेनैव क्रमे-णोपहवा बोध्याः । अत्र धर्मसंबन्धित्वाविशेषात्प्रस्तोतुरपि केचिद्भक्षमाहुः । आपस्त-

प्र० टि०—यमप्राकपाशमि युक्तेः । केन निर्वापणं भवति तत्रान्वाधानप्रभृति ब्राह्मणतर्पणान्तं यथा भवति तथैवमिहापि समिदाधानादि मार्जनान्तं होमद्रव्यं न प्रधानमिति चेत् । नाप्रधा-नेऽपि तन्त्रोत्पत्तिर्दृश्यते । वचनाद्वरुणप्रघासेषु वारुणनिष्कास एवावभृथोऽन्यानि चैवं प्रकारेणोपलभ्यन्ते । नाग्निहोत्रप्रतिषेधं न त्वेतदिति । अपूर्ववचनात्स्यादेवेति भाष्यकारा-शयः । गतः । सायं प्रातः भूः स्वाहेति । तूष्णीं वेत्यापस्तम्बः । उपयमने शेषमिति शेषः । अग्निहोत्रे हुते यदुपयमने शिष्यते तत्समुपहूय प्रवर्ग्यकर्तारः सर्वे भक्षयन्ति । प्रवर्ग्यकर्तृणामेव नियमो नान्येषामनधिकृतत्वात् । असावसावुपह्वयस्वेति कर्मनामभिः, न देवदत्तशर्मादिभिः । उपहूत इति यान्वितं ब्रूयात् । अध्वर्य उपह्वयस्वेति प्रथमम् । तत उपहवं याचति ब्रह्मन्नुपह्वयस्व प्रतिप्रस्थातरुपह्वयस्वाग्नीदुपह्वयस्व प्रस्तोतरुपह्वयस्व यजमानोपह्वयस्वेति संबुद्ध्या । यदि न प्रस्तोता भक्षयति तदा यजमानोपह्वयस्वेत्यन्तः ।

घ्रेणेतरे हुतꣳ हविर्मधु हविरिति भक्षयित्वोपयमनं प्रतिप्रस्थात्रे प्रयच्छति तदुच्छिष्टखरे प्रक्षाल्यान्तर्वेदि निदधाति तस्मिन्रुक्ममवधाय मदन्तीरानीयाऽऽपो हि ष्ठा मयोभुव इति तिसृभिर्मार्जयन्ते निनीयाप उपयमने सर्वꣳ परिघर्म्यꣳ समवधाय ॥ ३ ॥ ( ख० ९ ) ॥

न्त्रादिभिरुक्तत्वान्नेत्यन्ये । अपि वेति पूर्वप्रतिपादितपक्षव्यावृत्तिः । यजमान एव भक्षयतीत्यनुषङ्गः । प्रत्यक्षमिति शेषः । तथा च यजमान एव प्रत्यक्षं भक्षयतीति यावत् । इतरे यजमानव्यतिरिक्ताः । अवघ्रेणाऽऽघ्राणेन नतु प्रत्यक्षं भक्षयन्तीति शेषः । हुतं हविरित्यादि । अनेन मन्त्रेण भक्षयित्वा सर्वेऽध्वर्युहस्ते प्रयच्छन्ति । स च प्रतिप्रस्थात्रे । तादित्यादि । तदुपयमनमुच्छिष्टखरे पूर्वोक्ते प्रक्षाल्य प्रतिप्रस्थातेऽन्तर्वेदि निदधाति । तस्मिन्नुपयमने रुक्ममवधाय मदन्तीरानीयाऽऽपो हि ष्ठेति तिसृभिर्मार्जयन्ते । निनीयाप उपयमने सर्वं परिघर्म्यं समवधाय निधाय । अत्र मार्जनं हस्तावनेजनमिति केचित् । तच्च सर्वेषाममीषां भक्षिणामिष्(मिष्य)ते पुरुषसंस्कारत्वात् । तथा( दा ) मार्जयन्त इत्येव बौधायनः । अन्तर्वेद्यामेव निनीयापः समवधाय सहावधाय क्वचिदिति व्याचक्षते । अत्र घर्मप्रायश्चित्तान्याह बौधायनः । तथा तत्र मदन्तीरपोऽवनिनीयाऽऽउपस्थाल्या स्रुवेणोपघातं प्रायश्चित्तानि जुहोति प्राणाय स्वाहा पूष्णे स्वाहेत्येताभ्यामनुवाकाभ्यामिति ॥ ३ ॥ ( ख० ९ ) ॥

घर्मायोत्साद्यमानायानुब्रूहीति संप्रेष्यत्युत्साद्यमा-

उत्साद्यमानायेति संसाद्यमानायेत्यर्थः । यद्यपि उत्पूर्वः सादयतिर्नाशवाची दृश्यते,

---

प्र० टि०—विकल्पः । अदृष्टभक्षणप्राप्तिस्तेषामिति मा भूदेनदर्थमवघ्रेणेतर इत्याहेत्यस्थावघ्राणभक्षो नान्यदिति भाव. । सर्वेषां भक्षणार्थोऽयं मन्त्रः । भक्षयित्वेति पुनर्वचनादाचम्य प्रयच्छति प्रतिप्रस्थातृहस्ते । प्रतिप्रस्थाता तदुच्छिष्टखरे प्रक्षाल्याऽऽचम्य पश्चादन्तर्वेद्यां निधानमध्वर्य्वादीनां सर्वेषां मार्जनं पुरुषसंस्कारत्वात् । तेन त्वन्ये प्राप्नुवन्ति मदन्तीभिर्विज्ञायते च मैत्रायणीयश्रुतौ । प्रवर्ग्ये प्रचरिष्यमाणानां तेजोऽपक्रम्य प्रविश्य तिष्ठति यथा दर्शपूर्णमासवन्मार्जनान्ते पुनस्तेजस्विनो भवन्तीति वाजसनेयश्रुतिः । तस्मान्मदन्ती(न्त्यो) न प्राप्नुवन्ति । अतः पुनर्विधीयते । मदन्तीमार्जनशेषमुदकमेवान्तर्वेद्यां निनयति । केचिदन्तर्वेद्यां सर्वं परिघर्म्यं समवधायैवं कुर्वन्ति ॥ ३ ॥

होतारं प्रति प्रैषः ।

नापानुग्रहीति वाऽऽयस्मिन्त्सप्त वा सवा इत्यु-
च्यमानेऽग्रेणाऽऽहवनीयं पर्याहृत्य सम्राडासन्द्यां
निदधाति ॥ ४ ॥

उत्सन्नकुलधर्माणामित्यादौ तथाऽपि उपसर्गाणां द्योतकत्वात्सिति तात्पर्यग्राहकप्रमाणान्तरेऽर्थान्तरवाचित्वस्याप्यविरोधः । प्रकृते चास्य प्रैषस्य सादनार्थत्वात्संसाधमानायेति सूत्रान्तराच्चात्रत्योत्साधमानशब्दः सादनार्थक एव युक्तः । नचानेनैव वचनेन प्रतिप्रवर्ग्यं घर्मत्याग एवास्त्विति वाच्यम् । विना वचनं पात्रान्तरोत्पादनस्याशक्यत्वात्प्रवर्ग्यसमाप्त्यनन्तरं सकृदेव प्रवर्ग्योद्वासनाम्नानेन तस्याऽऽवृत्त्यसंभवात् । गुणभूतोपसर्गानुरोधेन वचनस्यात्यन्तगुरुभूतार्थतात्पर्यकल्पनायोगात् । निदधातीति घर्ममिति शेषः । अन्यत्सुगमम् ॥ ४ ॥

यथा पवित्राण्यद्धि तृणमघ्न्ये विश्वदानीमित्युच्यमाने गामुत्सृजन्त्येतस्मिन्काल उत्तमेनानुवाकेन
शान्तिं कुर्वन्ति ॥ ५ ॥

पवित्रग्रहणं प्रवर्ग्यहोमसाधनत्वाभावेऽपि प्रवर्ग्यसंबन्धित्वमात्रेण सर्वेषां संभृतानामासादनं यथा स्यादित्येवमर्थं स्पष्टार्थम् । गां घर्मदुघमुत्सृजति बन्धनान्मोचयति । एतस्मिन्काले गोमोचनकाले शान्तिकरणं प्रागेवोक्तम् ॥ ५ ॥

एवं त्रिरात्र१ं सायं प्रातः प्रवर्ग्येण प्रचरन्ति
षट्कृत्वस्त्र्युपसत्के द्वादशकृत्वः षडुपसत्के
चतुर्विंशतिकृत्वो द्वादशोपसत्के ॥ ६ ॥

एवं प्रवर्ग्येण प्रचरिष्यन्त इत्यादिविधिना प्रचरन्ति । अभ्याससंख्यामाह । त्र्युपसत्के साह्ने क्रतौ षट्कृत्वः प्रवर्ग्योऽनुष्ठेय उपसत्प्रयोगसंख्ययाऽनुष्ठेयः । सायं प्रातरित्यनेनैव सिद्धे त्र्युपसत्क इत्यादिवचनं ब्राह्मणार्थम् । तस्मिन्नेव साह्ने साग्निके द्वादशकृत्वः प्रवर्ग्यानुष्ठानं षडुपसत्कत्वात् । द्वादशोपसत्केऽहीने चतुर्विंशतिकृत्वः ॥ ६ ॥

---

प्र०टि०-आयस्मिन्त्सप्त वा सवा इति होतुःशब्दं श्रुत्वा सर्वं परिधर्म्यं निदधाति॥४॥

होतुःशब्दं श्रुत्वा तद्गामुत्सृज्य तृणभक्षणजलपानार्थं चाद्धि तृणं पिब शुद्धमुदकमिति मन्त्रलिङ्गात् । मदन्तीरुपस्पृश्येत्यापस्तम्बः । प्रवर्ग्यकर्तार इति शेषः । स्पष्टमन्यत् ॥५॥

त्रिरात्रमित्यन्तसंयोगे द्वितीया । तिस्र उपसदो यस्य क्रतोः स त्र्युपसत्कः । एवमुत्तरत्र द्रष्टव्यम् । त्र्युपसत्के सोमे क्रतौ । तस्मिन्नेव साग्निके द्वादशकृत्वः । द्वादशोपसत्केऽहीने चतुर्विंशतिकृत्वः । स्वच्छान्दसः ॥ ६ ॥

तेनेष्ट्वा संवत्सरं न मांसमश्नीयान्न रामामुपेयान्न
मृन्मयेन पिबेन्नास्य राम उच्छिष्टं पिबेत् ॥ ७ ॥

तेन प्रवर्ग्येणेष्ट्वा संवत्सरं न मांसं भुञ्जीयात् । रामां स्त्रियं नोपेयान्न गच्छेत् । रामा रमणायैव गृहीता शूद्रा । मृन्मयेन पात्रेण जलादिकं न पिबेत् । रामः शुश्रूषुः शूद्रः । रामैव रामः । लिङ्गव्यत्ययः । अस्य कृतप्रवर्ग्यस्य पुरुषस्योच्छिष्टं न पिबेदित्यर्थः ॥ ७ ॥

अग्निष्टोमे प्रवृणक्ति नोक्थ्ये प्रवृञ्ज्याद्विश्वजिति सर्वपृष्ठे प्रवृणक्ति न प्रथमयज्ञे प्रवृञ्ज्यात्प्रवृञ्ज्याद्वा दुर्ब्रा-

अग्निष्टोमेऽग्निष्टोमसंस्थाकज्योतिष्टोमे । ननु प्रवर्ग्यस्यानारभ्याधीतत्वादनारभ्याधीतानां च प्रकृतिगामित्वस्य सर्वार्थमप्रकरणादिति तार्तीयन्यायेनैव सिद्धेः किमर्थं वचनमिति चेन्न । न प्रथमयज्ञे प्रवृञ्ज्यादित्यनेनाग्निष्टोमप्रथमप्रयोगेऽपि प्रतिषेधप्राप्तौ तत्प्रतिप्रसवार्थतया विधानोपपत्तेः । नोक्थ्य इत्यग्निष्टोमगुणविकार उक्थ्यक्रतावतिदेशप्राप्तः प्रतिषिध्यते । विश्वजितीत्युक्थ्यसंस्थायां प्रतिषिद्धोऽयं सर्वस्मादुक्थ्यविकारान्निवृत्तः सन्सर्वपृष्ठे प्रतिप्रसूयते । अत एव प्रतिप्रसवाज्ज्ञायतेऽस्ति सर्वपृष्ठे विश्वजिदुक्थ्य इति । न प्रथमयज्ञे प्रवृञ्ज्यात् । प्रथमयज्ञोऽग्निष्टोमसंस्थाकज्योतिष्टोमप्रथमप्रयोगः । तत्र न प्रवृञ्ज्यात्प्रवृञ्ज्याद्वा । प्रथमप्रयोगेऽपि कंचिन्नियममाह—प्रवृञ्ज्याद्दुर्ब्राह्मणस्य । यस्य त्रिपुरुषं वेदविच्छेदः स दुर्ब्राह्मण इत्युक्तं सोमप्रकरणे । तस्य प्रवृञ्ज्यात् । तथा ब्राह्म-

प्र० टि०—अथ संवत्सरं कंचिन्नियममाह—प्रवर्ग्येणेष्ट्वा संवत्सरमेवं व्रतम् । स्त्रियं नोपेयात् । कदाचिन्मृन्मयेन पात्रेण न जलं पिबेत् । अस्य यजमानस्योच्छिष्टं रामो रमणीयः पुत्रो न पिबेत् । तेन एव तत्सर्वदयतीति (तै०आ०९–८) । तत्तेन नियमेन स्वकीयं तेन एव सम्यक्क्षीणं करोतीति तदर्थः ॥ ७ ॥

प्रवर्ग्यस्याग्निष्टोमसंबन्धं विधत्ते—यावन्तः सोमयागाः सन्ति तेषु सर्वेष्वग्निष्टोमः संस्थार्यतः सर्वयज्ञात्मकः । तत्रानुष्ठिते सति कृत्स्नेऽपि यज्ञे शिरः प्रतिहितं भवति । अनारभ्याधीतस्य प्रवर्ग्यस्य यद्यपि पुरस्तादुपसदामिति वाक्येनैव प्रकृतिभूताग्निष्टोमसंबन्धः प्राप्तस्तथाऽपि 'न प्रथमयज्ञे प्रवृञ्ज्यात्' (स० श्रौ०२४–९–२९) इति वक्ष्यमाणसूत्रनिषेधसंबन्धे प्रतिप्रसवार्थं पुनर्विधानम् । निषेधस्त्वतिरात्रेऽपि चरितार्थो भविष्यति । तस्यापि विकल्पितप्रथमयज्ञत्वात् । तथा चाऽऽहाऽऽपस्तम्बः—'अग्निष्टोमः प्रथमयज्ञोऽतिरात्रमेके पूर्वेद्युः समामनन्ति' इति ।

ब्राह्मणस्य प्रवृञ्ज्याद्ब्रह्मवर्चसकामस्य योऽनूचानः श्रोत्रियस्तस्य कामं प्रवृञ्ज्यात् ॥ ८ ॥ ( ख० १० ) ॥

वर्चसकामस्यापि प्रवृञ्ज्यात् । दुर्ब्राह्मणब्रह्मवर्चसकामव्यतिरिक्तेऽपि कांचिन्नियममाह— कामं तु योऽनूचानः श्रोत्रियस्तस्य प्रवृञ्ज्यादिति । यस्य त्रिपुरुषं वेदविच्छेदो नास्ति तस्य प्रवृञ्ज्यात् । कामशब्दो विकल्पार्थः । अत्रेदं विचार्यते । कथमनारभ्याधीतः प्रवर्ग्यः । यत्प्रवर्ग्यं प्रवृणक्तीति श्रुतः । स च पुरस्तादुपसदां प्रवर्ग्येण प्रवृणक्तीति ज्योतिष्टोमाङ्गत्वेन विनियुक्तः । अव्यभिचरितक्रतुसंबन्ध्युपसत्संबन्धसहकृतात्त्वि(त)दुक्तिन्यायेन तत्प्रतीतेः । न चोपसदङ्गत्वमेवास्त्विति वाच्यम् । उपसत्पदस्य पुरस्तात्काल-प्रतियोगित्वेन स्वार्थोपस्थापकस्योद्देश्यसमर्पकत्वायोगात् । तद्बाधकपदान्तरकल्पनया वैमृधवत्तदङ्गत्वबोध उपसदां फलवत्त्वज्ञानं विनाऽङ्गयाहित्या(साहित्या)भावेन फलवत्त्व-ज्ञानार्थं ज्योतिष्टोमोपस्थितेरावश्यकत्वे लाघवेन ज्योतिष्टोमार्थत्वस्यैवोचितत्वात् । कौषीतकिब्राह्मणे प्रकरण एव प्रवर्ग्योऽम्नानाच्च । तत्र च न प्रथमयज्ञे प्रवृञ्ज्यादिति श्रुतम् । तत्र प्रथमयज्ञपदेन ज्योतिष्टोमस्य सर्वसंस्थस्य ग्रहणमथवा तदीयप्रथमप्रयोगमा-त्रस्येति चिन्तायां प्रथमयज्ञशब्दो ज्योतिष्टोमनाम । एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोम इति सामानाधिकरण्यात् । तस्य प्रथमं प्रयुज्यमानत्वेन प्रवृत्तिनिमित्तस-त्त्वाच्च । न चैतेनेष्ट्वाऽथान्येन यजेतेत्यन्यशब्देनान्यसंस्थानामभिधानात्तासु ज्योतिष्टोमो-त्तरकालत्वविधानेन न सर्वसंस्थज्योतिष्टोमस्य प्रथमं प्रयुज्यमानत्वमिति वाच्यम् । तावताऽपि ज्योतिष्टोमसामानाधिकरण्येन प्रवृत्तिनिमित्ताविघातात् । अतो वाक्यात्प्रक-रणाच्च ज्योतिष्टोमत्वावच्छेदेनैवायं प्रतिषेधः पर्युदासो वा ज्योतिष्टोमभिन्ने प्रवृणक्तीति ।

---

प्र० टि०—केचित्प्रतिषेधो विकल्पेन यद्यग्निष्टोमः प्रथमयज्ञः, तत्र प्रवृञ्जनस्य नित्य-त्वात् । अग्निष्टोमे प्रवृणक्तीत्युच्यते । अतिरात्रश्चेत्तत्र विकल्पो भवति । अग्निष्टोम उक्थ्यः षोडश्यतिरात्रोऽप्तोर्याम इत्येतासु संस्थासु प्रवर्ग्यो नित्यः । नोक्थ्ये प्रवृञ्ज्यादिति निषेधो वाजपेयादिषु । विश्वजिति सर्वपृष्ठे प्रवृणक्तीत्यापस्तम्बः । विश्वजित्सर्वपृष्ठगुणको यत्र भवति तत्रापीति मन्तव्यम् । अत एवाग्निष्टोम उक्थ्यो वाऽतिरात्रोऽप्तोर्यामो वा यत्किंचिदनाश्रित्य न तयोः प्रधानत्वं च विद्यते । तस्मादाश्रितव्यमेव । तेषामप्ययं किमाश्रयणीय इति प्राप्ते तत्र कश्चित्प्राशिरित्युच्यते ' नोक्थ्ये प्रवृञ्ज्यात् ' ( आप० श्रौ० १९-३-१८ )

अन्यथा विकल्पापत्तेः। यत्तु अग्निष्टोमे प्रवृणक्तीति वचनं तत्पर्युदस्तप्रतिप्रसवार्थम्। तदपि च कामं तु योऽनूचानः श्रोत्रियः स्यात्तस्य प्रवृञ्ज्यादित्यनेनोपसंह्रियते। तेनानूचानश्रोत्रियस्याग्निष्टोमसंस्थाकज्योतिष्टोमे नित्यं करणमन्यज्योतिष्टोमे नित्यमकरणं विकृतिषु च नित्यं करणमिति पूर्वपक्षिते सिद्धान्तः—अवयवशक्त्यैवार्थ बोधोपपत्त्यतिरिक्तरूढिकल्पने प्रमाणाभावात्। प्रथमशब्दस्याप्रवृत्तप्रवर्तनवाचित्वेन प्रथमप्रयोगपरत्वावगतेः। यज्ञशब्दस्य च लक्षणया प्रयोगपरत्वाभ्युपगमात्प्रथमयज्ञपदेन ज्योतिष्टोमप्रथमप्रयोगोऽभिधीयते। स च प्रथमप्रयोगोऽग्निष्टोमसंस्थाकज्योतिष्टोमस्य। पाद्यमिकन्यायात्। प्रथमं यजमानोऽतिरात्रे सत्रेण यजेतेति वचनादतिरात्रसंस्थाकस्य। तत्रोभयत्रापि अनेन प्रवर्ग्यस्य निषेधः पर्युदासो वा नतु विकृत्यन्तरे तत्रोपदेशातिदेशाभ्यां तदप्राप्तेः। तथा च प्रथमयज्ञशब्दो वाक्यशेषाद्वैदिकप्रयोगाच्च निरूढलक्षणया सोमान्तरनिरूपितप्राथम्यवत्प्रयोगविषयज्योतिष्टोममेवाभिदधाति। अन्यथा स्वस्वद्वितीयादिप्रयोगनिरूपितप्राथम्यवत्प्रयोगविषययज्ञमात्राभिधाने आहिताग्नय इष्टप्रथमयज्ञा गृहपतिसप्तदशाः सत्रमासीरन्नित्यादौ सत्रे यज्ञमात्रोत्तरकालतापत्तेः। अतश्चोक्तविधज्योतिष्टोमप्रथमप्रयोग एव प्रवर्ग्यप्रतिषेधः। तथात्वेऽतिरात्रप्रथमाहारेऽपि न तौ पशौ करोतीतिवद्विकल्पापत्तेः। न च क्रियायाः स्वरूपेणोद्देश्यसंबन्धित्वेन वा निषेध एव विकल्पः—यथोक्तस्थले। यत्र तु कारकनिषेधः—यथा रात्रौ श्राद्धं न कुर्यादित्यादौ तत्र निषेधस्य कारकमात्रविषयत्वेन क्रियाविषयत्वाभावात्क्रियाविषयविधिविकल्पापादकत्वानुपपत्तिः। प्रकृते च प्रथमयज्ञपदस्य नोद्देश्यपरत्वमपि तु प्रातःसवन इतिवदधिकरणकारकपरत्वम्। अतश्च न विकल्पापत्तिरिति वाच्यम्। कारकस्यापि प्रथमप्रयोगस्याधिकरणत्वस्य विधितः प्राप्तौ न्यायतौल्ये(ल्ये)न प्रथमप्रयोगाधिकरणत्वस्यैव विकल्पापत्तेः। अत एवाऽऽक्षेपेण यत्किंचित्कालप्राप्तौ राज्युपादानस्यैच्छिकत्वेन रागप्राप्तौ वैधत्वाभावात्(न्न) तन्निषेधस्य विकल्पापादकत्वम्। प्रकृते तु प्रथमप्रयोगाधिकरणत्वं नैच्छिकं प्रतिप्रधानगुणान्वयस्य वैधत्वात्। अतः स निषेधोऽपि विकल्पापादक एव। वस्तुतस्तु प्रथमप्रयोगस्योद्देश(द्देश्य)मेव मीमांसकोक्तमिति न काचिदनुपपत्तिः। अतो नानूयाजेष्वितिवत् पर्युदास एवायम्। अनारभ्याधानवाक्यशेषाद्युक्तविधप्रथमप्रयोगाभिन्ने प्रवृञ्जनादिति। अनश्च प्रापकप्रमाणाभावात्प्रथमप्रयोगेऽकरणप्रसक्तावग्निष्टोमे प्रवृणक्तीति वचनं वस्तुतो नाप्राप्तप्रापकमपि तु प्रतिप्रसवफलकं सदग्निष्टोमसंस्थाकत्वनिमित्ते प्रथमप्रयोगेऽपि नित्यं प्रवर्ग्यविधानार्थं न तु विकल्पेन। विकल्पे प्रमाणाभावात्। अस्य च नान्यविषयता। सामान्यविधित एव सर्वत्र प्राप्तत्वादिति प्रथमप्रयोगविषयतैव। अनेन काममित्यनूचानवाक्यस्योपसंहारः। तेनाग्निष्टोमसंस्थाकज्यो-

तिष्टोमप्रथमप्रयोगेऽनूचानस्य नित्यं करणं तथा श्रोत्रियस्यापि । अनूचानो वेदाध्यापकः । तेन क्षत्रियवैश्ययोर्व्यावृत्तिः । श्रोत्रियः प्रकर्षेण वेदतदर्थज्ञ इत्युक्तम् । कामपदेनोभयोः कर्त्रोरुपादानाच्च न विधेयानेकत्वम् । तदन्येषामग्निष्टोमप्रथमाहारेऽपि नित्यमकरणमिति केचित् । अन्ये तु अनूचानश्रोत्रियपदाभ्यां ब्रह्मवर्चसकामदुर्ब्राह्मणयोरुपलक्षणं कृत्वा त्रितयभिन्नप्रथमप्रयोगे नित्यमकरणमिति वदन्ति । तन्त्रवार्तिके त्वनूचानादेर्विकल्पोऽन्येषां तु नित्यमकरणमित्युक्तं तत्कामपदेन विकल्पाभिधानमङ्गीकृत्याग्निष्टोमवाक्येन च तेनोपसंहारादनूचानादेर्विकल्प इत्यभिप्रायेणेति ध्येयम् । सर्वपाऽतिरात्रप्रथमाहारे प्रतिप्रसवाभावान्नित्यमेवाविनियोगः प्रकृतौ तु प्रथमप्रयोगेऽपि नित्यं करणमित्यस्मत्कृतगुरुविवरणे विस्तरः ॥ ८ ॥ ( ख० १० )॥

इति श्रीवाञ्छेश्वरसुधीविरचिते सत्याषाढहिरण्यकेशिप्रवर्ग्यसूत्रव्याख्याने महालिङ्गसमाख्याने चतुर्विंशप्रश्ने पञ्चमः पटलः ।

---

अथ षष्ठः पटलः ।

---

प्रवर्ग्यमुद्वासयिष्यन्नजामग्नीधे ददाति पष्ठौहीं

---

प्र०टि०-इत्युक्त्वाऽनन्तरं 'विश्वजिति सर्वपृष्ठे प्रवृणक्ति'(१९-२-९९)इति विधानाल्लोकस्य इति गम्यते । तत्राऽऽपस्तम्बेन बाध्यते तस्मादेकत्र विधायकमन्यत्र न विधायकं च यथाऽज्ञातस्य दुग्धस्य न चान्नं दातव्यं वस्त्रं च परिदातव्यमिति केन विधीयते । तस्मादप्राप्तोऽयं विधिः । अपरे त्वेवमाहुः—शाखान्तरेषु विद्यते विश्वजित्सर्वपृष्ठोक्थ्यस्तत्र प्रवृञ्जनप्राप्त्यर्थं वचनमिति। तथापि नोपपद्यते । यथा पाटलिपुत्रे बहवः पुरुषा विद्यन्त इति न्यायः । केचित्पुरुषास्तेषामन्नपानादि न विद्यते । अत एव त्वेम्यो मन्यते । तस्मादन्यशाखोक्तस्य विश्वजित्सर्वपृष्ठोक्थ्यस्याऽऽपस्तम्बेन विधानाद्विदधाति प्रवृञ्जनम् । कोऽसौ दुर्ब्राह्मणस्तत्राऽऽह बौधायनः—यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् । स वै दुर्ब्राह्मण इति । प्रथमयज्ञे प्रवृञ्ज्यादिति शेषः । 'एकां शाखामधीत्य श्रोत्रियः । अङ्गाध्याय्यनूचानः' इति वैखानसः । कामवचनात्र प्रथमयज्ञादिनियमः । नानाहिताग्नेरिति निषेधात् ॥ ८ ॥

इति सत्याषाढहिरण्यकेशिप्रवर्ग्यटिप्पण्यां महादेवशास्त्रिसंकलितायां पञ्चमः पटलः ॥

---

प्रवर्ग्योद्वासनकाले ददाति । दक्षिणां ददातीति वचनादग्नीदजां ते ददामीत्येवं लौकि-

ब्रह्मणे धेनुं होत्रे रुक्मावध्वर्यवे ॥ १ ॥

प्रवर्ग्यं प्रवर्ग्यसाधनीभूतपात्रसमुदायमुद्वासयिष्यन्नुद्वासनेन संस्करिष्यन् । अजामित्यादि स्पष्टम् । पष्ठौही गर्भिणी गौः । न च तस्या घर्मोपयोगाभावात् कथं विनियोग इति वाच्यम् । तद्दानस्याऽदृष्टार्थत्वेन प्रतिपत्तित्वाभावात् ॥ १ ॥

समोप्यापरं खरं पूर्वस्मिन्नुपव्यूहति मेथीं मयूखा-
न्विशाखदामानि चाऽऽदायापरेणाऽऽहवनीयं
पर्याहृत्य सम्राडासन्द्यां निदधाति सम्राडासन्दी-
मग्रेणाऽऽहवनीयं निधायोदुम्बर्यां स्रुचि चतुर्गृ-
हीतं गृहीत्वा घर्म या ते दिवि शुगित्यास्य-
दघ्ने जुहोति घर्म या तेऽन्तरिक्षे शुगिति नाभि-
दघ्ने घर्म या ते पृथिव्यां शुगिति जानुदघ्ने ॥ २ ॥

अपरं खरं गृहीत्वा पूर्वस्मिन्खरे व्यूहति निक्षिपति । खरद्वयमेकी करोतीत्यर्थः । मेथ्यादयो व्याख्याताः । तानि मेथीमयूखविशाखदामानि । अग्रेणाऽऽहवनीयमानीय सम्राडासन्द्यां निदधाति । ततः सम्राडासन्दीमग्रेणाऽऽहवनीयं स्थापयित्वा स्रुच्युपयमन्यां प्रोक्षणीधान्यां वा । अन्यत् स्पष्टम् । अपि वा प्रतिप्रस्थाता त्रीन्स-नखान्शलाकान् मुष्टिनादाय तेषामेकमाहवनीय आदीप्याऽऽस्यदघ्ने धारयति । तस्मिन्नध्वर्युः प्रथमामाहुतिं जुहोति । तस्मिन्नपरमादीप्याऽऽहवनीये पूर्वं प्रहृत्य नाभिदघ्ने द्वितीयाम् । तस्मिन्नपरमादीप्याऽऽहवनीये पूर्वं प्रहृत्य जानुदघ्ने, तृतीयामाहवनीय एवैनमनुप्रहरति । अपि चेह चतुर्गृहीतविकल्पः । सनखानखान्तसंगतान्दु(द्व)स्थमुष्टपरिमितिमित्युक्तप्राग्( ग् )दर्भान् । आस्यदघ्ने जुहोति । आसीनस्य शक्यत्वात् । तस्मिन्शलाकमुष्टौ । एतं शलाकमुष्टिम् । आहवनीय एवानुप्रहरति ॥ २ ॥

---

प्र० टि०—त्र्यायेन । सर्वत्रैवं क्रतुमध्ये । ददातीत्यनुवर्तः । पष्ठौही बालगर्भिणी गौः । रुक्मस्यापि हिरण्यवत्प्रतिग्रहमन्त्रे हिरण्यशब्दस्य विद्यमानत्वात्तत्रापि केचिन्मन्त्रेण न गृह्णन्ति, इति रुक्मस्याऽऽक्षिणत्वाद्धिरण्य ददातीति यत्र चोद्यते तत्र न दद्यादन्तम् ॥ १ ॥

समोप्यैकीकृत्यापरं खरं गार्हपत्योत्तरतो न्युप्तमाहवनीयस्योत्तरस्मिन्खरे न्युप्यैकाऽऽदिमन्त्रे गृह्णाति । पृथक्पात्राभ्यां गृह्णातीत्येके । आहवनीयस्योत्तरत आसन्दीं मतिष्ठाप्य तस्यां प्रवर्ग्यपात्राण्यन्यत्रवायोदुम्बर्यामिति । पुनरौदुम्बरग्रहणं विस्पष्टार्थम् । घर्म या ते दिवि शुगित्युचैर्गृहीतया स्रुचा । घर्म या तेऽन्तरिक्ष इति नाभिः । घर्म या ते पृथिव्यामिति नर्धस्तराम् । निरस्याऽऽदूर्ध्वमिति भाष्यम् ॥ २ ॥

एतस्मिन्काले प्रतिप्रस्थाताऽहतेन वाससा परिश्रिते पत्नीमुदानयत्यनुनोऽस्यानुमतिरन्विदनुमत इत्युपनिष्कामन्त्यनुहरन्ति खरौ दक्षिणत उच्छिष्टखरमग्रेण प्राग्वँशꣳ सम्राडासन्दीं प्रतिष्ठाप्य प्रस्तोतः साम गायेति संप्रेष्यति सह पत्न्या त्रिः सर्वे साम्नो निधनमुपयन्ति मध्यदेशे द्वितीयं प्राप्य तृतीयꣳ सर्वत्र संप्रेष्यति ॥ ३ ॥

अहतेनेत्यादि । यथैषा प्रवर्ग्यसंभारान्न पश्यति तथाऽऽच्छादिते धर्मे तामानयतीत्यर्थः । न साऽवेक्षत इति निषेधस्य पूर्वमुक्तत्वादिति भावः । तथाऽऽह बौधायनः । अथैतां पत्नीमुदग्दशेन वाससाऽन्तर्दधातीति । तन्मते पत्न्याः परिश्रयणमिति विशेषः । प्राग्वंशात्सम्राडासन्दीमादाय अन्विदिति मन्त्रेण निर्गच्छन्ति । अनुहरन्तीत्यादि । संन्युप्तौ क(ख)रौ पात्रे गृहीत्वा परिकर्मिणो दक्षिणत उच्छिष्टखरं परिहरन्तीति शेषः । तथा चाऽऽआपस्तम्बः—दक्षिणत उच्छिष्टखरं परिहरतीति । उच्छिष्टखरमपि पात्रे गृहीत्वा दक्षिणमार्जालीयदेशं नयतीति केचित् । प्राग्वंशस्य पुरस्तात्सम्राडासन्दीं प्रतिष्ठाप्य प्रस्तोतारं साम गायेति संप्रेष्यति । सम्राडासन्द्या द्वावन्तर्वेदि पादौ द्वौ बहिर्वेदीत्यास्तम्बः । सह पत्न्येत्यादि । पत्न्या सह सर्वे ऋत्विजः प्रस्तोत्रा गीयमानसाम्नो निधनमन्तिमभक्तिमुपयन्ति सह गायन्तीत्यर्थः । मध्ये मध्यदेशे द्वितीयं निधनमित्यनुवज्यते । प्राप्योद्वासनदेशमिति शेषः । तत्र गत्वा तृतीयं निधनमुपयन्तीति चानुषङ्गः । क्षित्रस्त्वा परस्पाया इति प्रथमभभिप्रमन्ति । ब्रह्मणस्त्वा परस्पाया इति द्वितीयम् । प्राणस्य त्वा परस्पाया इति तृतीयम् । प्रथमे साम्नि गीयमान इति शेषः । अच्वनीति वा । एवं द्वितीयतृतीये । तत्रोत्तरवेदेः पश्चिमदेशगमने तृतीयो मन्त्रः ॥ ३ ॥

प्र० टि०—आहवनीये प्रस्तरप्रहरणविधानलौकिकशङ्का मा भूदिति । अपवृत्तकर्मत्वाद्‌प्रक्षेपणे प्रायश्चित्तनिवृत्त्यर्थवचनान्न दोषोऽस्तीति सर्वत्रैवम् । अयं विधिः कल्पान्तरोक्तत्वात्सास्त्यस्माकमिति भाष्यकृत् । प्रतिप्रस्थाता पत्नीमुदानयत्याहवनीयदेशे परिश्रित इति । यथैषा प्रवर्ग्यं न पश्यति तथा तिरोधीयत इत्यर्थः । तथा चाऽऽह बौधायनः—'अथैनां पत्नीमुदग्दशेन वाससाऽन्तर्दधाति' ( बौ० श्रौ० ९-९-२३ ) इति । संन्युप्तौ खरौ पात्रेण गृहीत्वा मेथ्यार्दीश्च परिकर्मिणोऽनुहरन्ति । उच्छिष्टखरं जघनेन गार्हपत्यं नीत्वा दक्षिणाग्नेः पूर्वया द्वारा निर्हृत्य प्राग्वंशस्य महावेदेश्च दक्षिणतो हरति । मार्जालीयस्थापनकाले सर्वेषु धिष्णियेषु मार्जालीयोच्छिष्टखरं क्षिपति । सम्राडासन्द्या द्वावन्तर्वेदि पादौ द्वौ बहिर्वेदि प्रतिष्ठाप्य साम गायेत्यध्वर्युराह । सर्वे निधनं कुर्युः । एꣳविधं समत्रिणं दहेति त्रिरेकैकस्मिन्प्रैषे-व्यत्रिणं दहेति (?) ॥ ३ ॥

अपरेणोत्तरवेदिं निधाय प्रस्तोतर्वार्षाहारꣳ साम गायेष्टाहोत्रीयꣳ साम गायेति संप्रेष्यतीष्टाहोत्रीयस्य सर्वे साम्नो निधनमुपयन्ति न वार्षाहारस्य ॥ ४ ॥

सर्वे ऋत्विज इष्टाहोत्रीयस्य निधनाख्यमन्तिममर्किं गायन्ति । तत्साहचर्यात्सर्वेषां वार्षाहारनिधनगानस्यापि प्रसक्तेर्निषेधोऽयं न वार्षाहारस्येति ॥ ४ ॥

यद्युपरिष्टात्परिषिञ्चेदत्र वार्षाहारं चोदयेत् ॥ ५ ॥

यदि उपरिष्टात्परिषेको भवति तत्पक्षश्चेदाश्रीयते तत्र वार्षाहारं प्रेष्यतीत्यर्थः । उक्तं चाऽऽपस्तम्बेनोपरिष्टादश्रेके परिषेकं समामनन्तीति । अन्यत्रेष्टाहोत्रीयमेवेत्यर्थः॥५॥

उदकुम्भमादाय वल्गुरसि शंयुधाया इति त्रिः प्रदक्षिणमुत्तरवेदिं परिषिञ्चन्पर्येति ॥ ६ ॥

स्पष्टम् । निधाय कुम्भं शं च वक्षि परि च वक्षीति त्रिः परिषिञ्चन्प्रतिपर्येतीत्याऽऽपस्तम्बः ॥ ६ ॥

चतुःस्रक्तिर्नाभिर्ऋतस्येत्युत्तरवेद्यां खरावुपनिवपत्यप द्वेषो अप ह्वर इति मार्जालीयदेश उच्छिष्टखरं पाणी प्रक्षाल्योत्तरवेद्याꣳ हिरण्यं निधाय देव पुरश्चर सघ्यासं त्वेति तस्मिन्प्रचरणीयं

चतुःस्रक्तिरिति मन्त्रेणोत्तरवेद्यां खरावुपनिवपति निदधाति । चतुःस्रक्तिरिति मन्त्रलिङ्गादुत्तरवेद्यामुपनिवाप एवायं मन्त्रो नान्यत्रेति बोध्यम् । अप द्वेष इति मन्त्रेण मार्जालीयदेशे मार्जालीयदेशं गत्वोच्छिष्टखरं निवपतीत्यनुषङ्गः । पाणी हस्तौ प्रक्षाल्योत्तरवेदिमध्ये हिरण्यं निधाय हिरण्यस्योपरि देव पुरश्चर सघ्यासं त्वेति मन्त्रेण प्रचरणीयं महावीरं

प्र० टि०—उत्तरवेदिग्रहणं प्रदर्शनार्थं वक्ष्यमाणानामप्युद्वासनदेशानाम् । तस्मिन्यं द्वितीयं प्रैषं ब्रूयात् तथा निधनमुत्तरवेदिं प्राप्य तृतीयं प्रैषमाह । तथा निधनं सर्वत्र प्रकार्योद्वासनदेशेषु पुनरप्स्वादिषु चैवं संप्रैषादिप्रयुञ्जनमत्रापि भवति । यत्रोद्वासनं कुर्वन्ति तद्देशं प्राप्य तृतीयं प्रैषं ब्रूयात् । सर्वपक्षे ■ तृतीयपर्यायस्य निधनमुपेत्य प्राणस्य त्वेति । उत्तरवेदेरुत्तरतो गत्वाऽऽमन्त्री प्रतिष्ठाप्य संप्रेष्यति प्रस्तोतर्वार्षाहारꣳ साम गायेष्टाहोत्रीयꣳ साम गायेति च न वार्षाहारस्येति निषेधवचनादिष्टाहोत्रीय एव साम्नो निधनं समाधानमुपयन्ति प्राप्नुवन्ति ॥ ४ ॥

यदि तत्र संप्रेष्यति वार्षाहारं चोदयेत् पूर्वं प्रस्तोतरिष्टाहोत्रीयं साम गायेति च पूर्वं ब्रूयात् । इतरथा यथोक्तेनैव ॥ ५ ॥

तूष्णीमुदकुम्भमादायाध्वर्युर्मन्त्रेण परिषिञ्चति ॥ ६ ॥

निवपतीत्यध्वर्युः । मार्जनं स्यादित्यर्थः । खरे हिरण्यं निधायेत्येवमादि ।

महावीरमुपावहरत्येवमितरौ दक्षिणोत्तरौ वा तूष्णीमितराण्यादित्यस्यैव रूपं करोति ॥ ७ ॥

निदधाति शफाभ्यामेव । एवमितरौ पूर्वापरौ निदध्याद्दक्षिणोत्तरौ वा । आपस्तम्बस्तु पूर्वापराविति स्पष्टमेवाऽऽह । तच्च प्रचरणीयस्य पुरत एव बोध्यम् । तथा च बोधायनः— अग्रेण प्रचरणीयमिति । तूष्णी मन्त्रं विना । आदित्यस्येव रूपं मण्डलाकारमित्यर्थः ॥ ७ ॥

महीनां पयोऽसीति प्रचरणीय आज्यमानयति वनस्पतीनामोषधीनाꣳ रस इति मधु वाजिनं त्वा वाजिनोऽवनयाम इति दध्येवमितरयोः ॥ ८ ॥

प्रचरणीयो यथा पूर्यते तथाऽऽज्यादीनि त्रीण्यानयति । तच्चोत्तरसूत्रे स्पष्टम् । एवमितरयोर्द्वितीयतृतीयमहावीरयोः । पूरणं कार्यमिति शेषः ॥ ८ ॥

अपि वाऽऽज्येन प्रथमे मधु द्वितीये दधि तृतीये ॥ ९ ॥

आज्यमेव प्रथम आनयति न तु दधिमधुनी । तच्च पयोमन्त्रेणैव । द्वितीयस्य मधुनैव पूरणं तृतीयस्य दध्नैव पूरणम् ॥ ९ ॥

---

प्र० टि०—उपावहरतीति शेषः । प्रचरणीयं महावीरमुपावहरतीति भरद्वाजः । अत्रापि शफाभ्यां परिग्रहो महावीरस्य न विस्मर्तव्यः । प्रचरणीयस्याग्रतः पूर्वापरौ भवतः । दक्षिणोत्तरौ विकल्पः । तथा पूर्वापराविति वैखानसः । प्रचरणीयस्य यथा पूर्वापरयोगस्तथाऽग्रेण प्रचरणीयम् । अत्रैव सर्वं परिघर्म्यं सर्वतः पारिमण्डलमादित्यस्य रूपं करोतीत्यापस्तम्बः । तूष्णीमितराण्यादित्यस्यैव रूपं ध्यानं करोत्यध्वर्युः । प्रवर्ग्यस्य पूर्वेदिश्युद्वासनम्—शिरो वा एतद्यज्ञस्य ( तै० आ० ५–९) इत्यत्र द्रष्टव्यम् ॥ ७ ॥

शान्त्यर्थं प्रक्षिपति । गोपय इत्यापस्तम्ब । आनयतीत्यनुकर्षः । यथा पूर्यते प्रचरणीयेन महावीरे दध्यानयतीति भरद्वाजः । एवं द्वितीयं च तृतीयं च पूरयतीत्यापस्तम्बः ॥ ८ ॥

अपि वेति पक्षान्तरम् । पयो नित्यम् । आज्यमेवेत्यस्मिन्पक्षे गव्यमाज्यमेवेति गम्यते । महीना पयोऽसीति प्रचरणीमप्याज्येनैव पूरयेत् । ज्योतिर्भा असीति द्वितीयं महावीरं मधुना पूरयेत् । वाजिनं त्वेति पूरयेद्दध्ना तृतीयम् । केचिदाज्यं त्रिः पूरयन्ति त्रिभिर्मन्त्रैः प्रथमं, एवं मधुना द्वितीयं तथा तृतीयं दध्नेति, मा भूत्कर्मविलोप इति ॥ ९ ॥

'घर्मैतत्तेऽन्नमेतत्पुरीपमिति दध्ना मधुमिश्रेण यानि पात्राण्यासेचनवन्ति तानि संपूरयत्यभ्युक्षतीतरा-ण्यरिक्ततताया इति विज्ञायते ॥ १० ॥ ( ख० ११ ) ॥

घर्मैतत्त इति मन्त्रेण मधुमिश्रेण दध्ना यान्यासेचनवन्ति बिलवन्ति पात्राणि भवन्ति तानि पूरयति । इतराणि बिलशून्यानि अभ्युक्षति सिञ्चति । एवं हि सति सर्वमरिक्तं भवतीति श्रूयत इत्यर्थः ॥ १० ॥

अथ यदि पुरुषाकृतिं चिकीर्षेत्समानमेतेषामुपा-वहरणं तच्छिरो भवति तस्मिन्नेनमप्रच्छिन्नाग्रं प्राञ्चं निदधाति शिखायै रूपम् ॥ ११ ॥

पुरुषाकृतिचिकीर्षायां प्रचरणीयोपावहरणान्तं कृत्वेतरावुपावहरेत् तेन शिरसो रूपं भवतीत्यर्थः । शिखायै शिखाया इत्यर्थः । षष्ठ्यर्थे चतुर्थीप्रयोगश्छान्दसः ॥ ११ ॥

अभितो दोग्ध्रे कर्णयोः प्रोक्षणीधानीं मुखस्य नासिकयोः स्रुचावक्ष्णोर्हिरण्यशकलावाज्यस्रुवा-वाज्यस्थालीं ग्रीवाणां धृष्टी जतृ( त्रू )णामभितः शफावंसयोरभितो रौहिणहवण्यौ बाह्वोर्मेथीं पृष्टीनामभितो धवित्रे पार्श्वयोर्मध्ये तृतीयमुर-सोऽभ्रिं श्रोण्योरभितो मयूखौ सक्थ्योर्मध्ये तृतीयं मेढ्रस्य रौहिणकपाले पाष्ण्योर्मध्य उपयमनमुद-रस्य तस्मिन्सर्वं रज्जुमयमवदधात्पात्रा( त्यान्त्रा )-

कर्णयो रूपमित्यादौ सर्वत्र रूपं करोतीत्यस्य प्रतिरूपः । अभितो दक्षिणत उत्त-रतः । आज्यस्रुवावाज्यबिन्दू । जतृ( त्रू )णां कण्ठादधोविद्यमानास्थिविशेषाणाम् । पृष्टीनां

---

प्र० टि० — अभ्युक्षतीतराणीति । अबिलवन्त्यभ्युक्षति । एवमरिक्तताया इति ॥१,१०॥

यदिशब्दः पक्षान्तरत्वद्योतनार्थः । अथ पुरुषाकृतिं प्रवर्ग्यपात्रं कुर्वाणश्चेदत्रैवेतरा-वििति पुनर्वचनादस्मिन्पक्षे तु पूर्वतश्चापरतश्च तद्दक्षिणतश्चोत्तरतश्च प्रचरणीयस्योपरि-ष्टादप्रच्छिन्नाग्रं वेदं निदधाति शिखाया रूपं करोति ॥ ११ ॥

अभितो दक्षिणत उत्तरतश्च दोग्ध्रे कर्णयो रूपं करोति । हिरण्यशकलावाज्यबिन्दवो नेत्रयो रूपं करोतीत्यर्थः । प्रोक्षणीधानीं प्रागग्रामुदगग्रां वा महावीरेभ्योऽपरतो मुखस्य रूपं करोति । एवमितराणि प्रत्यगपवर्गं पुरुषाकृतिं करोति । ग्रीवाणामिति नित्यं बहु-वचनं छान्दसत्वात् । आज्यस्थाल्या दक्षिणत उत्तरतश्च धृष्टी निधाय रूपं करोति । जत्रु धातुविशेषः । अन्यत्स्पष्टम् ।

णात् रौहिणपिष्टलेपेन प्रध्वंसयति मज्जां वेदं
विस्रस्यानुप्रकिरति स्नायूनामवकाभिर्धूपतृणैरिति
प्रच्छादयति मांसस्य दध्ना मधुमिश्रेणावोक्षति
लोहितस्य कृष्णाजिनेन प्राचीनग्रीवेणोत्तरलोम्ना
प्रोर्णोति त्वचो लोम्ना सम्राडासन्दीं विस्रस्यो-
परिष्टान्निदधाति सम्राज्यरूपं करोति ॥ १२ ॥

पृष्ठास्थ्नां प्रध्वंसयति । अभिप्रकिरति अवकाभिः शैवालैर्धूपतृणैर्मुञ्जप्रलवैः । साम्रा-ज्यस्य सम्राज एव सम्राडासन्दी दृश्य( उद्वास्य )त इति भावः । सम्राट्शब्दसंब-न्धाद्वा । मज्जामित्यादौ षष्ठ्यर्थे द्वितीया । पूर्वोक्तानां साधनक्रमः कथ्यते—पुरुषस्य प्राक्शिरस्कत्वान्महावीरेभ्यः पश्चादाज्यस्थाली ततः पश्चाच्छफौ ततः पश्चात्प्रतीचौ रौहिणहवण्यौ तयोर्मध्ये मेथी पवित्राणि ततः पश्चादुपयमनं ततः पश्चादग्निरिति बोध्यम् ॥ १२ ॥

उत्तरवेद्यामुद्वासयेत्तेजस्कामस्योत्तरवेद्यामुद्वासयेद्-
न्नकामस्येति पुरो वा पश्चाद्वोद्वासयेदपां मध्य
उद्वासयेदिति नदीद्वीपं ब्रुवते यदि नदीद्वीप उद्वास-
येन्न परिषिञ्चेन्नात्र वार्पोहारं चोदयेत् ॥ १३ ॥

*नित्यान्काम्यांश्चोद्वासनदेशानाह—उत्तरवेद्यामित्यादि* । *उत्तरवेद्या नित्याया एव* तेजोन्नादिलक्षणफलोद्देशेन विधिरिति केचित् । वस्तुतस्तूद्वासनविषय उत्तरवेदेर्नित्यता-वेदकप्रमाणाभावेन फलसंबन्धरहितदेशविशेषाणामग्रे वक्ष्यमाणत्वेन चोत्तरवेदेः काम्यत्व-मेव युक्तम् । पुरः पूर्वभागे । उपस्थितत्वाद्देवयजनदेशस्य पश्चात् । तस्यैव पश्चिमदेशे वाऽपां मध्य उद्वासनं कथं स्यादिति मन्यमान आचार्यः श्रुत्यर्थमाहेति नदीद्वीपं ब्रुवत इति । अपा मध्य इत्यनेन नदीद्वीपमेव श्रुत्यभिप्रेतमिति पूर्व आचार्या वदन्तीत्यर्थः । नदीद्वीप उद्वासनपक्षे परिषेचनवार्पोहारयोर्निवृत्तिः ॥ १३ ॥

---

प्र०टि०—रौहिणपिष्टशेषेण सर्वां पुरुषाकृतिं बद्ध्वा ध्वंसयति । य(त)था वेदम् । धूपतृणानीति मुञ्जप्रलवानां नामधेयम् । स्पष्टं शेषम् । दध्ना मधुमिश्रेणावोक्षणे लोहि-तोत्पादकत्वं भैषज्ये प्रसिद्धम् ॥ १२ ॥

अथ नित्याः काम्याश्चोद्वासनदेशा उच्यन्ते—तत्रोत्तरवेद्या एव नित्याया एव कामा इति स्थास्यति । उत्तरवेद्या नित्यत्वं काम्यत्वं च । प्राग्वंशस्य पुरस्तात्पश्चाद्वा । अत्र काम्य-तैव । अपां मध्ये क्वचिन्नद्याः पुलिने वा । द्वीपग्रहणादपां मध्येऽपि न परिषिञ्चेत् । अत्र कालविकल्प इति भाष्यकृत् । चोदयेत्प्रेषयेत् ॥ १३ ॥

यद्यभिचरेदिदमहममुष्याऽऽमुष्यायणस्य शुचा प्राणमपि दहामीति यं द्विष्याद्यत्र स स्यात्तस्यां दिश्युदुम्बरशाखायामुद्वासयेत् ॥ १४ ॥

अथाभिचारकामस्योद्वासनमाह—यदीति। अभिचरेत्, अभिचारप्रयोगं कुर्यात् स यस्यां दिशि द्वेष्योऽस्ति तस्यां दिशि औदुम्बरीं शाखां निधाय तस्यां सर्वं परिघर्म्यमिदमहमित्यादिना मन्त्रेण निदध्यादिति केचित्। वस्तुतस्तूदुम्बरवृक्ष एव शाखायामुद्वासनस्य शास्त्रेण प्रतीतेर्वृक्षाग्र एवोद्वासनं युक्तम्। न च तत्र पुरुषाकृत्यादिरचनासंभवात् कथमुद्वासनमिति वाच्यम्। वृक्षाग्रे एव यथा पुरुषाकृतिः संपादयितुं शक्या तथा प्रयत्नं कृत्वोद्वासनसंभवात्। अथवा वचनबलात्पुरुषाकृत्यादि परित्यागेनापि मुख्यप्रतिपत्तिभूतोद्वासनस्य कर्तुं शक्यत्वात्। पुरुषाकृतेरुत्तरवेद्युद्वासनाभिप्रायेणापि वर्णयितुं शक्यत्वाद्वृक्षाग्र एवोद्वासनं युक्तम् ॥ १४ ॥

यत्र दर्भा उपदीकसंतताः स्युस्तदुद्वासयेद्वृष्टिकामस्योत्तरवेद्यां नित्यकल्पं ब्रुवते नैनमुद्वासितं वयांसि पर्यासीरन्नाऽग्निप्रणयनात् ॥ १५ ॥

उपदीकैः पशुविशेषैर्भक्षितशेषा दर्भाः शीर्णा न भवन्ति तत्रोद्वासयेद्वृष्टिकामस्य। उत्तरवेद्यामित्यादि। ननु पूर्वं काम्यत्वप्रतिपादनात्कथं नित्यत्वमिति चेन्न। उत्तरवेद्यां नित्यं कल्पमित्युपसंहारेण नित्यकाम्यत्वसंभवात्। तस्यां काम्यश्रुतेर्दोघिग्रहवदुपपत्तेः। नैनमित्यादि। यत्रोद्वासनं कृतं तत्परितः पक्षिणो नाऽऽसीरन्पर्यासनं परिहरेत्। तस्यावधिमाह—अग्नेः प्रणयनात्। अग्निप्रणयनपर्यन्तम्। अत्रैके परिषेचनं समामनन्तीत्यापस्तम्बः ॥ १५ ॥

---

प्र०टि०—अभिचारकामो यस्यां दिशि द्वेष्यः स्थितस्तस्यामौदुम्बरीं शाखां निधाय तस्यां सर्वं परिघर्म्य-इदमहमित्येवमादिना निदध्यात्। एवं कुर्वन्यथामन्त्रवर्णं—शुचैवास्य प्राणं दहति, इति। कथमिति चेत् 'अन्नं वा उदुम्बरः' (तै०आ०९–९) इति, प्राणश्चान्नदाना-(न्नादन)र्थान्तरं, घर्मः पुनः शुक् शोकहेतुः। अतः सिद्धो घर्मात्मकेन शोकेनौदुम्बरात्मकप्राणदाहः। तादृक् सद्यः ॥ १४ ॥

तत्रोपदीकाभिर्वम्रीभिर्भक्षितशेषा दर्भाः शीर्णाग्रा भवन्ति, तत्रेत्यर्थः। उत्तरवेद्यामुद्वासयेत्तेनस्कामस्येत्युक्त्वाऽन्ते तस्मादुत्तरवेद्यामेवोद्वासयेदित्यवधारणादित्यर्थः। एवं च तस्यां कामश्रुतिर्दधिघ(घ)र्मवद्भ्याल्पेयेत्युक्तं भवति। एवं प्रवर्ग्यपात्रसमुदायस्योद्वासितस्य वयांसि पक्षिणो नोपरि निषीदेयुः, अग्नेः प्रणयनात् परितः पक्षिणामासनं परिहरेदित्यर्थः ॥ १५ ॥

मुत्थापयेद्यदि भिद्येत विधुं दद्राणमिति संदध्या-
द्यदते चिदभिश्रिष इत्याश्लेपयेद्यदन्यन्माश्सा-
न्मापेभ्यश्च ॥ ५ ॥

शेषः। संदध्याद्भिन्नावयवं मेलयेत्। यदते चिदभिश्रिष इत्यनेनोपश्लेषसाधनैर्मांस-मापव्यतिरिक्तैर्द्रव्यार्थैरजलोमचूर्णादिभिः संश्लेषयेत्। तथा च बोधायनः—अश्मचूर्णानि च्छागपयसि परिकीर्य तैः प्रत्युसउल्क(क्ष्योल्मु)कैः संधियोग्यस्य पुनः क्रियां कृत्वा पाकार्थं निदधाति। अन्यथाऽन्यमप्रचरणीयं महावीरं प्रवृणक्ति योऽन्यः पूर्वनिहितस्तमित्यर्थः ॥ ५ ॥

यदि घर्ममतिपरीयुर्न वा प्रतिपरीयुः पुनरूर्जा
सह रय्येति द्वाभ्यां प्रतिपरीयुः ॥ ६ ॥

यदि च घर्ममतिपरीयुर्न वा प्रतिपरीयुः पुनरूर्जा सह रय्येति द्वाभ्यां प्रतिपरीयुः। तत्रोभयत्रापि सकृदेताभ्यां प्रतिपरीयुः। तथा बोधायनः—यदि प्रमत्ता अतिपर्यन्ति गार्हपत्ये स्रुवाहुती जुहुयादिति ॥ ६ ॥

मा नो घर्म व्यथितो विव्यथो न इति घर्मे
व्यथितेऽष्टावाहुतीर्जुहोति ॥ ७ ॥

घर्मे व्यथिते व्यथनयुक्ते क्वथनवशात्सशब्दबुद्बुदोत्प्लुतावित्यर्थः। तत्र निरुक्तमन्त्रै-रष्टावाहुतीः कर्तव्याः ॥ ७ ॥

अपि वा घर्ममेव व्यथितमेतासां चतसृभिरुप-
तिष्ठते ॥ ८ ॥

उपतिष्ठन्त एव न तु होमः ॥ ८ ॥

---

प्र०टि०—पयेत्। केचित्संसीदस्वेति स्थापनाद्या प्रचाराद्यदि पतेत्तत्रैतत्प्रायश्चित्तम्। सर्वत उपरिष्टाच्छिन्ने प्रायश्चित्तं प्रचरणोर्ध्वमेव, पूर्वं चेत्सर्वप्रायश्चित्तं कृत्वा पुनः संप्रक्रम्य यावदन्तमेवेति न्यायेन कुर्यादिति व्याचक्षते। करणादिति न्यायः पश्चात्पूर्वमित्यविशेषवचनात्। यदि सम्राडासन्द्याः खराच्छफाभ्यां वा महावीरः पतेद्व्याहृतिभिरभिमन्त्र्य द्वाभ्यामेनमुच्छ्रयति। विधुं दद्राणमिति पुनः संधाय भिन्नं यदते चिदभिश्रिष इति द्रव्यार्थमालिप्य पुनः प्रचरति ॥ ५ ॥

यदि घर्ममित्यत्र त्रिभ्योऽधिकं यदि परिक्रामन्ति न्यूनं वा त्रिभ्यः पुनरूर्जा सह रय्येत्येताभ्यामेनं प्रतिपरीयुरीत्यापस्तम्बः। यावत्कृत्वाऽतिपरीयुस्तथा यावन्न्यूनं तावत्परिक्रामन्ति ॥ ६ ॥

अष्टौ घर्मे व्यथिते प्रायश्चित्तानीत्यापस्तम्बः। व्यथनमधिकेन बुद्बुदक्षरणरूपेण विष्यन्दनमधिकेऽग्नौ। व्यथनं क्वथनवशात्सशब्दाद्बुद्बुदोत्पत्तिरष्टवाहुतयः ॥ ७ ॥

एकेषां मते घर्ममेवोद्घाटितमभिमन्त्रयेत। नात्र प्रायश्चित्तम् ॥ ८ ॥

यदि घर्मेण चरत्स्वादित्योऽस्तमियादुद्वयं तमस-
स्परीत्यपरस्यां द्वारि दर्भेण हिरण्यं प्रबध्योदु त्यं
चित्रमिति द्वाभ्यामुपस्थाय प्रचरेच्छ्वोभूते वयः
सुपर्णा इत्युद्यन्तमादित्यमुपतिष्ठते ॥ ९ ॥

घर्मेण चरत्सु सूर्येऽस्तं गत उद्वयं तमसस्परीत्यनेन पश्चिमस्यां द्वारि दर्भेण हिरण्यं बद्ध्वोदु त्यं चित्रमिति द्वाभ्यां हिरण्यमुपस्थाय प्रवर्ग्यशेषं कुर्यात् । श्वोभूते वयः सुपर्णा इति सर्वेऽपि आदित्यमुपतिष्ठन्ते ॥ ९ ॥

यदि घर्मधुग्दोहकाले नाऽऽगच्छेदन्यां
दुहीत ॥ १० ॥

दोहकाल प्रवर्ग्येण चरत्सु यो दोहकालः शास्त्रचोदितस्तस्मिन्काले नाऽऽगच्छेत् तदाऽन्यां दुग्ध्वा प्रवृञ्ज्यात् । तस्यास्तु घर्मदुहः सुत्यायां ब्राह्मणाय दानमापस्तम्बोक्तं द्रष्टव्यम् ॥ १० ॥

यदि न दुहीत दृतिꣳ स्तनं कृत्वा पिन्वयेत् ॥ ११ ॥

यदि घर्मधुङ्न दुहीत दृतिं चतुष्पदां कृत्वा पयसाऽभिपूर्य पादेष्वन्तिमं स्तनं कल्पयित्वा पिन्वयेत् । पयः स्रावयेद्दोहमन्त्रैरित्यर्थः ॥ ११ ॥

यदि दधि स्याद्गार्हस्पत्यꣳ शꣳसेत् ॥ १२ ॥

दुह्यमाना घर्मधुक् स्वयमेव यदि दधि दुहीत तदाऽभिष्टवस्य प्रागुक्तत( गुत्त )माया येन केनचिद्गार्हस्पत्येन सूक्तेन शंसेत् । होताऽभिष्टुयादित्यर्थः ॥ १२ ॥

यदि पय आश्विनं सोदर्कम् ॥ १३ ॥

पयस उदर्को दधि तत्सहितं चेत् पयो दुहीत तदाऽऽश्विनेनाभिष्टुयात् ॥ १३ ॥

---

प्र० टि—०आदित्योऽस्तमियाद्दा समावेरद्वयमुदु त्यं चित्रमिति द्वाभ्यामुपतिष्ठते । द्वाभ्यां गार्हपत्येऽध्वर्युरेव जुहोतीत्येके । प्रवृज्य च सर्वे श्वोभूते वयः सुपर्णा इत्यादित्यमुप॰ तिष्ठन्ते ॥ ९ ॥

गङ्ग एहीत्याह्वाने यदि नाऽऽगच्छत्यन्यां गां दोहयति ॥ १० ॥

यदि न दुहीत गौर्दृर्ति स्तनं कल्पयित्वा तेन पिन्वयेत्पयः स्रावयेद्दोहनमन्त्रैः॥ ११॥

यदि घर्मधुक् दधि स्यादन्त्यां बार्हस्पत्यं शंसेत् । प्रागुत्तमाया एवा पित्र इति हुत्वा घर्मप्रायश्चित्तं सव्याहृतिकम् । अन्यां दुग्ध्वा प्रवृञ्ज्यात् । सुत्यायामिति पूर्ववत् । येन केनचिद्बार्हस्पत्येन सूक्तेन शंसेदध्वर्युः ॥ १२ ॥

सोदर्कं पयो दुहीत । अन्यामाश्विनं शंसेत् । या वां करोति वा । सोदर्कं नवनीतम् ॥ १३ ॥

अथैनमुपतिष्ठन्ते रन्तिर्नामासि दिव्यो गन्धर्व इत्यचिक्रदद्वृषा हरिरिति यजमानः सुमित्रा न इति मार्जयित्वोद्वयं तमसस्परीत्यादित्यमुपस्थायाऽनवेक्षमाणाः प्रत्येत्योदु त्यं चित्रमिति द्वाभ्यां गार्हपत्य आहुती र्हुत्वेमम् पु त्यमस्मभ्यमित्याहवनीयमुपतिष्ठन्ते गार्हपत्यं वा ॥१६॥(ख०१२)॥

इति सत्याषाढहिरण्यकेशिप्रवर्ग्यसूत्रे चतुर्विंशप्रश्ने षष्ठः पटलः ॥

अथोद्वासनानन्तरमेनमुद्वासितं प्रवर्ग्यं सर्वे प्रवर्ग्यकर्तार उपतिष्ठन्ते । यजमानस्तु अचिक्रददित्यनेनोपतिष्ठते । ततः सर्वेऽपि सुमित्रा न इति चात्वाले मार्जयित्वोद्वयं तमस इत्यनेनाऽऽदित्यमुपस्थायानवेक्षमाणा अप्रतीक्ष्यमाणाः प्रत्येत्य देवयजनमुद्वयं चित्रमिति द्वाभ्यां मन्त्राभ्यां गार्हपत्ये द्वे आहुती हुत्वा इमम् पु त्यमस्मभ्यमिति आहवनीयं गार्हपत्यं वोपतिष्ठन्ते ॥ १६ ॥ (ख० १२)

इति श्रीवाञ्छेश्वरसुधीविरचिते सत्याषाढहिरण्यकेशिप्रवर्ग्यसूत्रव्याख्याने महालिङ्गसमाख्याने चतुर्विंशप्रश्ने षष्ठः पटलः ॥

अथ सप्तमः पटलः ।

यदि घर्मः स्कन्देदस्कान्द्यौः पृथिवीमित्याहुती जुहुयात् ॥ १ ॥

अथ घर्मप्रायश्चित्तान्युच्यन्ते । यद्यभिपूरणप्रभृत्याहोमाद्घर्मः स्कन्देत्, अस्कान्द्यौः पृथिवीमित्यनेनाऽऽहुती जुहुयात् ॥ १ ॥

यदि घर्मेण चरत्सु पुरस्ताद्विद्युदापतेद्या पुरस्ताद्वि-

पुरस्तात्पूर्वस्यां दिशि विद्युत्पतने या पुरस्तादिति मन्त्रेण होतव्यम् । एवमितरासु

प्र०टि०—एनं प्रवर्ग्यम् । सर्वेऽप्युपतिष्ठन्ते । एनमुपतिष्ठत इत्यनुवर्तते । सर्वेषु सूत्रेषु मार्जालीयदेशे चोच्छिष्टखरे मार्जनं स्यात् । उपस्थानं च सर्वे प्रवर्ग्यकर्तारः । यदि गार्हपत्ये होम आपस्तम्बोक्तः समान एवास्माकम् । अध्वर्युरेव जुहोत्येकवचनात् । गार्हपत्याहवनीययोरेको विकल्पो वेति दर्शनाच्च ॥ १६ ॥

इति सत्याषाढहिरण्यकेशिप्रवर्ग्यटिप्पण्यां महादेवशास्त्रिसंकलितायां षष्ठः पटलः ।

अथ घर्मप्रायश्चित्तमाह—यद्यभिपूरणप्रभृत्यग्निहोत्रहोमाद्धर्मः स्कन्देदेकामाहुतिम् ॥१॥ यदिशब्दः सर्वत्र प्रमादादौ बोध्यः । यथालिङ्गमिति वचनाद्यस्यां दिशि विद्योतते

विद्युदापतदित्याहुतिं जुहोत्येवमितरासु दिक्षु यथा
लिङ्गम् ॥ २ ॥

दिक्षु यथालिङ्गं यस्यां दिशि विद्योतेत तल्लिङ्गेन मन्त्रेण जुहोतीत्यर्थः । असकृद्विद्योतनेऽपि सकृदेवाऽऽहुतिः कार्या । यदि सर्वतः, सर्वाहुतिर्योग्या । मन्त्रलिङ्गभेदेन प्रतिनिमित्तं नैमित्तिकावृत्तेर्योग्यत्वात् । तथा चाऽऽपस्तम्बः—यदि सर्वतः सर्वासु जुहुयादिति ॥ २ ॥

प्राणाय स्वाहा पूष्णे स्वाहेत्यनुवाकाभ्यामनाज्ञात-
प्रायश्चित्ते घर्मे चतुर्दशाऽऽहुतीर्जुहोत्यष्टादशेत्येकेषाम् ॥ ३ ॥

घर्मसंबन्धिविध्यपराध एतान्यज्ञातप्रायश्चित्तानि सामान्येन भवन्ति ॥ ३ ॥

उदस्य शुष्मादिति घर्मेष्टकामुपदधाति यास्ते अग्न
आर्द्रायोनय इति कुलायिनीमग्निरसि वैश्वानरोऽ-
सीत्यैडकी चितिः ॥ ४ ॥

उदस्य शुष्मादित्यनेन घर्मेष्टकामुपदध्यात् । यास्ते अग्न इत्यनेन कुलायिनीमुपदध्यात् । अग्निरसीत्यनुवाकेनैडकी चितिरभिमन्त्रयितव्येत्यर्थः । उत्तरे त्रयोऽनुवाका अग्नौ विनियुक्ता नात्रान्वीयन्ते ॥ ४ ॥

यदि घर्मेण चरत्सु महावीरः पद्येत भूर्भुवः सुव-
रित्येनमभिमन्त्र्योर्ध्व ऊ षु ण ऊतय इति द्वाभ्या-

यदि सम्राडासन्द्याः खराच्छफाभ्या वा महावीरो भूमौ पतेत्तदा समस्तव्याहृतिभिरेनमभिमन्त्र्योर्ध्व ऊ षु ण ऊतय इत्यनेनैनमुत्थापयेत् । यदि भिद्येत महावीर इति

प्र०टि०—तत्तल्लिङ्गेन मन्त्रेण जुहुयात् । असकृद्विद्योतनेऽपि सकृदेवाऽऽहुतिरेकस्या चर्यायाम् । अयं भावः—घर्मेण चरत्सु विद्युद्दृश्यते, या पुरस्ताद्विद्युदापतदित्याहवनीये जुहोति (इति) । यद्याज्यसंस्कारात्पूर्वमुत्सृज्यते चेद्विद्युत्संस्कृत्योत्पवनान्ते जुहुयात् । प्रायश्चित्तमस्यामेवेति भाष्यकृत् । दोषदर्शनादनन्तरं लौकिकेनेति न्यायः । अनन्तरवचनाद्यदि दक्षिणतो दृश्यते विद्युत्तथा दक्षिणत इति जुहुयात् । एवं सर्वत्र विद्युदित्यादेरनुषङ्गः । सर्वतः सर्वासु दिक्षु सह दृश्यते विद्युत्सर्वा जुहुयात् । यथापूर्वमिति । असकृद्विद्युत्पतनेऽपि सकृदेव जुहुयादा प्रवर्ग्यसमाप्तेः ॥ २ ॥

आ परिसमाप्तेः प्राणाय स्वाहा पूष्णे स्वाहेत्यनुवाकद्वयं समुच्चयेन हूयते सर्वप्रायश्चित्तमन्ते ॥ ३ ॥

साग्निचित्क्रताविति शेषः । त्रयोऽनुवाका अग्नौ विनियुक्ता नात्रान्वीयन्ते ॥ ४ ॥

यदि स्थापितो महावीरः पतेद्व्याहृतिभिरभिमन्त्र्योर्ध्व ऊ षु ण ऊतय इत्याभ्यामुत्था.

यद्येतां वयोऽभिनिषीदेदैन्द्रियर्चा जुहुयात् ॥ १४ ॥

एतां घर्मदुहं वयः पक्षि अभिनिषीदेत्तिष्ठेत् । यद्वा, एतामभि घर्मदुघोपरीत्यर्थः । अभिः कर्मप्रवचनीयः । तद्योगाद्द्वितीया । एतेन सीदतेरकर्मकत्वेऽपि एतामिति द्वितीयाया नानुपपत्तिः । ऐन्द्रयर्चा जुहुयात् ॥ १४ ॥

यदि संवत्सरं वायव्यर्चा जुहुयात् ॥ १५ ॥

यदि संवत्सरं न विन्देत्तदा वायव्यया आ वायो भूष शुचिपा इत्यनया जुहुयात् । सर्वत्रान्यां दुग्ध्वेति संबध्यते ॥ १५ ॥

यद्युपविशेद्वारुण्यर्चा ॥ १६ ॥

यदि घर्मधुगुपविशेद्वारुण्यर्चा जुहुयादित्यनुकर्षः ॥ १६ ॥

यदि नश्येद्धातुर्ऋग्भ्याम् ॥ १७ ॥

यदि घर्मधुङ्नश्येद्धातुर्ऋग्भ्यां जुहुयात् । अदर्शनं नाशः । धाता ददातु नो रयिमित्येताभ्यां जुहुयात् ॥ १७ ॥

आग्निवारुण्यर्चेत्येकेषाम् ॥ १८ ॥

एकेषां मत आग्निवारुण्यर्चा जुहुयात् । त्वं नो अग्न इत्यादिना ॥ १८ ॥

यद्युद्वा पतेत्सं वा विजेत शार्दूलो वा हन्यादर्क-

उद्वा पतेदुत्प्लुत्य गच्छेत्सं वा विजेत भयवशाद्दुर्दोहा स्यात् । शार्दूलो व्याघ्रः । हिंस्राणां प्रदर्शनार्थमेतत् । तदानीमर्कक्षीरेऽजाक्षीरमासिच्य प्रवृञ्ज्यात् । अजाक्षीरस्याप्यलाभे बोधायनः—यद्यजां न विन्देदर्कक्षीरैः प्रचरेत् । यद्यर्कक्षीरं न विन्देद्यवपि-

---

प्र० टि०– अभिनिषीदेत्पक्षवाताादिना । ऐन्द्रयर्चा हुत्वा तामेव दुह्यात् ॥ १४ ॥ यदि संवत्सरं न विन्देत्तदा वायव्यर्चा, आ वायो भूष, इत्यनया जुहुयात् ॥१५॥ जुहुयादित्यनुकर्षः । शुद्धमपि यज्ञानर्हद्रव्यमात्रमभिनिषण्णायामिमं मे वरुण इत्यादिकया ॥ १६ ॥

अदर्शनं नाशः । धाता ददातु नो रयिमित्यादी धातुर्ऋचौ ॥ १७ ॥

त्वं नो अग्न इत्याग्निवारुणसंज्ञिकयर्चेत्यर्थः ॥ १८ ॥

आ वायो भूष शुचिपा इत्यादि नियुत्वत ऋक् । सर्वत्र चान्यां दुग्ध्वेत्यादि समानं द्रष्टव्यम् । अन्यत्र दतेः । उत्पतेदुत्प्लुत्य गच्छेत् । संविजेत तथोद्विग्ना दुर्दोहा स्यात् । शार्दूलः प्रदर्शनार्थो हिंस्राणाम् । अर्कक्षीरं दोहमन्त्रैर्दोग्ध्र आसिच्य प्रचरेत् । अत्राऽऽह बौधायनः—यदि घर्मदुहं न विन्देतान्यां दोहयेत् । यद्यन्यां न विन्देताजां दोहयेत् ।

क्षीरस्याजाक्षीर आश्चोत्य प्रचरेत् ॥ १९ ॥

ष्टानि व्रीहिपिष्टानि श्यामाकपिष्टानि वाऽद्भिः संसृज्य तैः प्रचरेदप्याद्भिः प्रचरेन्न त्वेव न प्रचरेदिति ॥ १९ ॥

अथातः सुत्यायां प्रवृञ्जनस्यैव मीमांसा ॥ २० ॥

पूर्वाचार्यैः कृता वेदितव्येत्यर्थः । सा च देशतः कालतः संख्यातः प्रकारतश्च भवति ॥ २० ॥

तत्र कालतस्तावन्निर्णयमाह—

यदा पुरस्तादारुण्यꣳ स्यादथ प्रवृज्य उपकाशमु-
पव्युषं पुरोदयमुदिते संगवे स्तुते वा माध्यंदिने
पवमान आग्नीध्रागारे प्रवृज्यः सकृदेव प्रवृज्य
एकꣳ हि शिर इति विज्ञायते तदेतदौपसदैः प्रवृ-

'यदा पुरस्तात्पूर्वस्यां दिश्यारुण्यं स्यात्पिङ्गलवर्णः स्यात्तदा प्रवृज्यः । कल्पान्तरमाह—उपकाशमिति । उप समीपे काशते प्रकाशत इति उपकाशम् । समन्ततः प्रकाशो जात इत्यर्थः । स एकः कालः । उपव्युषम् । उषः समीपे वेत्यर्थः । कालान्तरमाह—पुरोदयम् । उदयात्पूर्वमुदिते सूर्योदयादनन्तरं संगवे नवधा कृतस्याह्नो द्वितीये भागे । स्तुते वा माध्यंदिने पवमाने माध्यंदिनपवमानोत्तरम् । सर्वत्र प्रवृज्य इत्यनुवर्तते । प्रवर्ग्य इति शेषः । अथ व्यवस्थामाह—आग्नीध्रागारे प्रवृज्यः । अत्रापि प्रवर्ग्य इति शेषो बोध्यः । एवमग्रेऽपि । संख्यामाह—सकृदेव प्रवृज्यः । सुत्यायां प्रवृञ्जनपक्षे सकृदेव भवति । तस्य स्तुतिं श्रुतिमुखेनाऽऽह—एकꣳ हि शिर

प्र०टि०—यद्यजां न विन्देतार्कक्षीरैः प्रचरेत् । यद्यर्कं न विन्देत यवपिष्टानि व्रीहिपिष्टानि श्यामकपिष्टानि वाऽद्भिः संसृज्य तैः प्रचरेदिति ॥ १९ ॥

तत्रैवं कृता वेदितव्येत्यर्थः ॥ २० ॥

सा च कालतो देशतः संख्यातः प्रकारतश्चेति चतुष्टयी भविष्यति । तत्र कालस्य तावन्निर्णयमाह—पुरस्तादरुणा स्यात् प्राची दिगरुणकिरणाविला स्यात् । उपकाशं समन्ततः प्रकाशे जाते । उपव्युषमुषःसमीपे । समयाध्युषित ईषदाविर्मण्डले । सूर्ये उदितानुदितेऽर्धोदिते । उदिते सर्वोदिते । प्रातः नवधाकृतस्याह्नः प्रथमे भागे संगवे द्वितीये भागे प्रवृज्य इति सर्वत्रान्वयः । प्रवर्ग्य इति शेषः । अथ देशनिर्णयमाह—तत्राऽऽग्नीध्रीय गार्हपत्यस्थानं भवति । औत्तरवेदिके होमः । अथ संख्यानिर्णयमाह—स च पौर्वाह्णिको मुख्यत्वात् । अथ प्रकारनिर्णयमाह— तान्येतानीति जात्याख्यायां बहुवचनं व्यक्तिबहुत्वापेक्षया वा । तदेतत्सौत्यं प्रवृञ्जनमौपसदैर्विकल्प्यते न तु समुच्ची-

१ क. ख. ग 'स्तादारुण्यं स्या' ।

स्नैर्विकल्पेरन्भूर्भुवः सुवरित्यनुवाकेन ॥

( खं०१२ ) दधिघर्मं भक्षयन्ति ॥ २१ ॥

इति विज्ञायते श्रूयते । तस्मात्प्रवर्ग्यस्यापि शिरःस्थानीयस्यैकत्वमेव युक्तम् । तदेतत् । कालभेदेन बहूनि तान्येतान्युपसत्कालीयैः प्रवृञ्जनैर्विकल्पेरन् विकल्पं भजन्ते । भूर्भुवः सुवरित्यनुवाकेन दधिघर्मं भक्षयन्ति ॥ २१ ॥

यास्ते अग्ने घोरास्तनुव इति घोरास्तन्वो यं द्विष्यात्तमेताभिरन्वीक्षेत धुनिश्च ध्वान्तश्चेत्यरण्येऽनुवाक्यो गणोऽहोरात्रे त्वोदीरयतामित्यनुद्रुत्य खट्फट्जहीति वाचः क्रूराणि ॥ २२ ॥

भूर्भुवः सुवरित्यनुवाकेन कार्मिणो दधिघर्मं भक्षयन्ति । यास्ते अग्ने घोरास्तनुव इति घोरास्तनूर्ब्रूते । यं द्विष्यात् तमेताभिर्घोराभिस्तनूभिस्तत्प्रतिपादकैर्मन्त्रैरित्यर्थः । ईक्षेत पश्येत् । धुनिश्च ध्वान्तश्चेत्यरण्येऽनुवाक्या बोध्याः । अहोरात्रे त्वोदीरयतामित्युक्त्वा खट्फट्जहीति क्रूरा वाचः प्रयोक्तव्याः ॥ २२ ॥

यदि घर्मेण चरन्नेकसृको वाश्येत विगा इन्द्र विचरन्स्पाशयस्वेत्येनमभिमन्त्र्याथास्मा उभयत आदीप्तमुल्मुकं तां दिशं प्रति निरस्यत्यग्ने अग्निना संवदस्वेत्यप उपस्पृश्याथैनमुपविष्टते सक्रुत्ते अग्ने नम इत्यनुवाकशेषेण ॥ २३ ॥

एकः सृक एकच(च)रः सृगालो वाश्येत शब्दं कुर्यात् । एनं सृगालं विगा इन्द्रेत्यभिमन्त्र्यास्मै सृगालायोभयत आदीप्तमाद्यन्तयोर्ज्वलन्तमुल्मुकमुल्कां तां दिशं यस्यां दिशि सृगालस्तां दिशं प्रति निरस्येत् । अग्ने अग्निना संवदस्वेति अप उपस्पृश्यैनमग्निं सक्रुत्ते नम इत्यनुवाकशेषेणोपतिष्ठेत् ॥ २३ ॥

---

प्र० टि०—यते । अतस्तत्र प्रवृञ्जनमन्त्र वा । न तूभयत्रेत्यर्थः । एवं प्रवृज्य तदानीमेवोद्वास्य कृतान्तात्प्रक्रमेत् । भक्षयामीत्यन्तः । भक्षयन्तीति वचनात्सर्वे प्रवार्यकर्तारो यजमानश्च ॥ २१ ॥

यं च वयं द्विष्म इत्यन्तः । विक्षिप इत्यन्तः । अनुवाकद्वयोक्तं गणद्वयं कपालोपधाने विकल्पितम् । उत्तरगणे च नामषट्कं पुनर्विकल्पितम् । हन्त्वसावित्यन्तः । इत्येतानि षड्विधानि वाचः क्रूराणि ॥ २२ ॥

एकाकित्वेनारण्ये संचरन्वत्सान्मारयति योऽरण्यश्वा सोऽयमेकवृकः । अपामुपस्पर्शनं श्रौतम् । मा मा हिꣳसीरित्यन्तः । एनमेकवृकं न तूल्मुकं पुंल्लिङ्गात् । न चाग्निलिङ्गविरोधः । अग्ने अग्निना संवदस्वेति लिङ्गात् ॥ २३ ॥

एवं गृध्रः सालावृकी मयेडक उलूको दीर्घमुखी भूतोपसृष्टः शकुनिरसृङ्मुखो यदेतद्यद्दीपित इत्यादुलूक आपप्तद्दीर्घमुखि यदेतद्भूतानि प्रसार्य सक्थ्याविन्येतैर्यथारूपं व्याख्यातमुल्मुकानिरसनमुपस्थानं च ॥ २४ ॥

गृध्रः क्रव्यात्पक्षिविशेषः। सालावृकी श्वा। एडको मेषः। भयहेतुरेडको मयेडको यो हृष्टरोमा प्रहरणशीलः। उलूको दिवाभीतः। दीर्घमुखी टिट्टिमः। भूतोपसृष्टः पिशाचाद्याविष्टः पुरुषः। शकुनिः पक्षमात्रमित्येके। तन्न। तथा सति गृध्रादीनां पृथग्ग्रहणानर्थक्यप्रसङ्गात्। किंतु कृष्णशकुनिर्ग्राह्यः। शास्त्रान्तरोक्तेः। असृङ्मुखो मुखे स्रवद्रक्तो जन्तुः। वाश्येतेत्यनुषङ्गः। यदेतद्यद्दीपित इति यथालिङ्गमभिन्व्योल्मुकप्रत्यसनादिकमुपस्थानं पूर्ववत्कुर्यादित्येवंशब्दार्थः ॥ २४ ॥

अपि वा सार्वत्रिकाण्येवैतानि स्युः ॥ २५ ॥

एतानि गृध्रादिनिमित्तानि प्रायश्चित्तानि सर्वत्रैव स्युः। सर्वेषु निमित्तेषु सर्वाणि प्रायश्चित्तानि स्युः। न तु तत्तन्निमित्तेषु तत्तन्नैमित्तिकानीति व्यवस्थेत्यर्थः। यद्वा सार्वत्रिकाणि प्रयोगे प्रयोगाद्बहिरपि पुरुषार्थतया लोकेऽप्यनुष्ठेयानि ॥ २५ ॥

यदि घर्मधुक्क्रिमिणा स्यादत्रिणा त्वा क्रिमे हन्मीत्येतेनानुवाकेनास्याः क्रिमीन्हन्यादपि वा सार्वत्रिकमेवैतत्स्यात् ॥ २६ ॥

क्रिमिणा क्रिमिभिरुपद्रुता यदि घर्मधुग्भवति तदाऽत्रिणा त्वा क्रिमे हन्मीत्यनेनास्याः क्रिमीन्हन्यात्। इदमपि प्रायश्चित्तं सार्वत्रिकं सर्वपशूनां क्रिमिदर्शने कार्यम्। अर्थान्तरं पूर्ववद्बोध्यमिति भावः। न तु अकर्मसंयोगेन क्रियते प्रायश्चित्तमिति वचनात्। क्रतोर्बहिरनुष्ठानं चिन्त्यम् ॥ २६ ॥

---

प्र० टि०—गृध्रः क्रव्यात्पक्षिविशेषः। सालावृकः क्रोष्टा। एडको मेषः। भयहेतुरेडको मयेडको यो हृष्टरोमा प्रहारशीलो भवति। दीर्घमुखी टिट्टिमः। उलूको दिवाभीतः। भूतोपसृष्टः पिशाचाद्याविष्टः पुरुषः। शकुनिः कृष्णशकुनिः। पक्षिमात्रमित्येके। तेषां गृध्रादिग्रहणमनर्थकं स्यात्। वदेच्छब्दं कुर्यात् ॥ २४ ॥

गतः ॥ २५ ॥

क्रिमिणा कृमिभिरान्तरैर्बाह्यैर्वोपपन्ना यैस्तुन्ना सद्यो बभूवेति। क्रिमीन्हन्यादिति। बाह्यास्तावदपनुत्ता आन्तराश्चानुवाकेन तल्लिङ्गेनानुमन्त्रिता एव हता भविष्यन्तीति भावः। प्रायश्चित्तं क्रियेतेति शेषः। न केवलं घर्मदुघः। सर्वस्यैव यजुर्गुग्निहोत्र्यादेर्गोमात्रस्य क्रियेतेत्यर्थः। मनादेरपि प्राणिमात्रस्येत्यन्ये। क्षुद्गरण्यादेरपि द्रव्यमात्रस्येति परे। न त्वकर्मसंयोगिनः। क्रियते प्रायश्चित्तमिति वचनात् ॥ २६ ॥

यद्यभिचरेदाहरावद्येत्येतेनानुवाकेन लोहितं जुहुयात् ॥ २७ ॥

शत्रुमुद्दिश्य लोहितमवदाय जुहुयात् । शत्रोरेव लोहितमवदाय जुहुयादित्यापस्तम्बः । आज्याहुतिमेव बोधायन आह ॥ २७ ॥

यद्येनमभिजिहीर्षेद्द्वादशरात्रमुपोषितो गत्वैनमभिव्याहरेद्ब्रह्मणा त्वा शपामीत्येतेनानुवाकेनोत्तुद शिमिजावरीत्येतेनानुवाकेन यं द्विष्यात्तस्य गोष्ठं गत्वा स्वजा नामौषधिस्तां निदध्यादपि वा गोष्ठस्य दक्षिणां द्वारस्थूणां विचालयेदयज्ञसंयुक्तः कल्पः ॥ २८ ॥

एनं शत्रुमभिजिहीर्षेदभिहर्तुमिच्छेत् । अभिव्याहरेच्छपेत । ब्रह्मणा त्वा शपामीत्यनुवाकेन । ओषधिं निखनेत् । उत्तुद शिमिजावरीत्यनुवाकः । स्वजा स्वयमुत्पन्ना । अथवैतेनैव मन्त्रेण दक्षिणां द्वारस्थूणां विचालयेत् । अयज्ञसंयुक्तः क्रतोर्बहिर्ष्यमभिचारप्रयोगो भवतीत्यर्थः ॥ २८ ॥

यद्युद्गाता पुरुषः साम न गायेदध्वर्युरेव गायेद्भूर्भुवः सुवरित्यनुवाकेन ॥ २९ ॥

अध्वर्युरेव पुरुष औद्गात्रेण साम्नोद्गायेद्भूर्भुवः सुवरित्यनुवाकं वदेत् ॥ २९ ॥

अथ ब्रह्मत्वं गमनसंयुक्तेषु दक्षिणा गच्छति स्थानसंयुक्तेष्वास्ते ॥ ३० ॥ ( ख०१४ ) ॥

इति सत्याषाढहिरण्यकेशिप्रवर्ग्यसूत्रे चतुर्विंशप्रश्ने सप्तमः पटलः ॥

स्पष्टोऽर्थः ॥ ३० ॥ ( ख० १४ ) ॥

इति श्रीमत्कावेरीतीरविराजमानकुम्भघोणपुरनिवासिहोशनिकर्णाटकजातीयवाञ्छेश्वरसुधीविरचिते सत्याषाढहिरण्यकेशिप्रवर्ग्यसूत्रव्याख्याने महालिङ्गसमाख्याने चतुर्विंशप्रश्ने सप्तमः पटलः ॥

---

प्र० टि०-यमभिचरेत्तमुद्दिश्य रुधिरमवदानमत्रदेयद्रव्यं कृत्वा तेन जुहुयात् । अथवा तस्य लोहितमुपायेनाऽऽहृतमवदानं कृत्वेत्यर्थः ॥२७ ॥

अभिव्याहारः शापः । गावो यत्र तिष्ठन्ति तद्गोष्ठम् । स्वजां स्वयं रूढाम् । स्वज इति लिङ्गव्यत्ययः । अथवा कृषिमन्तरेण स्वयमेवोत्पन्ना शिमिजावरी । द्वारस्थूणा द्वार्बाहुः ॥ २८ ॥

अत्रैवौद्गात्रेण पुरुषसाम्नाऽऽध्वर्यवमेतत्साम विकल्पत इत्यर्थः ॥ २९ ॥

इति सत्याषाढहिरण्यकेशिप्रवर्ग्यसूत्रटिप्पण्यां महादेवशास्त्रिसंकलितायां चतुर्विंशप्रश्ने सप्तमः पटलः ॥



अथाष्टमः पटलः ।

अवान्तरदीक्षां व्याख्यास्यामः ॥ १ ॥

आरुणकेतुककाण्डादाम्नातः प्रवर्ग्यकल्पो व्याख्यातः । इदानीं तस्यैव काण्डस्योपाकरणं मन्त्राम्नानक्रमप्राप्तं व्याख्यायते । तयोपाकृतसौम्यकाण्डस्यैवावान्तरकाण्डोपाकरणत्वादवान्तरदीक्षेत्याख्यायते । अवान्तरदीक्षासादृश्याद्वा तद्व्यपदेशः । सादृश्यं च व्रतमध्ये तीक्ष्णव्रतान्तरप्रवेश उष्णोदकादिसंबन्धश्च ॥ १ ॥

उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रेऽपराह्णे केशश्मश्रूणि वापयित्वा प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य चतस्र औदुम्बरीः समिध आर्द्रा अप्रच्छिन्नाग्राः प्रादेशमात्रीर्घृतान्वक्ता अभ्याधापयति पृथिवी समिदित्येतैः प्रतिमन्त्रम् ॥ २ ॥

उदगयने यत्पूर्वं शुक्लपक्षे यत्पुण्यं नक्षत्रं वा तस्यापराह्णे क्रियते । खिले जनैरप्रहतेऽरण्यदेशेऽच्छदिर्दर्शे यत्र ग्रामस्य न दृश्यते छदिः । अग्निमुपसमाधाय यत्र क्वाग्निमित्यादिविधिना लौकिकाग्निं निधाय पूर्ववदुपाकृत्य यथोपाकरणे समापने चेत्यत्रोक्तम् । तथा सोमाय काण्डर्षये संहितीभ्यो देवताभ्यः सदसस्पतये च पाकयज्ञविधानेन हुत्वेत्यर्थः ॥ २ ॥

अग्ने व्रतपते व्रतं चरिष्यामीत्येतैर्यथारूपं देवता उपतिष्ठते ॥ ३ ॥

चतुर्भिर्यजुर्भिर्यथालिङ्गं देवता उपतिष्ठते ॥ ३ ॥

अथैनꣳ सर्वेषामनुवाकानां प्रभृतीरभिव्याहारयति प्रथमोत्तमयोर्वा ॥ ४ ॥

प्रभृतीरनुवाकानामाद्यानि यजूꣳषि । अभिव्याहारयति वाचयत्याचार्यः । प्रथमोत्तमयोर्युञ्जते सवितेत्यनयोः ॥ ४ ॥

उत्तमेनानुवाकेन शान्तिं कृत्वा ततः संमील्य प्राचं यच्छति ॥ ५ ॥

उत्तमेन मन्त्रप्रश्नस्य संमीलयति नेत्रे ॥ ५ ॥

अथास्याहतेन वाससा प्रदक्षिणꣳ संमुखꣳ शिरो वेष्टयित्वाऽस्तमिते ग्रामं प्रपादयति ॥ ६ ॥

संमुखं सहमुखम् ॥ ६ ॥

वाग्यत एताᳲ रात्रिं तिष्ठत्यास्ते वा ॥ ७ ॥

न तु संविशेत् । तिष्ठेदेतां रात्रिमुपविशेत्संविशेद्वेति तु बौधायनः ॥ ७ ॥

श्वोभूते प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य वयः सुपर्णा इति मुखं विवेष्ट्य य उदगात्तच्चक्षुरित्यादित्यमुपतिष्ठतेऽथैनᳲ षट्तयमभिविदर्शयति । सप्ततयमित्येके । अग्निमादित्यमुदकुम्भमश्मानᳲ हिरण्यं वत्सं महानग्नाᳲ सप्तमीम् ॥ ८ ॥

संपरिस्तीर्यानन्तरं वासोऽपहाय सप्ततयमेवाग्रे दर्शयति । यदा षट्तयं तदा हिरण्यं लुप्यते । महती नग्ना महानग्ना या स्वरसत एव विवसना चरति, बाला कन्येति यावत् । नैघण्टुकाश्चाऽऽहुः-अप्राप्तषोडशा नारी नग्नेति ॥ ८ ॥

त्रीण्यादितोऽभिविदर्श्योत्तराण्यभिविदर्शयति ॥ ९ ॥

आदितस्तावत्त्रीणि द्रव्याण्यवश्यं दर्शयितव्यानि । यथालाभं त्वितराणि ॥ ९ ॥

( अथैतद्वासो गुरवे दत्त्वा वयः सुपर्णा इत्यादित्यमुपतिष्ठते ) ॥ १० ॥

दक्षिणार्थं वासोदानमिति गम्यते ॥ १० ॥

अथास्य ब्रह्मचर्यमधि ॥ ११ ॥

अधिब्रह्मचर्यम् । ब्रह्मचर्ये योऽस्य व्रतविशेषः स वक्ष्यत इत्यर्थः । अथवा-अधिब्रह्मचर्यं प्राकृताद्ब्रह्मचर्यादधिकं यद्व्रतमित्यर्थः ॥ ११ ॥

नित्ये ॥ १२ ॥

तच्च नित्ये ब्रह्मार्थे प्रथमाध्ययने न तु जपार्थे ॥ १२ ॥

न नक्तं भुञ्जीत ॥ १३ ॥

नियमात् ॥ १३ ॥

यदि भुञ्जीतव ज्वालितम् ॥ १४ ॥

अशक्तावपज्वालितं ज्वलनोल्मुकेनाभिद्योदितं भुञ्जीत ॥ १४ ॥

न मृन्मयं प्रति धयीत ॥ १५ ॥

मृन्मयं प्रति मृन्मयेन न धयीत न पिबेदप ॥ १५ ॥

न स्त्रिया न शूद्रेण संभाषेत ॥ १६ ॥

प्रतत्वात् ॥ १६ ॥

न च्छत्रं नोपानहौ धारयेत् ॥ १७ ॥

न च्छत्रं धारयेत् । नास्योपानहौ भवतः ॥ १७ ॥

न चक्रीवदारोहेत् ॥ १८ ॥

चक्रीवद्यानं शकटादि ॥ १८ ॥

न गतासुमीक्षेत । न स्नायात् ॥ १९ ॥

मृतौ ॥ १९ ॥

न समाजमीक्षेत ॥ २० ॥

जनसमूहवाचकः समाजशब्दः ॥ २० ॥

नापपात्रम् ॥ २१ ॥

लोहसीसादिपात्रे भोजननिषेधो गम्यते । अथवाऽपपात्रं पतितादिग्रहणम् ॥ २१ ॥

न हर्म्याणि ॥ २२ ॥

न हर्म्याण्यारोहयेत् ॥ २२ ॥

न शवान्नं भुञ्जीत ॥ २३ ॥

सूतकान्नम् । धर्मे ब्रह्मचारिमात्रस्य निषेधाच्च ॥ २३ ॥

नाञ्जीत नाभ्यञ्जीत ॥ २४ ॥ ( ख० १५ ) ॥

व्रतकाल इत्यर्थः ॥ २४ ॥ ( ख० १९ ) ॥

अष्टमीं पर्वणि चोपवसेद्वाग्यतः ॥ २५ ॥

पक्षद्वये ॥ २५ ॥

नैव संविशेत् ॥ २६ ॥

न तासु रात्रिषु संविशेत् । स्थानासनाभ्यामेव तु विहरेत् ॥ २६ ॥

संवत्सरमेतद्व्रतं चरेत् ॥ २७ ॥

संवत्सरादर्वागध्ययनसमाप्तावपि संवत्सरं चरेत् ॥ २७ ॥

एतस्मिन्नेव संवत्सरेऽधीयीत ॥ २८ ॥

नाध्यापयेच्च बहिः संवत्सरादध्ययनम् ॥ २८ ॥

पुनर्यावदध्ययनमेतद्व्रतं चरेत् ॥ २९ ॥

यद्येतस्मिन्संवत्सरे नाधीयीतेत्यापस्तम्बः । यद्यसमापितं ततो यावदध्ययनं व्रतमनुवर्तयेत् ॥ २९ ॥

संवत्सरे पर्यवेते प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य ( पूर्ववद्विसृज्य प्रदन्तीरुपस्पृश्य प्रथमेना-

नुवाकेन शान्तिं कृत्वा) द्यौः समिदित्यावृत्तैर्मन्त्रैः समिधोऽभ्याधायाऽऽदित्य व्रतपत इत्यावृत्तै-र्देवता उपतिष्ठते ॥ ३० ॥ ( उत्तमेनानुवाकेन शान्तिं कृत्वा ) गुरवे वरं दत्त्वा केशश्मश्रूणि वापयते ॥ ३१ ॥

पूर्ववद्विसृज्य यथोपाकरणे समापने चेत्यादिना समापनेऽपि समानो विधिरुक्तः । तथाऽऽवृत्तैरन्तिमादारभ्य प्रतिलोमक्रमैः ॥ ३० ॥ ३१ ॥

अथास्य स्वाध्यायमधि नित्ये ॥ ३२ ॥

स्वाध्यायोऽध्ययनम् । पूर्ववद्योजना ॥ ३२ ॥

नानुत्सृष्टाध्यायोऽधीयीत ॥ ३३ ॥

अनुत्सृष्टेति सवर्णदीर्घस्थाने परसवर्णश्छान्दसः । अध्यायोत्सर्जनविधिनाऽनुत्सृष्टा-ध्यायः पश्चान्नाधीयीतेत्यर्थः ॥ ३३ ॥

न नक्तम् ॥ ३४ ॥

अधीयीतेत्यन्वयः ॥ ३४ ॥

नाभिदोपं( म )ब्रह्मचर्यमापद्य न दतः प्रक्षाल्य न माꣳसं भक्षयित्वा न केशान्प्रविध्य न केश-श्मश्रुलोमनखानि वापयित्वा न स्रग्वी ॥ ३५ ॥

अभिदोपं रात्रौ । ऋतुगमनादिनाऽब्रह्मचर्यमापद्योत्तरेद्युर्नाधीयीत । एवं मांसं खादि-त्वोत्तरेद्युर्नाधीयीत । ननु कथमेता ब्रह्मचारिणि ऋतुगमनादयः क्रियाः संभवन्तीति शङ्कनीयम् । सत्यं, न तं प्रत्येते निषेधाः क्रियन्ते, किंतु यथा विद्यया न विरोचेत । मनसा ब्रह्मचारिकल्पेनाधीयीतेत्यादिभिः शास्त्रैर्गृहस्थस्यैव पुनरध्यायनं प्रतीयते । दोषः ॥ ३६ ॥

नाक्तो नाभ्यक्तो नाऽऽर्द्रोऽनार्द्रे नानपवृष्टे नाभ्रे न च्छायायां न पर्यावृत्त आदित्ये न हरितयवा-न्प्रेक्षमाणो न ग्राम्यस्य पशोरन्ते नाऽऽरण्यस्य नापामन्ते ॥ ३६ ॥

अभ्यक्तोऽञ्जनालंकृतः । तदपि पूर्ववद्व्याख्येयम् । आर्द्रः स्नानार्द्रः । आर्द्रे देशे । नानपवृष्टे हिमवृष्टितोऽवभ्रष्टतृणादि अपवृष्टम् । पर्यावृत्त आदित्येऽपराह्णे । हरितयवाः सस्यविशेषाः । सर्वत्राधीयीतेत्यन्वयः ॥ ३६ ॥

नामृतमुत्पतितं न लोहितं दृष्ट्वा । न हर्म्याणि न शरीराणि न शवं नापपात्रम् ॥ ३७ ॥

सर्वत्र दृष्ट्वेत्यनुवर्तते । पूर्ववदन्वयः । अमृतं मांसं क्रव्यादमुखादेरुद्धृत्य पतितं दृष्ट्वा नाधीयीत । लोहितं रुधिरम् । हर्म्याणि गृहाणि । शरीराणि शिरःपाण्यादीनि प्राण्यङ्गानीति यावत् । पतितानि तेषामस्थीनि वा । शवं नेक्षेतेत्युक्तं भगवताऽऽपस्तम्बेन प्रमादाद्दृष्ट्वा नाधीयीत । अपपात्रं पतितादि ॥ ३७ ॥

एवमध्ययनार्था नियमा उक्ता इदानीमध्ययनस्यैव प्रकार उच्यते—

(अध्येष्यमाणः)प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य मदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वाऽपरेणाग्निं दर्भेष्वासीनो दर्भान्धारयमाणः पराचीनमधीयीत ॥ ३८ ॥

अहरहरध्येष्यमाणो ग्रामान्निष्क्रम्य प्रथमेनानुवाकेन शान्तिं कृत्वा पराचीनमधीयीत। युञ्जते मन इत्यादि सविता भूत्वेत्यन्तानुवाकान्सकृत्सकृदेवाधीयीत । न त्वावर्तयेदित्यर्थः ॥ ३८ ॥

वरं वा दत्त्वौपासने ॥ ३९ ॥

अथवा गुरवे वरं दत्त्वा औपासनेऽग्निसमीप आमीध्रण्येन समापयेत् ॥ ३९ ॥

अध्येष्यमाणो नान्या वाचो वदेत् ॥ ४० ॥

*अध्येष्यमाणो ग्रामान्निष्क्रान्तः सन्नध्ययनभूतवेदाक्षरेभ्योऽन्या वाचो न वदेत् ॥४०॥*

अध्येष्यमाणो मदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वाऽधीयीत। अधीत्य चोत्तमेनैवं कर्मसु यत्र क्व च शान्तिकृतं पश्येत्पुनरेव शान्तिं कृत्वाऽधीयीत ॥ ४१ ॥

शान्तिं कृत्वाऽधीयमानोऽपि यत्राशान्तिकृतं पश्येच्छान्त्यभावे यदशुभं कृतं भवति तत्पश्येत्तदा पुनरेव शान्तिमावर्तयेत् । अहरहरध्ययनान्ते च शं नो वात इत्यादिना शान्तिं कुर्वीतेत्यर्थः ॥ ४१ ॥

न प्रवर्ग्यायोपनिष्क्रम्याप्रविश्यान्यदधीयीतान्यदधीयीत ॥ ४२ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे चतुर्विंशप्रश्नेऽष्टमः पटलः ।

इति सत्याषाढहिरण्यकेशिसूत्रे चतुर्विंशः प्रश्नः ।

प्रवर्ग्यः शुक्रियकाण्डलक्षणः, प्रवर्ग्यप्रतिपादनात्। प्रवर्ग्योपनिष्क्रम्यानुप्रवर्ग्यकाण्डाध्ययनार्थं ग्रामादरण्यं प्रत्युपनिष्क्रान्तस्तदेवाधीयीत, नान्यं वेदभागम्। यदाऽप्यन्यमङ्गमधीते तदाऽप्यप्रविश्य ग्रामं न तदधीयीत, प्रविश्यैव त्वधीयीत। द्विरुक्तिः प्रश्नसमाप्त्यर्था ॥ ४२ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां
प्रवर्ग्यटिप्पण्यां चतुर्विंशप्रश्नेऽष्टमः पटलः प्रश्नश्च।

---

## सत्याषाढविरचितं श्रौतसूत्रम्—

अथ प्रथमः पटलः।

---

विनेययुक्ताखिलसिद्धवर्यलसच्चिदानन्दसुखं मुनीन्द्रम्।
नमामि सूत्रार्थविदे मुदाऽहं हिरण्यकेश्याख्यगुरुं कृपाब्धिम्।

प्रवर्ग्यशुक्रियविधिश्चतुर्विंशे समीरितः।
पञ्चविंशे विहारार्थं शुल्बसूत्रं विधीयते ॥

उक्ता यज्ञाः। तेषां ह्यायतनानि नियतप्रमाणानि नियतदेशानि तेषामायामविस्तारान्वक्तुकाम आह—

अथातो विहारयोगान्व्याख्यास्यामः ॥ १ ॥

विहारयोगानिति। विह्रियन्तेऽस्मिन्नग्नय इति विहाराः प्राग्वंशादयो गार्हपत्यादयश्च। युज्यतेऽनेनेति योगो रज्जुविशेषः। विहाराणां योगो विहारयोगः। विहरणमेव वा विहारस्तेषां योगो विहारयोगः। तस्य कृत्स्नं प्रतिपादनमित्यर्थः। योगानिति बहुवचनं बहुभिः प्रकारैर्दर्शयितुम्। दर्शनं च प्राधान्यप्रतिपत्त्यर्थम्। यथा रथादयो नियताङ्गप्रमाणा एकस्मिन्नङ्गेऽपि मात्रया विहीयमाने न सम्यग्गच्छन्ति। एवमन्यायतनादीन्यपि मात्रया विहीनानि साधनभावं न गच्छन्ति। तस्माद्यत्नेन संपादनीयानि। सर्वत्र विज्ञायत इति श्रुतीनामुपन्यासात्सर्वथाऽऽयामादय उक्तैरेव मार्गैः सम्यक्संपादनीयाः। आयतनानां भ्रेषे च प्रायश्चित्तेन भवितव्यम्। अमुमेवार्थं प्रदर्शयितुं शुल्बान्तरे— अथातःशब्दो, अथातो विहारयोगानिति। आदितस्तावद्दिशां ग्रहणमनेनाऽऽचार्येण नोक्तम्। तच्छुल्बान्तरतो ग्राह्यम्—कृत्तिकाः खल्विमां प्राचीं दिशं न परिजहति (इति)। तासां दर्शनेन मापयेदित्येकं श्रोणादर्शनेन मापयेदित्येकम्। चित्रास्वात्यो-

रन्तरेणेत्यपरं मतमिति भगवता बौधायनेन प्राग्वंशमानमधिकृत्योक्तम् । कृत्तिकादयो यत्र निलीयन्ते सा प्राची दिगिति । चित्रास्वात्योर्मध्य उदकमवस्थाप्य प्रतिबिम्बं दृष्ट्वा ग्राह्यम् ।

अथवा यत्र देवयजनं मृज्जलेन तं देशं समीकृत्य मध्ये शङ्कुं निहत्य शङ्कुप्रमाणया रज्ज्वा मण्डलं परिलिख्य शङ्कुच्छायाग्रं पूर्वाह्णे यत्र मण्डललेखां स्पृशति तत्र शङ्कुं निहत्य निर्गमवेलायां चापराह्णे, तौ पूर्वापरौ बिन्दू प्राची प्रतीची दिगिति सूक्ष्ममिच्छेत् । श्वोभूते पूर्वाह्णे शङ्कुच्छायाग्रे रेखायामेव लक्षणं कृत्वा शङ्कुलक्षणयोरन्तराले प्रतीच्यां दिशि यः शङ्कुस्तं प्रत्यपसारयेदुपक्रमदेशं प्रति ॥ १ ॥

यावदायामं प्रमाणम् ॥ २ ॥

यावदायाममित्यव्ययीभावः, यावदवधारण इति । किमत्र वाऽवधार्यते । आयाम एव प्रमाणमिति । न तिर्यङ्मान्यक्ष्णयारज्जू । ताभ्यामपि विहरणस्य शक्यत्वात् । प्रमाणसंज्ञायाः प्रयोजनं प्रमाणं तृतीयेन वर्धयेदित्यायामसंप्रत्ययार्थम् ॥ २ ॥

तदर्धमभ्यस्य ॥ ३ ॥

तदिति प्रमाणं परामृश्यते । तस्य प्रमाणस्यार्धं तदर्धम् । अभ्यस्य प्रक्षिप्य प्रमाणस्योपरि ॥ ३ ॥

अपरस्मिंस्तृतीये षड्भागोने लक्षणं करोति ॥ ४ ॥

अभ्याससहितं प्रमाणमुभयतःपाशं कृत्वाऽपरस्मिन्भागे तृतीये लक्षणं निरञ्छनं करोति । आयामस्य षड्भागोने लक्षणं कुर्यात् ॥ ४ ॥

पृष्ठ्यान्तयोरन्तौ नियम्य ॥ ५ ॥

पृष्ठे भवा पृष्ठ्या तस्या अन्तयोः शङ्कू निहत्य तयोः पाशौ प्रतिमुच्य ॥ ५ ॥

लक्षणेन दक्षिणाऽपायम्य निमित्तं करोति ॥ ६ ॥

लक्षणेन दक्षिणा प्रसार्य यथा षड्भागोना तिर्यङ्मानी शिष्टाऽक्ष्णयारज्जुः । एवमपसारयति निमित्तं च निहन्यात् ॥ ६ ॥

एवमुत्तरतः ॥ ७ ॥

एवमुदगपसार्य पूर्ववत्कुर्यात् ॥ ७ ॥

विपर्यस्येतरतः ॥ ८ ॥

पूर्वस्माच्छङ्कोः पाशमुन्मुच्यापरस्मिञ्छङ्कौ प्रतिमुञ्चेत् । अपरस्माच्छङ्कोः पाशमुन्मुच्य पूर्वस्मिन् प्रतिमुञ्चेत्, स विपर्यासस्तं कृत्वेतरतः, अंसौ तेनैव प्रथमकृतेन षड्भागोनेन लक्षणेन दक्षिणाऽपसार्य दक्षिणमंसमुदगपसार्योत्तरमंसमिति ॥ ८ ॥

स समाधिः ॥ ९ ॥

उक्तेन मार्गविशेषेणाऽऽपादिताः पार्श्वमान्यादय इति समाधिः ॥ ९ ॥

तन्निमित्तो न्हिासो वृद्धिर्वा ॥ १० ॥

निमित्तं कारणं प्रकृतिरिति पर्यायाः । तदेव निरञ्छनार्थं यस्य स तन्निमित्तः । न्हिासस्तिर्यङ्मान्या वृद्धिर्वा तिर्यङ्मान्या एव । किमुक्तं भवति । उक्तेन मार्गेण प्रागायतास्तिर्यगायताः समाश्चतुरश्राः कृता इत्यर्थः ॥ १० ॥

आयामं वाऽभ्यस्याऽऽगन्तुचतुर्थमायामश्चाक्ष्णया-
रज्जुस्तिर्यङ्मानी शेषः ॥ ११ ॥

प्रमाणं वाऽभ्यस्याऽऽयाममात्रीं रज्जुमायामे प्रक्षिप्याऽऽगन्तोश्चतुर्थमभ्यस्तचतुर्थभागमायामे संयोज्य लक्षणं कृत्वा सपाद आयामोऽक्ष्णयारज्जुः। शेषः पादोनायामः सा तिर्यङ्मानी ॥ ११ ॥

व्याख्यातं विहरणम् ॥ १२ ॥

विहरणविधिरुक्तः । इयांस्तु विशेषः—अंसौ पूर्वमाययितव्यौ । विपर्यस्य श्रोणी । सममन्यत् । वाचोयुक्तिभेदेन विधानस्यैतत्प्रयोजनम्—आयामतृतीयमभ्यस्य पूर्वस्मिंश्चतुर्थेऽष्टम(र्थे षष्ठ)भागोने लक्षणमित्येवमादीनामुपसंग्रहार्थम् । तत्र श्लोकः—

आगन्त्वर्धेन चिह्नाया भागानत्र करोति च ।
ध्रुवं स यावदागन्तु कृत्वैकोने निरञ्छनम् ॥

विकल्पविधिनोक्ते सिद्धे—व्याख्यातं विहरणम्, इति किमर्थमुक्तम् । शुल्बान्तरोक्तानां सप्तमण्डलानां गौरवप्रतिपादनार्थमुक्तमेवं विहरणं लघीय इति प्रतिपादयितुम् ॥ १२ ॥

दीर्घचतुरश्रस्याक्ष्णयारज्जुः पार्श्वमानी तिर्यङ्मानी च यत्पृथग्भूते कुरुतस्तदुभयं करोति ॥ १३ ॥

दीर्घचतुरश्रस्येत्यर्थः । समस्य मण्डलस्य पार्श्वमान्यादीनामभावाद्विषमचतुरश्रोऽपि च न (चयने) परिगृह्यते । पार्श्वमानी तिर्यङ्मानी कुरुत इति निर्देशादक्ष्णयारज्जुरित्येकवचननिर्देशाच्च यस्य चतुरश्रस्यैका पार्श्वमान्येका तिर्यङ्मान्येकैवाक्ष्णयारज्जुः ॥ गृह्यते। पार्श्वमान्या कृते चतुरश्रे यावत्क्षेत्रं भवति तिर्यङ्मान्या च तदुभयमक्ष्णयारज्जुः करोति, पार्श्वमानीक्षेत्रं तिर्यङ्मानीक्षेत्रं च करोतीत्यर्थः । वक्ष्यति च त्रिचतुष्कयोरित्यादिना। त्रिकस्य वर्गो नव। चतुष्कस्य वर्गः षोडश।षोडशसु नवके क्षिप्ते पञ्चविंशतिः ।

पङ्क्तिकावर्गः पञ्चविंशतिः । एवं सर्वत्र द्रष्टव्यम् । पृथग्ग्रहणं संसर्गो मा भूदित्येवमर्थम् । भूतग्रहणं किमर्थं—यत्पृथक्कुरुत इत्युच्यते । माने संसर्गविशेषोऽपि स्यात् । भूतग्रहणे सत्येष दोषो न भवति ॥ १३ ॥

ताभिर्ज्ञेयाभिरुक्तं विहरणम् ॥ १४ ॥

ताभिरुक्ताभिरितिसूभिरुक्तं विहरणम् । ज्ञेयाभिर्ज्ञातुं शक्याभिः । मनसा परिकल्पिताभिरुक्तेन मार्गेण विहरेदित्यर्थः । पृ थ(प्रउ)गादिषु करणीपरिज्ञानार्थमेतत्सूत्रमिहाप्युपकरिष्यतीत्यत्रोक्तम् ॥ १४ ॥

समचतुरश्रस्याक्ष्णयारज्जुर्द्विस्तावतीं भूमिं करोति समस्य द्विकरणीम् ॥ १५ ॥

समस्य चतुरश्रस्याक्ष्णयारज्जुः समचतुरश्रक्षेत्रं यावद्भवति तस्य द्विगुणं करोति । समस्य ग्रहणं किमर्थम्? दीर्घनिवृत्त्यर्थमिति चेन्न । उक्तार्थत्वात् । अक्ष्णयारज्जोरभावान्मण्डलस्याप्रसङ्गः । सर्वात्मना समस्य प्रतिपत्त्यर्थमिति तदप्यप्रयोजकम् । अक्ष्णयारज्जुरित्येकवचननिर्देशात् ॥ १५ ॥

प्रमाणं तृतीयेन वर्धयेत् ॥ १६ ॥

प्रमाणे तृतीयं प्रक्षिपेत् ॥ १६ ॥

तच्चतुर्थेनाऽऽत्मचतुस्त्रिंशोनेन ॥ १७ ॥

तदिति प्रक्षिप्ततृतीयं परामृश्यते । तृतीयं स्वचतुर्थेन वर्धयेदिति शेषः । आत्मचतुस्त्रिंशोनेनेति चतुर्थस्य विशेषणम् । तच्चतुर्थं चतुस्त्रिंशद्धा विभज्यैकं भागमुत्सृज्य शिष्टेनेत्यर्थः ॥ १७ ॥

सविशेषः ॥ १८ ॥

सविशेष इति संज्ञा । एवं संव(क)लितस्य सह विशेषेण वर्तत इति अन्वर्था संज्ञा । द्वादशे चत्वारि चतुर्थे(र्थे)के तदेकं चतुस्त्रिंशद्धा विभज्यैकं भागमुत्सृजेत् । एवं तिलोनसप्तदशाङ्गुलं भवति । द्वादशाङ्गुलस्य तिलवर्गः—एकं नियुतं, षडयुतानि, षट् सहस्राणि, चत्वारि शतानि, षष्टिः, चत्वारीति, तिलप्रमाणानि । सप्तदशाङ्गुलस्य तिलोनस्य तिलानां वर्गः—त्रीणि नियुतानि, त्रीण्ययुतानि, द्वे सहस्रे, नव शतानि, विंशतिर्नव च । अत्रैकं तिलचतुरश्रमतिरिक्तं तेन सविशेष इति संज्ञा । यदि विशेषसहितः किमनेन प्रयोजनमिति स्वविषयो दोषो न भवतीति तयोः सविशेषे गृह्यमाणो दशतिलक्षेत्राण्यतिरिक्तानि । तेन नीवारशूकार्धमात्रमप्यतिरिक्तं भवति । तस्माद्विशेषमिति ( विशेष इति ) व्यवहारार्थमेव भविष्यतीति प्रगणय्य संज्ञा कृताऽऽचार्येण ॥ १८ ॥

प्रमाणं चार्धेन वर्धयेत्तस्यार्धमस्यार्धमर्धस्य चार्ध-
मभ्यन्तरमुदस्येच्छेपस्यार्धं बाह्यतः शिष्टं द्विगुणं
कृत्वा मध्ये लक्षणं करोति ॥ १९ ॥ (ख० १) ॥

स्पष्टम् ॥ १९ ॥ ( ख० १ ) ॥

अथापरो योगः ॥ २० ॥

वक्ष्यत इति शेषः ॥ २० ॥

प्रमाणमात्रीꣳ रज्जुमुभयतःपाशां करोति ॥२१॥

यत्प्रमाणं चतुरश्रं कर्तुमिच्छति तावत्प्रमाणां रज्जुमुभयतःपाशां कुर्यात् ॥ २१ ॥

मध्येलक्षणमर्धमध्ययोश्च पृष्ठ्यायाꣳ रज्जुमायम्य
पाशयोर्लक्षणेष्विति शङ्कून्निहन्त्युपान्त्ययोः
पाशौ प्रतिमुच्य मध्यमेन लक्षणेन दक्षिणाऽपा-
यम्य निमित्तं करोति। मध्यमे पाशौ प्रतिमु-
च्योपर्युपरि निमित्तं मध्यमेन लक्षणेन
दक्षिणाऽपायम्य शङ्कुं निहन्ति। तस्मिन्पाशं प्र-
तिमुच्य पूर्वस्मिन्नितर मध्यमेन लक्षणेन दक्षिण-
मꣳसमायच्छेदुन्मुच्य पूर्वस्मादपरस्मिन्प्रतिमुच्य
मध्यमेनैव लक्षणेन दक्षिणाꣳ श्रोणिमायच्छेदेव-
मुत्तरौ श्रोण्यꣳसौ ॥ २२ ॥

मध्येलक्षणमर्धमध्ययोश्च । पाशलक्षणयोर्मध्य इत्यर्थः । पाशयोर्लक्षणेष्विति शङ्कू-न्निहन्त्युपान्त्ययोर्द्वितीयचतुर्थयोः पाशौ प्रतिमुच्य मध्यमेन लक्षणेन दक्षिणाऽपसार्य निमित्तं काकपदं कृत्वा मध्यमे पाशौ प्रतिमुच्योपर्युपरि काकपदं तेनैव लक्षणेन दक्षि-णाऽपसार्य शङ्कुं निहत्य तस्मिन्नेकतरं पाशं प्रतिमुच्य पूर्वस्मिञ्शङ्कावितरं पाशं तेनैव लक्षणेन दक्षिणमंसमायच्छेत्तत्र शङ्कुं निहन्यात् । स दक्षिणोंऽसः । पूर्वस्मात्पाश-मुन्मुच्यापरस्मिन्प्रतिमुच्य तेनैव लक्षणेन दक्षिणां श्रोणिमायच्छेत् । तत्र शङ्कुं निह-न्यात् । सा दक्षिणा श्रोणिः । एवमुत्तरतः पक्षः । इयांस्तु विशेषः । श्रोणिः पूर्वं पश्चादंसः ॥ २२ ॥

अथापरं पृष्ठ्यान्तयोर्मध्ये च शङ्कून्निहत्यार्धे
तद्विशेषमभ्यस्य लक्षणं कृत्वाऽर्धमागमयेदन्त्ययोः

पार्श्वौ कृत्वा मध्यमे सविशेषं प्रतिमुच्य पूर्वस्मि-
न्नितरं लक्षणेन दक्षिणमंसमायच्छेदुन्मुच्य पूर्व-
स्मादपरस्मिन्प्रतिमुच्य लक्षणेनैव दक्षिणां
श्रोणिमायच्छेदेवमुत्तरौ श्रोण्यंसौ ॥ २३ ॥
( ख० २ ) ॥

व्याख्यास्याम इति शेषः । चतुरश्रप्रमाणान्तयोः शङ्कू निहत्य तयोर्मध्ये च तृतीयं शङ्कुं निहत्यार्धे प्रमाणार्धे तद्विशेषं तस्यार्धस्य विशेषं 'प्रमाणं तृतीयेन वर्धयेत्' इति न्यायेन लक्षणं कृत्वा पुनरर्धमागमयेत्प्रक्षिपेत् । अन्त्ययोः पाशौ कृत्वा मध्यमे शङ्कौ सविशेषं पाशं प्रतिमुच्य पूर्वस्मिञ्शङ्कावितरं पाशं प्रतिमुच्य लक्षणेन दक्षिणेनापसार्य शङ्कुं निहन्यात् । स दक्षिणोंऽसः । पूर्वस्माच्छङ्कोः पाशमपरस्मिञ्छङ्कौ प्रतिमुच्य तेनैव लक्षणेन दक्षिणां श्रोणिमायच्छेत्तेनैवोदगपसार्योत्तरां श्रोणिं विपर्ययेणो-त्तरमंसम् । योगद्वयमिदं समचतुरश्रस्य संपादकम् ॥ २३ ॥ ( ख० २ ) ॥

प्रमाणं तिर्यग्द्विकरण्यायामस्तस्याक्ष्णयारज्जुस्त्रि-
करणी ॥ २४ ॥

प्रमाणं प्रक्रमादि तिर्यङ्मानी द्विकरणी पार्श्वमानी तस्यैव प्रक्रमादेः । तस्यैवंभूतस्य दीर्घचतुरश्रस्याक्ष्णयारज्जुस्त्रिकरणी त्रिगुणां भूमिं करोति । तिर्यङ्मानीभूतस्य प्रमाणस्य कथं प्रमाणमेकं करोति । पार्श्वमानी द्विकरणी सा द्वौ करोति । तदुभयमक्ष्णयारज्जुः करोति । तदुक्तमापस्तम्बेन—'दीर्घस्याक्ष्णयारज्जुः' इति ॥ २४ ॥

तृतीयकरण्येतेन व्याख्याता । विभागस्तु नव-
धा ॥ २५ ॥

एतेनैव मार्गेण तृतीयकरणी व्याख्याता । अनया त्रिकरण्या तृतीयकरण्यप्यवगन्तुं शक्येत्यर्थः । कथमित्याह—तृतीयकरणी इति । क्षेत्रं नवधा विभज्य एकं भागं गृह्णीयात् । प्रमाणतृतीयं भवति । त्रिकरण्या तृतीयं भवति । तत्र श्लोकः—" अक्ष्णरज्जु-स्त्रिवृत्प्रोक्ता प्रमाणसविशेषयोः । अस्या एकतृतीयं तु तृतीयकरणीं विदुः " ॥ इति ॥ २५ ॥

तुल्ययोश्चतुरश्रयोरुक्तः समासः ॥ २६ ॥

उक्तः समासः । समास एकीकरणम् । चतुरश्रस्याक्ष्णयारज्जुरित्यनेन ॥ २६ ॥

नानामा(प्रमा)णयोश्चतुरश्रयोः समासः ॥ २७ ॥

उच्यत इति शेषः ॥ २७ ॥

ह्रसीयसः करण्या वर्षीयसो वृद्धमुल्लिखेत् ॥ २८ ॥

ह्रसीयसोऽल्पीयसः । करण्या प्रमाणेन वर्षीयसो वृद्धं दीर्घमुल्लिखेत् । यथाऽल्पीयसः करणी तिर्यङ्मानी, वर्षीयसः करणी पार्श्वमानी तथा दीर्घचतुरश्रमुल्लिखेत् ॥ २८ ॥

वृद्धस्याक्ष्णयारज्जुरुभे समस्यति ॥ २९ ॥

दीर्घचतुरश्रस्याक्ष्णयारज्जुरिति ॥ २९ ॥

तदुक्तं चतुरश्राच्चतुरश्रं निजिहीर्षन्यावन्निजिहीर्षे-
त्तस्य करण्या वृद्धमुल्लिखेद्वृद्धस्य पार्श्वमानीमक्ष्ण-
येतरत्पार्श्वमुपसꣳहरेत् । सा यत्र निपतेत्तदप-
च्छिन्द्यात् ॥ ३० ॥

सा पार्श्वमानीतरस्मिन्पार्श्वे यत्र निपतति स्पृशति तत्रापच्छिन्द्यात् ॥ ३० ॥

छिन्नया निरस्तम् ॥ ३१ ॥

छिन्नया चतुरश्रे कृते तन्निरस्तं भवति ॥ ३१ ॥

तथा स्वयमेव दर्शयति—

उपसंहृताऽक्ष्णयारज्जुः सा चतुष्करणी ॥ ३२ ॥

उपसंहृता पूर्वं पार्श्वमानीदानीमक्ष्णयारज्जुश्चतुरश्रस्य सा चतुष्करणी ॥ ३२ ॥

छिन्ना चेतरा च यत्पृथग्भूते कुरुतस्तदुभयं
करोति ॥ ३३ ॥

द्विपुरुषा छिन्ना पार्श्वमानीतरा तिर्यङ्मानी च यत्पृथग्भूते कुरुतस्तदुभयं द्विपुरुषाक्ष्णयारज्जुः करोति ॥ ३३ ॥

कथमित्याह—

तिर्यङ्मानी पुरुषꣳ शेषस्त्रीन् ॥ ३४ ॥

तिर्यङ्मानी पुरुषं करोति । शेषस्त्वक्ष्णयारज्जुर्द्वौ तदुभयं तस्याक्ष्णयारज्जुरिति त्रीन्करोति ॥ ३४ ॥

तदुक्तम् ॥ ३५ ॥

तथाप्युक्तम् ॥ ३५ ॥

दीर्घचतुरश्रꣳ समचतुरश्रं चिकीर्षꣳस्तिर्यङ्मा
न्याऽपच्छिद्य शेषं विभज्योभयत उपदध्यात्
॥ ३६ ॥ ( ख० ३ ) ॥

दीर्घचतुरश्रं समचतुरश्रं कर्तुमिच्छंस्तिर्यङ्मान्या तिर्यङ्मानीप्रमाणेनापच्छिद्य शेषं विभज्य द्विधा कृत्वा तदुभयतोऽग्रतः पार्श्वतश्चोपदध्यान्निक्षिपेत् ॥ ३६ ॥ (ख० ३) ॥

खण्डमागन्तुना संपूरयेत् ॥ ३७ ॥

खण्डमागन्तुनाऽतिरिक्तेन पूरयेत् । पूरयित्वा तदतिरिक्तं त्यजेत् ॥ ३७ ॥

तस्य निहास उक्तः ॥ ३८ ॥

तस्य त्यागविधिरुक्तः ॥ ३८ ॥

समचतुरश्रं दीर्घचतुरश्रं चिकीर्षन्यावाधिकीर्षेत्ता-
वतीं पार्श्वमानीं कृत्वा यावदधिकः स्यात्तद्य-
थापरिमाणं विभज्य यथायोगमुपदध्यात् ॥ ३९ ॥

समचतुरश्रं दीर्घचतुरश्रं कर्तुमिच्छन्यावता दीर्घभूतेन प्रयोजनं तावत्पार्श्वमालिख्य यदधिकक्षेत्रं तद्यथायोगं यथा तत्क्षेत्रं युज्यते तथा क्षिपेच्चतुरश्रं विभज्योभयतः । प्रउगे विनियोगोऽवकीर्णिपशौ च ॥ ३९ ॥

चतुरश्रं मण्डलं चिकीर्षन् ॥ ४० ॥

यच्चतुरश्रं मण्डलं कर्तुमिच्छेत् । रथचक्रादौ विनियोगः ॥ ४० ॥

मध्यात्कोट्यां निपातयेत् ॥ ४१ ॥

मध्यमे शङ्कौ पाशं प्रतिमुच्य कोट्यामायच्छेत् । कोणेनाऽऽयच्छेदपसार्य तत्र लक्षणं कृत्वा ॥ ४१ ॥

पार्श्वतः परिकृष्यातिशयतृतीयेन सह मण्डलं
परिलिखेत् ॥ ४२ ॥

तेनैव लक्षणेन पार्श्वत आकर्षेत् । परिकृष्टं यावच्चतुरश्रमर्धमण्डलं परिलिखेत् ॥ ४२ ॥

साऽनित्या मण्डलम् ॥ ४३ ॥

साऽनित्या मण्डलं करोति । अनित्या स्थूला ॥ ४३ ॥

यावद्धीयते तावदागन्तु ॥ ४४ ॥

यावद्धीयते तावत्पार्श्वेन गच्छति । एतच्च वचनमासन्नतरत्वख्यापनार्थम् ॥ ४४ ॥

मण्डलं चतुरश्रं चिकीर्षन्विष्कम्भं पञ्चदशभा-
गान्कृत्वा द्वावुद्धरेत्त्रयोदशावशिष्यन्ते साऽनित्या
चतुरश्रम् ॥ ४५ ॥

मण्डलं चतुरश्रं कर्तुमिच्छन्मण्डलस्य विष्कम्भं व्यासं पञ्चदशधा विभज्य द्वौ भागौ त्यजेत् । त्रयोदश भागाः शिष्यन्ते । तैस्त्रयोदशभिर्मिता रज्जुस्तावत्क्षेत्रं चतुरश्रं करोति । सा चानित्या स्थूलतरा । त्रयोदशावशिष्यन्त इति वचनं ग्रन्थान्तरोक्तादपि मानव-( नाद्व )रमिति ख्यापनार्थम् । ( सौमयुतग्रामे ) विनियोगः । तत्र प्राच्येकादशिनी

मातव्या । तत्रार्धाङ्गुलेन प्रादेशमात्रं वेदिखण्डमुपादातव्यम् । यदि द्वादशाङ्गुला उपरा ( प्रादेशाः ), अर्धप्रादेशाङ्गुलहीनां षट्त्रिंशत्प्रक्रमां प्राचीं वेदिं विमाय यूपावटी-याच्छङ्कोर्दक्षिणे षडङ्गुले शङ्कुं निहत्य तावद्व्यासा चतुस्त्रिंशत्प्रक्रमायामा प्राची वेदिर्मातव्या । दशानां क्षेत्रं सूत्रकारोपदेशेन पञ्चविंशतिशतानि चत्वारिंशदधिकानि अङ्गुलिक्षेत्राणि । तथाऽ( या व्य )र्धाङ्गुलं गृह्यते । तेन वेदिच्छेदोऽर्धमानेषु । पूर्वा-र्धानां वेदिसंस्कारो न क्रियते । अतिरिक्तं क्षेत्रं निरस्तं भवति । वेदेश्चावटेषु विच्छि-त्तिर्भवति ॥ ४५ ॥

प्रमाणेन प्रमाणं विधीयते चतुरश्रम् ॥ ४६ ॥

प्रमीयते क्षेत्रमनेनेति प्रमाणं प्रक्रमादि । यत्र प्रमाणेनैव चोदना तत्र तेनैव चतुरश्रं विधीयत इति प्रत्येतव्यम् । दक्षिणेन पुरुषं दक्षिणे पक्ष इत्यादिषु च संख्या विव-क्षिता ॥ ४६ ॥

आदेशादन्यत् ॥ ४७ ॥

आदेशो विधिः । विधेरन्यद्भवति । यत्र विधीयते तत्रान्यदपि भवति । तेनैव प्रमा-णेन गार्हपत्यो(त्य)चित्युपरवादि ॥ ४७ ॥

द्वाभ्यां चत्वारि ॥ ४८ ॥

द्वाभ्यां प्रक्रमाभ्यां चतुरश्रे कृते चत्वारि पुरुषप्रमाणानि भवन्ति ॥ ४८ ॥

मण्डलानां चतुरश्रकरणमुक्तम् । इदं तु नोक्तम्—इयत्या रज्ज्वा इयत्क्षेत्रं भवतीति। अत इदमुच्यते—

त्रिभिर्नव ॥ ४९ ॥

नव चतुरश्राणि भवन्ति । तथा भूमावालिख्य द्रष्टव्यम् ॥ ४९ ॥

यावत्प्रमाणा रज्जुस्तावतस्तावतो वर्गान्करोति ॥ ५० ॥

यावत्प्रमाणा यावदायामा रज्जुस्तावतो वर्गान्करोति । पङ्क्तीः करोति यावत्संख्या-युक्तप्रमाणा तावत्संख्यायुक्ताः पङ्क्तीः करोति । पञ्चप्रमाणा पञ्चसंख्यायुक्तान्वर्गान् करोति । एवं सर्वत्र नियोजनीयम् ॥ ५० ॥

तथोपलब्धिः ॥ ५१ ॥

भूमावालिख्य प्रेक्षिते तथैवोपलभ्यते द्वाभ्यां कृत उभयतो लिखेत् । चत्वारि शृङ्गाणि भवन्ति । पञ्चभिः कृते पञ्चधोभयतो विलिखेत् । पञ्चविंशतिः शृङ्गाणि भवन्ति । एवं सर्वत्र द्रष्टव्यम् ॥ ५१ ॥

अध्यर्धपुरुषा रज्जुर्द्वौ सपादौ करोति ॥ ५२ ॥

उपर्यर्धं यस्याः साऽध्यर्धा तया कृते चतुरश्रे सपादौ द्वौ करोति । एकस्य वर्ग एकः । तस्याग्रतः पार्श्वतश्च द्वावर्धौ पूर्वेण सह द्वौ । अर्धेन यच्चतुरश्रं कृतं कोट्यां सपादस्तेन सह सपादौ द्वौ करोति । एवमेवोत्तरसूत्रं योजयितव्यम् ॥ ५२ ॥

अध्यर्धतृतीयपुरुषा षट्सपादानथात्यन्तप्रदेशः ॥ ५३ ॥

सार्धत्रिको विधिः ॥ ५३ ॥

यावता यावताऽधिकेन परिलिखति तत्पा-
र्श्वयोरुपदधाति ॥ ५४ ॥

यावता छेदेनाधिकेन परिलिखति तत्पार्श्वयोरग्रतश्चोपदधाति ॥ ५४ ॥

यत्तेन चतुरश्रं करोति तत्कोट्याम् ॥ ५५ ॥

एवं लिखितेनैव यच्चतुरश्रं कोट्यां तेनैव सह संख्या बोद्धव्येति ॥ ५५ ॥

मण्डलपूरणे चैकैकं भवति । अर्धेनार्धमिति कस्यचिद्भ्रान्तिः स्यात् । तामपाकर्तु-माह—

अर्धप्रमाणेन पादप्रमाणं विधीयते ॥ ५६ ॥

प्रमाणस्यार्धप्रमाणेन पादप्रमाणं विधीयत इति ॥ ५६ ॥

अस्यैव कारणमाह—

अर्धस्य द्विप्रमाणायाः पादपूरणत्वात् ॥ ५७ ॥

अर्धस्य प्रमाणं पुरुषमात्रं तदायामः, पादानां पूरणम् । यतस्तदुक्तं द्वाभ्यां चत्वा-रीति ॥ ५७ ॥

तृतीये नवमी कला ॥ ५८ ॥ ( ख० ४ ) ॥

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चविंशप्रश्ने प्रथमः पटलः ।

प्रमाणतृतीयेन नवमी कला नवमोऽश इत्यर्थः । तदुक्तं त्रिभिर्नवेति ॥५८॥(ख०४)॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां पञ्चविंशप्रश्ने प्रथमः पटलः ।

---

अथ द्वितीयः पटलः ।

---

आग्न्याधेयिके विहारे गार्हपत्याहवनीययोरन्त-
राले विज्ञायते ॥ १ ॥

पूर्वमविशेषेण मानमुक्तम् । आग्न्याधेयिकः उयान्विस्तार एवं विहर्तव्यमिति विशेष-विधानार्थमाह—गार्हपत्याहवनीययोरन्तराले यथा स्यादाहवनीयदक्षिणाग्न्योर्दक्षिणाग्नि-गार्हपत्ययोर्वा मा भूदित्येवमर्थं गार्हपत्याहवनीयग्रहणम् । विज्ञायते श्रूयते ॥ १ ॥

अष्टासु प्रक्रमेषु ब्राह्मणोऽग्निमादधीत । एकादशसु राजन्यः । द्वादशसु वैश्यः । चतुर्विंशत्यामपरिमिते यावता वा चक्षुषा मन्येत । तस्मान्नातिदूरमाधेय इति सर्वेषामविशेषेण श्रूयते ॥ २ ॥

इयताऽन्तरालेन विहारसंपत्तिर्भवतीति मननम् । अतिदूरप्रतिषेधो व्यवायपरिहारार्थः । यद्यतिदूरमाधीयते तदाऽश्वादयो न व्यवेयुः ॥ २ ॥

दक्षिणतः पुरस्ताद्वितृतीयदेशे नेदीयसि गार्हपत्यस्य दक्षिणाग्निर्विज्ञायते ॥ ३ ॥

दक्षिणतः पुरस्ताद्दक्षिणप्राक्कोणदेशे वितृतीयदेश ईषदूनतृतीयदेशे । कस्य वितृतीयदेशः, गार्हपत्याहवनीययोरन्तरालस्य । नेदीयस्यासन्नवितृतीयदेशे । पार्श्वादित्यर्थः । दक्षिणाग्नेरायतनस्थानमिति श्रूयते ॥ ३ ॥

तत्कथं गृह्यत इत्याह—

गार्हपत्याहवनीययोरन्तरालं पञ्चधा षड्धा वा संभुज्य षष्ठꣳ सप्तमं वा भागमागन्तुमुपसमस्य समं त्रैधं विभज्य ॥ ४ ॥

गार्हपत्याहवनीययोरन्तरालं पञ्चधा विभज्य षड्धा वा । यदि पञ्चधा तदा षष्ठो भाग आगन्तुकः । यदि षड्धा तदा सप्तमो भाग आगन्तुकः । तदुपसमस्य संयोज्य समं त्रैधं विभज्य आगन्तुना सह वितृतीये मा भूदिति समग्रहणम् ॥ ४ ॥

अपरस्मिꣳस्तृतीये लक्षणं करोति गार्हपत्याहवनीययोरन्तौ नियम्य लक्षणेन दक्षिणाऽऽयम्य निमित्तं करोति । दक्षिणाग्नेरायतनꣳ श्रुतिसामर्थ्यात् ॥ ५ ॥

सामर्थ्यमभिधानशक्तिः । अस्याः श्रुतेरयमेवार्थ इति । तेन त्रिप्रक्रमविस्तारायामानि त्रीणि चतुरश्राणि कृत्वा । अपरस्मिंश्चतुरश्र उत्तरांस आहवनीयमित्येवमादयो निरस्ता भवन्ति । सर्वत्राग्न्यायतनानि चतुरश्राणि मण्डलानि वा । इह तु मण्डलं गार्हपत्यमर्धमण्डलमन्वाहार्यपचनं चतुरश्रमाहवनीयमिति स्मरन्ति प्राञ्चः । मण्डलचतुरश्रयोरुक्तो विधिः ।

दक्षिणाग्नेः प्रयोग उच्यते—पिशीलिद्विकरण्या चतुरश्रं कृत्वा पूर्वोक्तेन विधानेन मण्डलं कुर्यात्तस्य मण्डलस्य विष्कम्भचतुर्भागं दक्षिणाग्नेः पूर्वनिहिताच्छङ्कोरुदगपसार्य शङ्कुं निहत्य तस्मिन्पाशं प्रतिमुच्य विष्कम्भार्धेन मण्डलं परिलिख्योत्तरमर्धं त्यजेत् । तत्र श्लोकौ—

१ ग. मन्यते ।

' दक्षिणाग्नेर्हताच्छङ्कोरुदक्शङ्कुर्देशाङ्गुले ।
एकादशातिलैरूने कार्यः स धनुषा समः ॥
तस्मिन्पाशं प्रतिमुच्य विंशत्या यु(त्याऽऽय)तया लिखेत् ।
ऊनया तु द्वाविंशतितिलैरर्धं त्यजेदुदक् ' इति ॥ ५ ॥

यजमानमात्रीत्यादिदार्शिक्या वेदेः श्रुतिरर्थं विमानविधिनेव व्याचष्टे—

यजमानमात्री प्राच्यपरिमिता वा यथाऽऽसन्नानि हवींष्यपि संभवेदेवं तिरश्ची प्राञ्चौ वेद्यंसावुन्नयत्यभित आहवनीयं प्रतीची श्रोणी अभिगार्हपत्यं मध्ये संनततरैवमिव हि योषेति दार्शिक्या वेदेर्विज्ञायते । अपरेणाऽऽहवनीयं यजमानमात्रं दीर्घचतुरश्रं विहृत्य तावतीं रज्जुमभ्यस्योभयतः पाशौ करोति । मध्ये लक्षणं दक्षिणयोः श्रोण्यंसयोरन्तौ नियम्य लक्षणेन दक्षिणाऽपायम्य निमित्तं करोति । रज्जुं नियम्यान्तौ समस्य दक्षिणस्याः श्रोणेर्दक्षिणमंसं समालिखेत् । एवमुत्तरतः । तिर्यङ्मानीं द्विगुणां तथा कृत्वा पश्चात्पुरस्ताच्चोपलिखेत् । विमितायां पुरस्तात्पार्श्वमान्यावुपसंहरेच्छ्रुतिसामर्थ्यात् ॥ ६ ॥

अपरेणाऽऽहवनीयमेकरज्ज्वादिभिर्दीर्घचतुरश्रं विहृत्य संपाद्य यजमानमात्री पार्श्वमानी, यथाऽऽसन्नानि हवींषि संभवेत् परस्परमसंघटितानि तिष्ठन्ति तथा तिर्यङ्मानी । तस्यास्त्रिभागोना वा तिरश्चीति बौधायनीये शुल्बान्तरे च प्रतिपादितम् । तावतीं रज्जुमभ्यस्योभयतः पाशौ कृत्वा दक्षिणयोः श्रोण्यंसयोरन्तौ नियम्य पाशौ प्रतिमुच्य लक्षणेन दक्षिणाऽपायम्य निमित्तं शङ्कुं निहत्य तस्मिञ्शङ्कौ रज्जुं संयोज्य पाशावुन्मुच्यैकेन हस्तेन गृहीत्वा दक्षिणां श्रोणिमारभ्य यावद्दक्षिणांसमालिखेत् । एवमुत्तरपार्श्वमालिखेत् । एतत्संनततरत्वं वेदेः । तिर्यङ्मान्यामप्येवं कुर्यात् । तिर्यङ्मानीप्रमाणां रज्जुमभ्यस्य मध्ये लक्षणं कृत्वा श्रोण्यन्ते पाशौ प्रतिमुच्य पार्श्वादपसार्य तत्र शङ्कुं निहत्य तत्र रज्जुं प्रबद्ध्यान्तौ समस्य दक्षिणां श्रोणिमारभ्य यावदुत्तरश्रोणि तावदालिखेत् । एवं पुरस्तादपि करोति । एवमुन्नयनं श्रोण्यंसयोः । एवं प्रकारा हि योषा । हिशब्दो रूपप्रसिद्धौ । प्राक्शिराः स्त्र्येवमेवेत्यर्थः । विमितायामेवं चतुरश्रमापादितायां पुरस्तात्पार्श्वमान्यावुपसंहरेत्संकोचयेत् । श्रुतिसामर्थ्यात् । पुरस्ताद(द)ंहीयसीति सैषा श्रुतिः । तस्याः सामर्थ्यात् । इतरथा योषासादृश्यमपि न स्यात् ॥ ६ ॥

त्रिꣳशत्पदानि प्रक्रमा वा ॥ ( ख०५ )॥ पश्चा-
त्तिरश्ची भवति षट्त्रिꣳशत्प्राची चतुर्विꣳशतिः
पुरस्तात्तिरश्चीति सौमिक्या वेदे विज्ञायते। षट्त्रिं-
शिकायामष्टादशोपसमस्यापरस्मादन्ताद्द्वादशसु
लक्षणं पञ्चदशसु लक्षणम् । पृष्ठ्यान्तयोरन्तौ
नियम्य पाञ्चदशिकेन दक्षिणाऽपायम्य शङ्कुं
निहन्त्येवमुत्तरतस्ते श्रोणी ॥ ७ ॥

पदानीत्यसमद्वीया श्रुतिः । त्रिंशत्पदानि प्रक्रमा वा पश्चात्तिरश्ची तिर्यङ्मानी भवति । षट्त्रिंशत्पृष्ठ्या प्राची । चतुर्विंशतिः पुरस्तात्तिर्यङ्मानी भवतीति सौमिक्या वेदेः सोमे श्रुतिः । षट्त्रिंशिकायां रज्ज्वामष्टादशोपसमस्य प्रक्षिप्यान्तयोः पाशौ कृत्वाऽपरस्मादन्ताद्द्वादशसु लक्षणमंसार्थं पञ्चदशसु लक्षणं श्रोण्यर्थं निरञ्छनं कृत्वा पृष्ठ्यान्तयोः प्राग्वंशस्य मध्यमाल्लालाटिकांस्त्रीन् प्राचः प्रक्रामन् प्रक्रम्य शङ्कुं निहत्य तस्माच्च पुरस्तात् षट्त्रिंशत् प्रक्रमे शङ्कुं निहत्य तयोः पाशौ प्रतिमुच्य पाञ्चदशिकेन दक्षिणाऽपायम्य शङ्कुं निहन्ति, सा दक्षिणतः श्रोणी । एवमुत्तरतोऽपसार्य शङ्कुं निहन्यात्, सोत्तरा श्रोणी ॥ ७ ॥

विपर्यस्तयाऽꣳसौ तेनैवापायम्य द्वादशिके शङ्कुं
निहन्त्येवमुत्तरतस्तावꣳसौ ॥ ८ ॥

शङ्क्वोः पाशावुन्मुच्य पूर्वपाशमपरस्मिन् प्रतिमुञ्चेत् । अपरं पूर्वस्मिन्प्रतिमुञ्चेत् । स विपर्यासः । एवं विपर्यस्तया रज्ज्वांऽसौ मातव्यौ । तेनैव निरञ्छनेन दक्षिणाऽपसार्य द्वादशिके शङ्कुं निहन्यात्। तेनैवोदगपसार्य द्वादशिके शङ्कुं निहन्यात् । तावंसौ । महावेद्या मानं किमर्थमिदमुच्यते । यावता सिद्धमेतत् । अनेकरज्जुविहरणविवक्षयोक्तमिति केचित् परिहरन्ति । आयामं वेत्यस्मिन्पक्षेऽपि द्वादशिके लक्षणं पाञ्चदशिके लक्षणं सप्तविंशत्यादौ निरञ्छनमिति लक्षणबाहुल्यप्रतिपादनार्थमित्यपरे । समचतुरश्राणां दीर्घचतुरश्राणां च विहरणमुक्तम् । इह तु दीर्घविषमचतुरश्रस्येत्यन्ये ॥ ८ ॥

सदेकरज्ज्वा विहरणं त्रिकचतुष्कयोः पाञ्चिकाऽक्ष्णयारज्जुः ॥ ९ ॥

यस्य चतुरश्रस्य त्रिका तिर्यङ्मानी । चतुष्का पार्श्वमानी । तस्याक्ष्णयारज्जुः पाञ्चिका ॥ ९ ॥

ताभिस्त्रिरभ्यस्ताभिरꣳसौ ॥ १० ॥

ताभिरंसौ मातव्यौ । त्रिकं त्रिरभ्यासयुक्तं द्वादश भवन्ति । चतुष्कं षोडश । पाञ्चिका विंशतिः । यूपावटीयाच्छङ्कोः पश्चात् षोडशसु शङ्कुं निहत्य तस्मिन्पाञ्चिकाभ्यासं प्रतिमुच्य यूपावटीये साभ्यासं त्रिकं प्रतिमुच्यांसावायच्छेत् ॥ १० ॥

चतुरभ्यस्ताभिः श्रोणी ॥ ११ ॥

ताभिरेव चतुरभ्यासयुक्ताभिः श्रोणी मातव्ये । षोडशसु यः शङ्कुरुक्तस्तस्मिन्पश्चिकाभ्यासं पञ्चविंशतिकं प्रतिमुच्य प्रथमनिहते शङ्कौ त्रिकं साभ्यासं पञ्चदशिकां प्रतिमुच्य ताभिः श्रोणी विहरेत् ॥ ११ ॥

द्वादशिकपञ्चकयोस्त्रयोदशिकाऽक्ष्णयारज्जुस्ताभिरंसौ ॥ १२ ॥

यूपावटीयाच्छङ्कोः पश्चात्पञ्चसु शङ्कुं निहत्य तस्मिंस्त्रयोदशिकां प्रतिमुच्य यूपावटीये पञ्चिकां द्वादशिकां च प्रतिमुच्य ताभिरंसौ मातव्यौ ॥ १२ ॥

द्विरभ्यस्ताभिः श्रोणी ॥ १३ ॥

यूपावटीये त्रयोदशिकां साभ्यासां प्रतिमुच्य साभ्यासां द्वादशिकां च प्रथमनिहते पञ्चिकां च साभ्यासां ताभिः श्रोणी मातव्ये ॥ १३ ॥

पञ्चदशिकाष्टकयोः सप्तदशिकाऽक्ष्णयारज्जुस्ताभिः श्रोणी ॥ १४ ॥

प्रथमनिहतशङ्कोरष्टसु शङ्कुं निहत्य तस्मिन्सप्तदशिकामष्टिकां च प्रतिमुच्य प्रथमनिहते पञ्चदशिकां ताभिः श्रोणी ॥ १४ ॥

द्वादशपञ्चत्रिंशिकयोः सप्तत्रिंशिकाऽक्ष्णयारज्जुस्ताभिरंसौ ॥ १५ ॥

प्रथमनिहताच्छङ्कोः पुरस्तात्प्रक्रमे शङ्कुं निहत्य तस्मिन्पञ्चत्रिंशिकां सप्तत्रिंशिकां च प्रतिमुच्य यूपावटीये द्वादशिकां ताभिरंसौ मातव्यौ ॥ १५ ॥

एतावन्ति ज्ञेयानि वेदिविहरणानि भवन्ति ॥ १६ ॥

एतावन्तीत्येव शुल्बमूलानि ज्ञातुं शक्यानि वेदिविहरणानि भवन्ति, अन्ये शुल्बमूलान्कल्पयितुमशक्याः । तस्मादेतावन्तीत्यवधार्यन्ते ॥ १६ ॥

अष्टाविंशत्योर्न पदसहस्रं महावेदिः ॥ १७ ॥

नवशतानि द्विसप्ततिश्च पदप्रमाणानि प्रक्रमप्रमाणानि वा चतुरस्राणि महावेदिः । महद्दहणं किमर्थम् । पदप्रमितायां महावेद्यां सदोहविर्धानादीनामपि पदेनैव मानार्थं प्रक्रममितायामरत्निप्रक्रमैरेव नवारत्नि तिर्यगित्यरत्निमानं सदसो विहितम् । नवारत्नि तिर्यगिति नियतप्रमाणविधानात् । अरत्निनैव विधानादनुमीयते । तथा हविर्धानस्य दशारत्निविस्तारं नवारत्नि(द्वया)याममित्यनुमीयते । तत्कथं तयोर्मानं कल्प्यत इति । उच्यते— चत्वारिंशदधिकानि पञ्चशतान्यङ्गुलिप्रमाणानि पदविमितायां वेदेरायामः । पदं च पञ्चदशाङ्गुलमिति वचनात् । सदसः पश्चात् पञ्चचत्वारिंशदङ्गुलं षोडशाधिकं शतद्वयं सदोहविर्धानयोर्मध्यं पञ्चचत्वारिंशत् संचारः । हविर्धानस्य षोडशाधिकं शतद्वयमवशिष्टमष्टादशाङ्गुलम् । तस्मादुत्तरवेदि सदोहविर्धानानामन्तर्मेयसंभवादवृद्धिः कल्पनीया, अरत्नेर्वा ह्रासः कल्पनीयः । तदुभयमपोदितं भवति । अतो येन वेदिर्मिता मेनैव तेषां मानार्थं मद्दममानमिति स्थितम् ॥ १७ ॥

दक्षिणादꣳसाद्द्वादशसु दक्षिणस्याꣳश्रोण्यां निपा-
तयेच्छेदं विपर्यस्येतरत उपदध्यात् । सा दीर्घ-
चतुरश्रा महावेदिस्तथायुक्ताꣳ संचक्षीत ॥ १८ ॥

दक्षिणस्मादंसादारभ्य द्वादशस्वेव श्रोण्यां निपातयेत् । त्रीणि पदानि श्रो
ष्ठानि विपर्यस्योत्तरस्मिन्नंसे मनसा स्थापयेत् । एवं कृते सप्तविंशतिविस्तारा षट्त्रिं-
शदायता दीर्घचतुरश्रा भवति । तथाभूतां गणयेत् ॥ १८ ॥

सौमिक्या वेदितृतीये यजत इति सौत्रामण्या विज्ञायते ॥ १९ ॥

वेदितृतीये यजेतेति दार्शिकपाशुकयोरसंभवात्सौमिकं लभ्यते । अतः सौमिक्या इत्युक्तम् ॥ १९ ॥

प्रक्रमस्य तृतीयकरणी प्रक्रमस्थानीया भवति ॥ २० ॥

तृतीयकरणी प्रक्रमस्थाना । स्थानान्ताद्विभाषेति च्छप्रत्ययः । तृतीयकरणी षट्त्रिंशिकायामित्यादिना विहरेत् ॥ २० ॥

त्रिकरण्या वा ॥ २१ ॥

वक्ष्यमाणेन विधिना ॥ २१ ॥

अष्टिकदशिके तिर्यङ्मान्यौ ॥ २२ ॥ द्वादशिका पृष्ठ्या ॥२३॥

अष्टिका तिर्यङ्मानी पुरस्तात्, पश्चाद्दशिका । पृष्ठ्या द्वादशिकायामा । द्वादशसु पञ्चसमस्यापरस्मादन्तात्पञ्चसु लक्षणं चतुर्षु लक्षणं कृत्वा पृष्ठ्यान्तयोरन्तौ नियम्य पञ्चदशिकेन दक्षिणाऽऽयम्य दक्षिणतोऽपसार्य शङ्कुं निहन्यात् । एवमुत्तरस्ते श्रोणी विपर्यस्तयांऽसौ पञ्चदशिकेन दक्षिणाऽऽयम्य चतुर्षु शङ्कुं निहन्यात् । एवमुत्तरतस्तावंसौ भवतः ॥ २२ ॥ २३ ॥

त्रीणि चतुर्विꣳशानि पदशतानि सौत्रामणिकी
वेदिः ॥ २४ ॥

दक्षिणस्मादंसादारभ्य चतुर्ष्वेव दक्षिणस्यां श्रोण्यां निपात्य च्छेदं विपर्यस्येत्यादि पूर्ववत् । द्वादशपदविस्तारा द्वादशपदायामा भवत्येवं संचक्षीत ॥ २४ ॥

द्विस्तावा वेदिर्भवतीति चाश्वमेधे विज्ञायते ॥ २५ ॥

कस्य द्विस्तावाॆ सौमिक्याः । प्रकृतत्वात्प्रकृतित्वाच्च ॥ २५ ॥

प्रक्रमस्य द्विकरणी प्रक्रमस्थानीया भवति ॥२६॥

द्विकरण्या प्रमाणं तृतीयेन वर्धयेदित्यादिना वर्धितेन । तदेव विहरणम् ॥ २६ ॥

प्रक्रमो द्विपदस्त्रिपदो वा ॥ २७ ॥

द्विपदस्त्रिंशदङ्गुलः । त्रिपदः पञ्चचत्वारिंशदङ्गुलः । पदं पञ्चदशाङ्गुलमिति यचनात् ॥ २७ ॥

प्रक्रमे याथाकामी शब्दार्थस्य विशयित्वात् ॥ २८ ॥

कामं इच्छा । यथाकाम एव याथाकामी । यथेच्छा तथा गृह्णीयात् । प्रक्रमोऽध्यर्धप्रक्रमो विप्रकृष्टप्रक्रम इति नैवमन्वर्थसंज्ञा । पदादधिकस्य मानार्थस्य वाचको यदा यौगिकस्तदा द्विपदं त्रिपदं वा । अतिक्रामत्यनेनेति क्रमः । प्रकृष्टः क्रम इति । यदा निरूढः कल(रूप)नार्थद्व्यवचनात्पदादधिकं प्रक्रम इति । शब्दार्थस्य विशयित्वात् । विशयित्वं कल(रूप)नार्थानामपि वाचकत्वादनेन वाचकत्वम् । शब्दार्थानां विशयित्वं यतः ॥ २८ ॥

कस्य पदादयो ग्रहीतव्या इत्याह—

यजमानस्य ॥ २९ ॥

यजमानस्य पदं ग्राह्यं स्वामित्वात् ॥ २९ ॥

अध्वर्योर्वा ॥ ३० ॥

वाशब्दः पक्षव्यावृत्तौ । न यजमानस्य ॥ ३० ॥

अध्वर्युरेव कुतः—

एष हि चेष्टानां कर्ता भवति ॥ ३१ ॥

चेष्टन्त इति चेष्टाः कर्माणि । कर्मणां कर्ता यतः । हिशब्दो हेतौ । तस्मादध्वर्योरेव न यजमानस्य ॥ ३१ ॥

रथमात्री निरूढपशुबन्धस्य वेदिर्भवतीति विज्ञायते ॥ ३२ ॥ (ख० ६) ॥

रथप्रमाणा निरूढपशुबन्धस्य वेदिर्भवतीति श्रुतिः ॥ ३२ ॥ (ख० ६) ॥

तत्र खल्वाहुः ॥ ३३ ॥

खलुशब्दोऽलंकारे । तत्र तस्मिन्नर्थे रथप्रमाणविदो रथाशरामाहुः ॥ ३३ ॥

रथेषामात्री प्राची रथाक्षमात्री पश्चात्तिरश्ची विपथयुगमात्री पुरस्तात्तिरश्ची ॥ ३४ ॥

रथाक्षमात्री पश्चात्तिर्यङ्मानी । रथग्रहणं शकटनिवृत्त्यर्थम् । ईषामात्री प्राच्या । रथाक्षः पन्था येन युगेन तद्विपथयुगम् । अभ्यन्तरं युगच्छिद्रयोरन्तरालं तन्प्रमाणा पुरस्तात्तिर्यङ्मानी ॥ ३४ ॥

यावता वा बाह्ये छिद्रे। तदेकरज्ज्वोक्तं पञ्चद-
शिकेनैवापायम्य ॥ ३५ ॥

तदेकरज्जुरिति किं सौमिकी गृह्यत आहोस्वित्प्रथमा। सौमिकी गृह्यते पञ्चदशिके· नेति दर्शनात्। तत्र हि पञ्चदशिकेन लक्षणेनेतरत्रेषामात्री। ईषां षट्त्रिंशद्धा विभज्य एकं भागं प्रक्रमस्थानीयं कृत्वा सौमिकवत्पञ्चदशिकेनापायम्यार्धाक्षेण श्रोण्यौ मिनुया- दर्धयुगेनांसौ मिनुयादिति केचित्। अपरे पुनः प्रथमामेकरज्जुं गृह्णन्ति। यदि सौमिकी गृह्यते, अदृष्टकल्पना प्राप्नोति। कथं पञ्चदशिकेनेति चेत्। षड्लक्षणायां षट्त्रिंशिकायां यत्पञ्चदशिकं तदपि षड्भागोनमेव तस्मात्पञ्चदशिकेनेति षड्भागोनं लक्ष· यितुं [ न ] शक्यते। नादृष्ट( तादृश )कल्पना भवति। नन्वत्रापि( त्वत्र ) लक्षणा। न तु सौमिकी ( सा तु लौकिकी )। किं च साधारणत्वाच्च। सैवैका रज्जुः साधा· रणी। तस्माच्च सैव ग्राह्या। एवमुत्तरत्रापि योजनीयम् ॥ ३५ ॥

अर्धाक्षेणार्धयुगेनेति श्रोण्यंसानिर्हरेत् ॥ ३६ ॥

विभज्यैकं भागं प्रक्रमस्थानीयं कृत्वा सौमिकवत्पञ्चदशिकेनैवापायम्यार्धाक्षेण श्रोणी मिनुयात्। अर्धाक्षेणांसौ मिनुयादिति केचित्। अपरे तु पुनः प्रथमामेकरज्जुं गृह्णन्ति। यदि सौमिकी गृह्यते तदाऽदृष्टकल्पना प्राग्विहितौ वेति। कथं पञ्चदशिकेनेति केचित्। षड्भागोनार्धाक्षे श्रोणी अर्धयुगे त्वंसौ ॥ ३६ ॥

अथाप्युदाहरन्ति ॥ ३७ ॥

अथशब्दः समुच्चये। एवं चोदाहरन्ति—रथप्रमाणविदो रथकाराः ॥ ३७ ॥

अष्टाशीतिशतमीषा तिर्यगक्षश्चतुःशतं षडशी-
तिर्युगमाहुः। स रथश्चारण उच्यत इति रथपरि-
माणम् ॥ ३८ ॥

एवं रथपरिमाणं सर्वतो मानमुदाहरन्ति ब्रुवते। सामर्थ्यसिद्धेश्चाङ्गुलिर्गृह्यते। ईषा· प्रमाणमष्टाशीत्युत्तरमङ्गुलिशतम्। तिर्यक्छब्दः पूरणार्थः। अक्षप्रमाणं चतुरधिकशतम्। युगस्य प्रमाणं षडशीतिः। एवंलक्षणो यो रथः स चारणः। चरत्यनेनेति चरणः। चरण एव चारणः। चारणग्रहणं क्रीडादिरथनिवृत्त्यर्थम्। अथवा अस्यशब्दस्य स्थाने यस्यशब्दमध्याहृत्य योजनीयं वर्णव्यत्यासेन वा ॥ ३८ ॥

अरत्निभिर्वा षड्भिः प्राची। चतुर्भिः पश्चात्तिरश्ची
त्रिभिः पुरस्तात्तिरश्ची तदेकरज्ज्वोक्तमध्यर्धे
रज्जौ द्वयोरर्धतृतीययोः षट्स्विति लक्षणानि

अरत्निभिर्वा मातव्यमिति शेषः। चतुर्भिः पश्चात्तिर्यङ्मानी। षड्भिः प्राची-।

करोति नवसु पाशं पृष्ठ्यान्तयोरन्तौ नियम्यार्धतृतीयकेन दक्षिणाऽपायम्य द्वयोः शङ्कुं निहन्त्येवमुत्तरतस्ते श्रोणी विपर्यस्तयाऽंसौ तेनैवापायम्याध्यर्धे शङ्कुं निहन्ति । एवमुत्तरतस्तावंसौ । दशपदोत्तरवेदिर्भवेदिति सोमे विज्ञायते ॥ ३९ ॥

पृष्ठ्या त्रिभिः पुरस्तात्तिर्यङ्मानी । तदेकरज्ज्वोक्तमित्यादि गतमेतत् ॥ ३९ ॥

तदेकरज्ज्वोक्तं पञ्चदशिकेनैवापायम्यार्धेन ततः श्रोण्यंसान्निर्हरेत् ॥ ४० ॥

अर्धेन ततस्तस्येत्यर्थः ॥ ४० ॥

विमितायां पुरस्तात्पार्श्वमान्यावुपसंहरेत् ॥ ४१ ॥

एवं चतुरश्रमापादितायां विमितायां पुरस्तात्पार्श्वमान्यावुपसंहरेत् ॥ ४१ ॥

श्रुतिसामर्थ्यात् ॥ ४२ ॥

चतुःशिखण्डा युवती कनीन इति सादृश्यानुवादसामर्थ्यात् ॥ ४२ ॥

पदे युगेऽरत्नावियाति प्रादेशे प्रक्रमे शम्यायां च मानार्थेषु याथाकामी शब्दार्थस्य विशयित्वात् ॥ ४३ ॥

पदादिषु मानार्थेषु याथाकामी यथेच्छा तथा गृह्णीयात् । किमुक्तं भवति । अणवश्चतुर्दश तिलश्चतुर्विंशतिलोऽङ्गुलः । पृथुतः संसृष्ट इत्यपरम् । द्वादशाङ्गुलः प्रादेशस्त्रयोदशाङ्गुला वितस्तिः । पञ्चदशाङ्गुलं पदम् । चतुर्विंशत्यङ्गुलयोऽरत्निः । द्वात्रिंशदङ्गुलयो जानुः । षट्त्रिंशदङ्गुलिः शम्या । षडशीत्यङ्गुलं युगम् । चतुःशतमक्षः । विंशत्युत्तरशतं पुरुषः । इत्येवमादिशुल्बान्तरोक्तलक्षणमानार्थेषु प्रमाणावयवा गृह्येरन् । लक्षणेनोक्तेन मार्गेण विमाय तत्र याथाकामी । शब्दार्थस्य विशयित्वात् । पञ्चदशाङ्गुलमपि पदं भवति । यजमानपदमपि तत्रान्यतरद्ग्राह्यम् । इषतीस्याधाने इयं द्वादशविक्रमा इति तत्र स्वसंचितं लोकप्रसिद्धं वा गृह्णीयादिति ॥ ४३ ॥

यजमानमात्री चतुःस्रक्तिर्भवतीति पैतृक्या वेदेर्विज्ञायते ॥ ४४ ॥

पैतृक्या वेदेः श्रुतिर्यथा दिक्षु स्रक्त्यो भवन्तीति तथा मातव्या ॥ ४४ ॥

तदेकरज्ज्वोक्तं पञ्चदशिकेनैवापायाम्यार्धेन ततः

श्रोण्यंसान्निर्हरेत् ॥ ४५ ॥

गतम् ॥ ४५ ॥

नवारत्निस्तिर्यक्सप्तविंशतिरुदगायतमिति सदसो विज्ञायते ॥ ४६ ॥

नवारत्निः प्राची तिर्यङ्मानी । सप्तविंशतिरुदीची पार्श्वमानी । एवं मातव्यमिति सदसः श्रुतिरित्यर्थः ॥ ४६ ॥

अष्टादशेत्येकेषाम् । तदेकरज्ज्वोक्तं पञ्चदशिके नैवापायम्यार्धपञ्चमेः श्रोण्यंसान्निर्हरेत् ॥४७॥

करणमुक्तं प्रथमनिहिताच्छङ्कोर्दक्षिणतः प्रक्रमे शङ्कुं निहत्य तस्मिन्पाशं प्रतिमुच्य तस्य पुरस्तादर्धाष्टमे पृष्ठ्याया दक्षिणतः प्रक्रमे शङ्कुस्तत्सदसो मध्यमौदुम्बरीस्थानम् । प्रथमनिहताच्छङ्कोः पृष्ठ्यायामेव पुरस्तादर्धाष्टमे शङ्कुं निहत्य औदुम्बरीस्थाने यः शङ्कुस्तस्मिन्पाशं प्रतिमुच्योपर्युपरि शङ्कुमुदगपसार्यार्धचतुर्दशे नवसु वा शङ्कुं निहन्यात्स सदस आयामः । तस्मिन्नायामे तदर्धमभ्यस्य यथासूत्रं विहरेत् । सप्तविंशतावर्धचतुर्दशमभ्यस्य दक्षिणस्मादन्ता(दंसा)देकादशसु सपादेषु निरञ्छनमर्धपञ्चमे लक्षणं श्रोण्यंसार्धमष्टादशसु नवपदं प्रक्षिप्यार्धाष्टमे निरञ्छनमर्धपञ्चमे लक्षं श्रोण्यंसार्धमायामयोरन्तौ नियम्य निरञ्छनम् । तेन पश्चादपसार्यार्धपञ्चमे शङ्कुः । पुरस्तादपसार्यार्धपञ्चमे शङ्कुः । ते श्रोणी सदसः । विपर्यस्यांसौ । प्राग्वंशमानं हविर्धानमानमाग्नीध्रमानमनेनाऽऽचार्येण नोक्तम् । सूत्रान्तरोक्तं ग्राह्यमपेक्षितत्वात्सदसः । पुरस्तात्त्रिषु प्रक्रमेषु दशप्रक्रमविस्तारं दशायामं हविर्धानं मिनुयात् । एकरज्ज्वा पञ्चशङ्कुना त्रिशङ्कुना वा । हविर्धानस्य पाश्चात्यमध्यमशङ्कौ पाशं प्रतिमुच्योदगपसार्य दशप्रक्रमे शङ्कुं । तदाग्नीध्रायतनम् । तथा रज्ज्वा दक्षिणाऽपसार्य द्वादशसु मार्जालीयं पृष्ठ्यायां सदसः पौरस्त्यशङ्कौ पाशं प्रतिमुच्योदगपसार्य पादोनैकादशसु शङ्कुं निहत्य तस्माच्चोत्तरतः षट्सु शङ्कुम् । ताभ्यां पुरस्ताच्च षट्सु प्रक्रमेषु शङ्कुं निहत्य एवं पञ्चशङ्कुना त्रिशङ्कुना वा समचतुरश्रं मिनुयात् । अष्टप्रक्रमविस्तारं द्वादशायामं प्राग्वंशं मिनुयात् । द्वादशविस्तारं षोडशायाममित्यन्ये ॥ ४७ ॥

प्रादेशमुखाः प्रादेशान्तरालाः ॥ (ख० ७) ॥ भवन्तीत्युपरवाणां विज्ञायते ॥ ४८ ॥

उपरवमानमपि निगदव्याख्यातम् ॥ ४८ ॥

अरत्निमात्रं चतुरश्रं विहृत्य स्रक्तिषु शङ्कुं
निहत्यार्धमादेशेन तं परिलिखेच्छ्रुतिसामर्थ्यात् ॥ ४९ ॥

गतार्थः ॥ ४९ ॥

व्यायाममात्री चतुःस्रक्तिर्भवतीति गार्हपत्यचिते
र्विज्ञायते ॥ ५० ॥

चतुररत्निर्व्यायामः । तत् प्रमाणं गार्हपत्यचितेः ॥ ५० ॥

चतुरश्रेत्येकेषाम् । परिमण्डलेत्येकेषाम् ॥ ५१ ॥

चतुरश्रा गार्हपत्यचितिरित्येकेषां शाखिनां मतम् । परिमण्डला गार्हपत्यचिति-
रित्येकेषां श्रुतिः ॥ ५१ ॥

करणं व्यायामस्य तृतीयायामं सप्तमं व्यासं कारयेत् ॥ ५२ ॥

चतुरश्रायां करणमुच्यते । व्यायामतृतीया पार्श्वमानी व्यायामसप्तमी तिर्यङ्मानी । एवं
करणं कारयेत् । कुर्यादिति वक्तव्ये कारयेदिति वचनादन्यैस्तक्षादिभिः प्रवीणैर्वाऽध्वर्युर्गेति
स्ववगम्यते । क्रियन्तेऽनेनेष्टका इति करणं दारुमयम् ॥ ५२ ॥

ता एकविंशतिर्भवन्ति ॥ ५३ ॥

तेन करणेन कृता इष्टका एकविंशतिः । तस्या गार्हपत्यचितौ भवन्तीति
शेषः ॥ ५३ ॥

उपधाने प्रागायामाः प्रथमे प्रस्तारेऽपरस्मिन्नुदगायामाः ॥ ५४ ॥

प्रागायामाः प्रागायताः प्रथमे प्रस्तारे । उदगायामा उदगायता द्वितीये प्रस्तारे ।
एवमुपहिते भेदो न भवति । अनेन ज्ञायते सर्वत्र भेदो वर्जनीय इति । शब्देनैवोक्तं
भगवता बौधायनेन तु—'सर्वत्र भेदो वर्जनीयः' इति । अधरोत्तरयोः पार्श्वसंस्थानं
(धीनां) भेद इत्युपदिशन्ति । इत्यनेनाऽऽचार्येणोक्तमेतद्व्यत्यासं चिनुयादिति ॥ ५४ ॥

मण्डलायां मृदो देहं कृत्वा मध्ये शङ्कुं निहत्या-
र्धव्यायामेन मण्डलं परिलिखेत् ॥ ५५ ॥

यदि मण्डला गार्हपत्यचितिः, मृदो मृत्तिकाया इति निपातः । अत्रेत्येतस्मिन्नर्थे ।
उच्छ्रितं कृत्वेति देहबिम्बं श्लक्ष्णीकृत्य तन्मध्ये शङ्कुं निहत्यार्धव्यायामेन मण्डलं
परिलिखेत् । तद्व्यायाममात्रं मण्डलं भवति । केचिदत्र सहशब्दश्रवणादतिशयतृतीयेन
वर्णयन्ति क्षेत्रसमत्वाय । तदनीप्सितमाचार्यस्यार्धव्यायामेनेति वदतः । यदीप्सितमभ-
विष्यत्, मृदो देहं कृत्वा मण्डलं कुर्यादित्येवावक्ष्यत् । उक्तं त्वादेशादन्यदिति ।
तावतीं भूमिमिति वक्ष्यति च । कथं सहेति । उच्यते यो—मण्डलं चिकीर्षेत्स एवं
कृत्वाऽर्धव्यायामेन परिलिखेत् । सह इति निपात एव मध्याहृत्य योजनीयम् । अथवा
श्रुतिरेवैषमेवंभूता ॥ ५५ ॥

तस्मिंश्चतुरश्रमवदध्याद्यावत्संभवेत् ॥ ५६ ॥

तस्मिन्निति मण्डलं परामृश्यते । तस्मिन्मण्डले चतुरश्रे यावत्संभवेत्तावच्चतुरश्रमालिखेत् । समपरिणाहं चतुर्धा संभुज्यावान्तरदिक्षु लक्षणं कृत्वा तेषु स्रक्त्यो यथा भवन्ति तथा चतुरश्रमालिखेत् । दिक्षु चत्वारि धनूंषि भवन्ति ॥ ५६ ॥

तन्नवधा व्यवलिख्य ॥ ५७ ॥

चतुरश्रं नवधा व्यवलिख्यैकस्य प्रमाणेन समचतुरश्रं करणं कारयेत् ॥ ५७ ॥

त्रेधैकैकं प्रधिकं विभज्य तदुपधीयते ॥ ५८ ॥

गमनाय प्रधीयत इति प्रधिकं, तच्च पार्श्वधनुः । तत्प्रतिकृतित्वात्प्रधिकमित्युच्यते । एकैकं प्रधिकं त्रिधा कृत्वा करणानि कारयेत् । चतुर्भिस्तिलैरूनाष्टपञ्चाङ्गुलश्चतुरश्रप्रमाणमण्डलमध्ये । तस्य तृतीयेनैकं करणं प्रधिकमध्ये द्वाविंशतित्रयोदशाभ्यां कारयेत् । त्रिंशदङ्गुलेन त्वेकं तक्षयेदत्र धनुराकारं यथा ज्याफलकयोर्मध्ये तिलोनमङ्गुलं भवति । तथेतरत्रिभिस्त्रयोदशाङ्गुलमेकं करणम् । अरत्निमात्रं तिलाभ्यामेकं सप्तविंशत्यङ्गुलमष्टभिस्तिलैरूनमेकं तक्षेत् । पूर्वमङ्गुलिद्वयं ज्याफलकाभ्यां सह मध्ये यथा भवति तथा तृतीयेन करणेन विपर्यस्यान्यमेवामिष्टकाः कारयेत् ॥ ५८ ॥

चतुरश्रस्यावान्तरदेशान्प्रति स्रक्तीः संपादयेत् ॥ ५९ ॥

उपधानकाले प्रथमे प्रस्तारेऽवान्तरदेशान्कोणदेशान्प्रति चतुरश्रस्य स्रक्तीः संपादयेत्संयोजयेत् । चतुरश्रेण चेष्टकाः शेरते । प्रधिकेषु द्वादश नव द्वादश एकविंशतिर्भवन्ति ॥ ५९ ॥

मध्यानीतरस्मिन्प्रस्तारे ॥ ६० ॥

मध्यानि चतुरश्रमध्यान्यवान्तरदेशं प्रति संपादयेत् ॥ ६० ॥

व्यत्यासं चिनुयाद्यावतः प्रस्तारांश्चिकीर्षेत् ॥ ६१ ॥

यावतः प्रस्तारान्कर्तुमिच्छेत्तावद्व्यत्यासं चिनुयात् । यः प्रथमः स तृतीयः पञ्चमश्च । यो द्वितीयः स चतुर्थः ॥ ६१ ॥

पिशीलमात्रा भवन्तीति धिष्णियानां विज्ञायते । चतुरश्रा इत्येकेषाम् ॥ ( परिमण्डला इत्येकेषाम् ) ॥ ६२ ॥

बाह्वोरन्तरालं पिशीलमित्येके । मुष्टिकृतोऽरत्निः पिशीलमित्यन्ये । प्रादेशः पिशीलमित्यपरे । चतुरश्रा धिष्णिया इत्येकेषां श्रुतिः । परिमण्डलेत्यपरैर्विज्ञायते । समानश्रुतेरुदाहृतत्वादैच्छिकविकल्पः ॥ ६२ ॥

मृदो देहान्कृत्वा ॥ ६३ ॥

मृदो देहानिति प्रदर्शनम् । तस्मिंश्चतुरश्रमित्यादेः ॥ ६३ ॥

आग्नीध्रीयं नवधा व्यवलिख्यैकस्याः स्थानेऽश्मानमवधाय यथासंख्यमितरान्व्यवलिख्य यथायोगमुपदध्यात् ॥ ६४ ॥ ( ख० ८ ) ॥

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चविंशप्रश्ने द्वितीयः पटलः ॥

अश्मनवमा इ(श्मानमवधाये)ति सिद्धेऽप्येकस्याः स्थान इति वचनं द्रव्येष्टकानामवटेपूपधानस्य ज्ञापनार्थम् । एतद्द्व्यक्तमुक्तं बौधायनेन—लोकबाधानि द्रव्याणि अवटेपूपधेयानीति । यथायोगमुपदध्यात् । अग्निकल्पे यावत्संख्याका धिष्ण्या आम्नातास्तावत्संख्यानि तान्यवलिख्य करणानि कृत्वा यथायोगं यथा युज्यते तथोपदध्यात् ॥६४॥ ( ख० ८ ) ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां पञ्चविंशप्रश्ने द्वितीयः पटलः ॥

अथ तृतीयः पटलः ।

उक्तानि हविर्यज्ञानां विहरणानि सौमिकानि च साग्निचित्यस्य क्रतोरग्निहोत्रादिमानमिष्टकाकरणान्युपधानविधिश्च नोक्तस्तद्वक्तुकामः प्रस्तौति—

भवतीव खलु वा एष योऽग्निं चिनुत इति विज्ञायते ॥ १ ॥

प्रस्तावमात्रमनया श्रुत्या क्रियते, न फलविधानम् । विधिविभक्तेरभावात् । नित्योऽग्निरुत्तरवेदिवत् । अग्निष्टोम उत्तरवेदिरुत्तरेषु क्रतुष्वग्निः, इति नित्यवचनात् । यदि प्रस्तावोऽनया श्रुत्या क्रियते गार्हपत्याचितेः पूर्वमेव प्रस्तावः कर्तव्यः । सत्यमेतत् । इह प्रस्तावववचनस्येदं प्रयोजनं वक्ष्यमाणा धर्मा महाग्नेरेव यथा स्युरिति । के पुनस्ते । आनुदृष्ण्यादयो महाग्नेरेवेति । कात्यायनीये शुल्बे महाग्नेरेवैते धर्मा इति स्पष्टमुक्तम् । किं चास्यैवाग्निशब्देन निरुपपदेन चोदिता धर्मा यथा स्युरिति । यथा तं वा एतं यजमान एव चिन्वीतेति यजमानो महाग्नेरेव कर्ता न गार्हपत्यादेः। गार्हपत्यधिष्ण्यानामध्वर्युरेव कर्ता । पश्चाद्विधातव्यानां धिष्ण्यानां पूर्वं विधानस्यैतत्प्रयोजनम् । योऽग्नेश्चेता स भवत्येव । यद्यपि बहवो भ्रातृव्या इति क्रियतेऽनया श्रुत्या ॥ १ ॥

वयसां वा एष प्रतिमया चीयत इत्याकृतिचोदनात् ॥ २ ॥

वयसा पक्षिणामेषोऽग्निः प्रतिमया प्रकृत्या चेतव्य इति । आकृतेः स्वरूपस्य विधानं क्रियतेऽनया श्रुत्या । सा चोत्पत्तिश्चेयमि(स चोत्पतता छायये)त्यर्थः । वैशब्दो निश्चये । यतोऽसावप्याचार्यो वक्ष्यति वक्रपुच्छो व्यस्तपक्ष इति । तस्माच्छ्येनचिदेव प्रथमः । शुल्बान्तरे चोक्तं श्येनचिदग्नीनां प्रथमाग्निरिति । यदि श्येनो नित्यः कथं स्वर्गकाम इति । यूपद्रव्यवत् । यथा खादिरं स्वर्गकामस्येति खादिरस्य नित्यत्वं काम्यत्वं च ॥२॥

प्रत्यक्षाविधानाद्वा यावदाम्नातेन ॥ ३ ॥

वाशब्दः पक्षव्यावृत्तौ । नैषाऽऽकृतिचोदना नापि श्येनः प्रकृतिः । कुतः प्रत्यक्ष-विधानात् । प्रत्यक्षमेवात्र विधीयते पक्षी भवतीत्यारम्य । पक्षपुच्छानामपि प्रमाणं वि-हितम् । तेन विरोधात् । ननूक्तमाकृतिचोदनेति । नैषा चोदना । नापि विधिः । विधि-विभक्तेरभावात् । चीयत इति निर्दिश्यते न चिनुयाच्चेतव्यमिति (ल्य इति) वा । विध्यन्त-रशेषभूतत्वाच्च पश्यामो न विधायिकेति । ब्रह्मवादिनो वदन्ति न्यङ्ङग्निश्चेतव्या३ उत्ताना इत्यारम्य प्राचीनमुत्तानं पुरुषशीर्षमुपदधाति, इति पुरुषशिरउपधानं विधीयते । अस्य-शेषभूतमिदं न विधायकं श्येनचिदग्नीना प्रथम इति । पीठकः (कङ्क )श्येनमधि-कृत्यैतदुक्तं पुरुषमात्रं पक्षपुच्छस्य समाख्या श्येन इति । तस्मादविरोधः । यावदाम्नातं तावदेव सारूप्यम् । पक्षपुच्छवत्तया सारूप्यं गृहीत्वा वय शब्दो वर्तते । तस्मात्पुरुषमात्रं पक्षपुच्छवानग्निरिति । तमेव प्रकृतिं निश्चित्यान्य आकृतिविशेषा वक्र-पक्षादयः काम्या इति सिद्धम् । वक्ष्यति काम्या गुणविकारा इति ॥३॥

वेणुना सप्त पुरुषान्विमिमीते श्रीन्प्राचः
पुरुषाञ्श्चतुरुदीचस्तिर्यञ्चं पुरुषमात्राणि
पक्षपुच्छानि भवन्ति । आत्मा चतुष्पुरुषः ॥ ४ ॥

अग्निक्षेत्र उक्तलक्षणेन वेणुना विमिमीते मिनोति । स्थण्डिलार्थं क्षेत्रं वक्ष्य-माणेन मार्गेण सर्वतो द्विपुरुष आत्मा द्वाभ्यां चत्वारीति वचनाच्चत्वारि पुरुषक्षेत्रा-ण्यात्मनि ॥ ४ ॥

अरत्निना दक्षिणतो दक्षिणं पक्षं प्रवर्धयति ॥ ५ ॥

अरत्निप्रमाणेन दक्षिणतो दक्षिणं पक्षं प्रवर्धयति दीर्घं करोति । उत्तरतश्चोत्तरं पक्षम् ॥ ५ ॥

प्रादेशेन वितस्त्या वा पश्चात्पुच्छम् ॥ ६ ॥

द्वादशाङ्गुलेन त्रयोदशाङ्गुलेन वा पश्चात्पुच्छं वर्धयेदिति शेष. । एवमर्धाष्टमानि पुरुषक्षेत्राणि भवन्ति ॥ ६ ॥

अरत्निनोत्तरं पक्षम् ॥ ७ ॥

पूर्ववद्व्याख्येयम् ॥ ७ ॥

एकविधः प्रथमोऽग्निः । द्विविधो द्वितीयः । त्रिविध-
स्तृतीयः । त एवमेवोद्यन्त्यैकशतविधात् ॥ ८ ॥

एकविध एकपुरुषः । एकोत्तर चिन्वीतेति । प्रथमातिक्रमे कारणाभावादिति प्रथम एकपुरुषः । विधा इष्टका अस्या विधीयत इति विधाऽग्निक्षेत्रम् । आतश्चोपसर्ग इत्यङ् । एका चासौ विधा चैकविधा । पुरुष इत्यर्थ. । अधिकृतत्वात्पुरुषस्य । एवं सर्वत्र योजनीयम् । उद्यन्ति गच्छन्ति आ एकशतविधात् । अग्निविधानाद् ॥ ८ ॥

तदु ह वै सप्तविधमेव चिन्वीत ॥ ९ ॥

निपातसमूहः पक्षव्यावृत्तौ । एकविधादयो न चेतव्या इति ॥ ९ ॥

सप्तविधो वा प्राकृतोऽग्निस्तत ऊर्ध्वमेकोत्तरानिति विज्ञायते ॥ १० ॥

वेत्यवधारणे । सप्तविध एव प्राकृतोऽग्निः प्रकृतिरित्यर्थः । स्वार्थ एव तद्धितः । सप्तविधादूर्ध्वमेकोत्तरानिति वाजसनेयिनां श्रुतिः । सप्तार्ध एव प्रथमः प्रकृतिश्च । पुरुषमात्रेणेत्यारभ्य सप्तार्धस्य विधानात् । उपधानविधौ दक्षिणे पक्ष उपदधातीति श्रूयते । तत ऊर्ध्वमेकोत्तरानिति । एकपुरुषाधिकाः परमिति द्वितीये प्रयोगेऽर्धनवमं तृतीयेऽर्धदशममित्येवं द्रष्टव्यम् । वाजसनेयकमित्यग्निकरणे विधानाद्विकल्पः । सप्तार्धमपि द्वितीये द्वितीये विहारे चिन्वीतेत्येतदपि लभ्यते ॥ १० ॥

एकविधप्रभृतीनां न पक्षपुच्छानि भवन्ति ॥ ११ ॥

इति संपश्यामः । सप्तार्धविध एव चेतव्य इति । यस्मादेकविधप्रभृतीनां षड्विधपर्यन्तानां न पक्षपुच्छानि भवन्ति । किमुक्तं भवति । यतः पक्षपुच्छानि भवन्ति । तेषु न शेरत इत्यर्थः ॥ ११ ॥

कुत इत्याह—

सप्तविधवाक्यशेषत्वात् ॥ १२ ॥

सप्तविधमग्निं प्रकृत्य तानि विधीयन्त इत्यर्थः । रथंतरं दक्षिणे पक्ष उपदधाति बृहदुत्तरे पक्षे इत्येवमादयो न वियुज्यन्ते । तस्मान्न चेतव्या एकविधादयः । सप्तविध एव चेतव्यः । तेष्वेव पक्षपुच्छानीत्याह । सप्तविधवाक्यशेषत्वात् ॥ १२ ॥

सप्तविधमग्निं प्रकृत्य किमिति न क्रियेरन्नत आह—

श्रुतिविप्रतिषेधाच्च ॥ १३ ॥

विरोधो विप्रतिषेधः । यद्येकविधस्य पक्षपुच्छात्मना विभागः क्रियेत । पक्षपुच्छानां व्यायाममात्रता पक्षपुच्छात्मना गृह्येत । तदेकविधत्वं हीयेत । तस्माद्विरोधः । अतश्च विरोधान्न कर्तव्या एकविधादयः षड्विधपर्यन्ताः ॥ १३ ॥

कथमष्टविधादयो ज्ञातव्या इत्यत आह—

अष्टविधप्रभृतीनां यदन्यत्सप्तभ्यस्तत्सप्तधा विभ-

अष्टविधप्रभृतीनामेकशतविधपर्यन्तानां यदन्यत्सप्तभ्यः सप्तार्धेभ्यस्तत्सप्तधा सप्तार्धेषु यदन्यत्सप्तार्धेभ्यः प्रक्षेप्तव्यमासीत् । तत्सप्तार्धधा विभज्य सप्तार्धेभ्य इति कुत एतल्लभ्यते । सप्तविध इत्युक्तेऽर्धाष्टम एव गृह्यते । अरत्निप्रादेशानां तदङ्गत्वाद्दर्शयति च सप्तविध इति । अष्टविध एकः प्रक्षेप्तव्यः । नवविधे द्वौ । दशविधे त्रय इत्येवं द्रष्टव्य-

ज्य प्रतिपुरुषमावेशयेत् ॥ १४ ॥

मेकशतविधात् । पुरुषं सप्तार्धया विभक्तं कृत्वा प्रतिपुरुषमेको भागः क्षेप्तव्यः । सप्त॰ विधे सप्तसु प्रक्षिप्तासु पञ्चपञ्चाशदधिकं शतद्वयमापद्यते । षोडशानां वर्गः षट्पञ्चाशदधिकं , तच्चतुरश्राच्चतुरश्रमित्यनेन न्यायेनैकार्धपञ्चारत्निप्रादेशेषु पुरुषेषु त्रिंशत्पञ्चदशभागीयाः । अर्धपुरुषेषु पञ्चदश । एवमेकस्मिन्पुरुषक्षेत्रे द्विशतं पञ्चविंशतिश्च पञ्चदशभागीयाः शेरते । अष्टविधे ताः प्रक्षेप्तव्याः । एकस्मिन्पुरुषक्षेत्रे त्रिंशत्पञ्चदशभागीयास्तास्वेकस्मि॰ न्पञ्चदशभागीयक्षेत्रेऽपनीते या रज्जुः सा पुरुषस्थानीया । तस्याः पञ्चमो भागोऽरत्नि॰ स्थानीयः । तेन मानेन कृते सर्वपुरुषक्षेत्रे यावदाप्तं भवति । एवं नवविधादिषु द्रष्टव्यम् ॥ १४ ॥

आकृतिविकारस्याश्रुतत्वात् ॥ १५ ॥

यदि पुरुषक्षेत्रमेकत्र प्रक्षिप्यते विक्रियेताऽऽकृतिः । न विद्यते श्रुतिर्यस्याः सा, अश्रुतिः । आकृतिविकारस्य श्रुतेरभावादित्यर्थः ॥ १६ ॥

पुरुषमात्रेण विमिमीते वेणुना विमिमीत इति विज्ञायते ॥ १६ ॥

पुरुषमात्रेणेति द्रव्यमपेक्षते । वेणुनेति च मात्रामपेक्षते । तयोर्नेष्टाश्वदग्धरथवत्संबन्धः । पुरुषमात्रेण वेणुना मिनोति ॥ ११ ॥

यावान्यजमान ऊर्ध्वबाहुस्तावदन्तराले वेणोश्छिद्रे करोति ॥ १७ ॥

यजमानग्रहणादध्वर्युप्रमाणो वेणुर्गृह्यते । छिद्रयोरन्तरालं यजमानमात्रं यथा संभवति तथा छिद्रे करोति ॥ १७ ॥

मध्ये तृतीयम् ॥ १८ ॥

तयोर्मध्ये वेणुच्छिद्रमेकं करोतीति शेषः ॥ १८ ॥

अपरेण यूपावटदेशमनुपृष्ठ्य माञ्श्वं वेणुं निधाय ॥ १९ ॥

संचरस्य पश्चादनुपृष्ठ्यं पृष्ठ्या यथा भवति तथा वेणुं निधाय ॥ १९ ॥

छिद्रेषु शङ्कून्निहत्योन्मुच्यापराभ्यां दक्षिणा प्राक् परिलिखेत् । आऽन्तादुन्मुच्य पूर्वस्मादपरस्मिन्न॰ तिमुच्य दक्षिणा प्रत्यक्परिलिखेदाऽन्तात् ॥२०॥

त्रिषु च्छिद्रेषु शङ्कून्निहत्यापराभ्यां शङ्कुभ्यामुन्मुच्य दक्षिणा प्रसव्यं परिलिखेत् । आऽन्तात् । पूर्वस्माच्छङ्कोरुन्मुच्यापरस्मिन्नतिमुच्य दक्षिणा प्रत्यक्परिलिखे॰ दाऽन्तात् ॥ २० ॥

उन्मुच्य वेणुं मध्यमे शङ्कावन्त्यच्छिद्रं प्रतिमुच्यो-
पर्युपरि लेखासमरं दक्षिणां वेणुं निधायान्त्ये
छिद्रे शङ्कुं निहत्य तस्मिन्मध्यमच्छिद्रं प्रतिमुच्य
लेखान्तयोरितरे प्रतिष्ठाप्य च्छिद्रयोः शङ्कू निह-
न्ति ॥ (ख० ९) ॥ स पुरुषश्चतुरश्रः ॥ २१ ॥

मध्यमे शङ्कावन्त्यमन्यतरं वेणोश्छिद्रं प्रतिमुच्योपर्युपरि लेखासंभेदं दक्षिणाग्रं वेणुं निधायान्त्ये छिद्रे शङ्कुं निहत्य तस्मिञ्शङ्कौ मध्यमं वेणोश्छिद्रं प्रतिमुच्य लेखान्तयोरितरे छिद्रे प्रतिष्ठाप्य च्छिद्रयोर्लेखान्तयोरेव शङ्कू निहन्ति स चतुरश्रः पुरुषः॥२१॥

एवं विहितान्प्रदक्षिणं चतुर आत्मनि पुरुषान्वि-
मिमीते ॥ २२ ॥

एवं चत्वारि पुरुषक्षेत्राणि आत्मनि यथा भवन्ति तथा प्रदक्षिणं मिनुयात् ॥ २२॥

पुरुषं दक्षिणे पक्षे पुरुषं पुच्छे पुरुषमुत्तरे ॥ २३ ॥

दक्षिणे पक्षे दक्षिणपार्श्वे मध्यमेषु वेणुं प्रतिमुच्योन्मुच्यापराभ्यामित्यादि पूर्ववच्चतुरश्रः पुरुषः । एवमुत्तरपक्षमुत्तरपार्श्वे मध्यमेष्वेव त्रिषु प्रतिमुच्योत्तरपुच्छे पाश्चात्यमध्यमशङ्कौ मध्यमं वेणोश्छिद्रं प्रतिमुच्य तिर्यग्वेणुं निधाय च्छिद्रयोः शङ्कू निहत्योन्मुच्योत्तराभ्यां प्रसव्यं परिलिखेत् । दक्षिणस्मादुन्मुच्योत्तरस्मिन्पुरुषमात्रे शङ्कौ प्रतिमुच्यान्त्यच्छिद्रशङ्कुप्रभृति प्रदक्षिणं परिलिखेत् । उन्मुच्य वेणुं मध्यमे प्रतिमुच्योपर्युपरि लेखासमरं पश्चाद्वेणुं निधायान्त्य इत्यादि पूर्ववत्समानं तत्पुच्छम् ॥ २३ ॥

अरत्निना दक्षिणतो दक्षिणमित्युक्तम् ॥ २४ ॥

गतः ॥ २४ ॥

पृष्ठ्यातो वा पुरुषमात्र्याक्ष्णया वेणुं निधाय
पूर्वस्मिन्नितरं ताभ्यां दक्षिणमंसं निर्हरेत् ॥ २५ ॥

संचरमवशिष्य शङ्कुं निहत्य तस्मात्पश्चात्पुरुषमात्रे शङ्कुं निहत्य तस्मिन् पुरुषं चतुरश्राक्ष्णया समं वेणुं प्रतिमुच्य पूर्वस्मिञ्शङ्कावितरं पुरुषमात्रे वेणुं निधाय प्रतिमुच्य ताभ्यां दक्षिणमंसं निर्हरेत् ॥ २५ ॥

विपर्यस्य श्रोणी ॥ २६ ॥

अपरस्मिञ्शङ्कौ पुरुषमात्रं प्रतिमुच्य दक्षिणां श्रोणिमुदगपसार्योत्तराम् । एवं श्रोणी विहरेत् ॥ २६ ॥

पूर्ववदुत्तरमंसम् ॥ २७ ॥

गतमेतत् ॥ २७ ॥

रज्ज्वा वा विमायोत्तरवेदिन्यायेन वेणुना विमिमीते ॥ २८ ॥

रज्ज्वा वाऽन्यतरया विमायोत्तरवेदिवद्वेणुना पश्चाद्विमिमीतेऽवधार्थम् ॥ २८ ॥

सपक्षपुच्छेषु विधाभ्यासेऽपचये च विधासम-
करणीं पुरुषस्थानीयां कृत्वा तया विहरेत् ॥ २९ ॥

विधाभ्यासोऽष्टविधप्रभृतिः । विधापचय एकविधादिः । तेष्वेकविधादिषु विधासमकरणी येन वेणुना तदर्धायमं भवतीति स पुरुषस्थानीयः । एवं चतुरश्रं कृत्वा पूर्ववद्विभज्य विहरेत् । सपक्षपुच्छेष्विति वचनमेकविधार्थं तेष्वेकविधादिषु श्येनादिषु क्रियमाणेषु यथैकविधा तत्पञ्चदशधा विभज्य द्वौ भागौ समस्य चतुरश्रं कृत्वा तस्य मानेन वेणुना गृह्णीयात् । स पुरुषस्थानीयः । एवं सर्वत्र यावद्विधं तत्क्षेत्रं समचतुरश्रं कृत्वा पूर्ववद्विभज्य समचतुरश्रं कृत्वा तस्य प्रमाणं गृह्णीयात् । यदा चत्वारि सहस्राण्यशीतितिलाः पुरुषास्तेषां वर्गे एका कोटिः षण्नियुतानि चत्वार्ययुतानि षट् सहस्राणि चत्वारि शतानि ॥

अथाष्टविधः—अष्टभिर्गुणित्वा पूर्वार्धे संयोज्य पञ्चदशांशं द्विगुणीकृत्य मूलं गृह्णीयात् । स तस्य पुरुषो भवति । अपचये त्वर्धसंयोगो नास्ति । अरत्निप्रादेशाभावात् । अन्यत्सर्वमुपचयेन तुल्यम् । अर्धतिलेन वा ऊनाधिकेन वा दोषो न भवतीति विशेषदर्शनात् । तत्र श्लोकः—

आकाशवस्वम्बरवेदवर्गमिष्टप्रवृद्धं तिथिभिर्विभक्तम् ।
लब्धस्य वृद्धस्य यमेन मूलं वृद्धौ क्षये तत्पुरुषस्य मानम् ॥
सदा भवेत्सापचये च वृद्धाविति ।

नन्वेकविधादयोऽपक्षपुच्छाः कर्तव्या इति प्रतिपादितं महता प्रयत्नेन हेतुना दर्शनेन । सत्यमेतत् । कर्तव्या एकविधादय इति कृत्वा चिन्त्यते । यदैकविधादयस्तदा कृत्वर्थतयोपादीयन्ते । तथा श्येनादय आकृतिविकाराः पुरुषार्थाः सन्तस्तद्विकृत्या प्रायीरन् । यथा पुरुषमात्रता विकृत्य पक्षपुच्छाना सप्तार्धविधे श्येनादयः प्रवर्तन्ते । एवं पुरुषमपि विकृत्यैकविधादिषु निविशेरन् । तत्र यदा सपक्षपुच्छत्वमेकविधादीनां तदाऽयं विधिरिति । अष्टविधप्रभृतीनामपि मार्गान्तरेण विधानाददोषः । सपक्षपुच्छेष्विति विधानात्प्रउगादिष्वेकविधादयो न सन्ति । अष्टविधादयश्चेति केचित् । वक्ष्यति च यावानग्निः सारत्निप्रादेश इति । अपरे तु पुनरेकविधादिषु न सन्ति नापचयेष्विति वर्णयन्ति । सारत्निप्रादेश इति वचनात् ॥ २९ ॥

करणानीष्टकानां पुरुषस्य पञ्चमेन कारयेत् ॥ ३० ॥

इष्टकानां करणानि वक्ष्याम इति शेषः । पुरुषस्य पञ्चमेनारत्निना कारयेत् ॥ ३० ॥

**तासामेकैकतोऽध्यर्धास्तद्द्वितीयम् ॥ ३१ ॥**

तासामेवेष्टकानामेकतोऽध्यर्धा अर्धेनाधिकास्तासां करणं द्वितीयं त्रिप्रादेशा पार्श्वमान्यरत्निमात्री तिर्यङ्मानी द्वितीयस्य करणस्य ॥ ३१ ॥

**पुरुषस्य पञ्चमो भाग एकतः प्रादेश एकतस्तत्तृतीयम् ॥ ३२ ॥**

अरत्निः पार्श्वमानी प्रादेशस्तिर्यङ्मानी, तत्तृतीयं करणम् ॥ ३२ ॥

**सर्वतः प्रादेशस्तच्चतुर्थं समचतुरश्राः पञ्चदशभागीयास्तत्पञ्चमम् ॥ ३३ ॥**

अष्टाङ्गुलेन तावत्पञ्चमं तत्करणम् । समचतुरश्रा । किमर्थमिह समग्रहणम् । यस्मिन्नसौ समचतुरश्रा एवेष्टकास्तत्राप्यासां प्रवेशो यथा स्यादित्येवमर्थम् । वक्ष्यत्यणूकाः पञ्चदशभागीयानां स्थान इति । अणूपञ्चदशभागीययोरेकविषयत्वम् ॥ ३३ ॥

**ऊर्ध्वप्रमाणमिष्टकानाम् ॥ (ख० १० ) ॥ जानोः पञ्चमेन कारयेत् ॥ ३४ ॥**

उत्सेधप्रमाणमिष्टकानां जानुप्रमाणपञ्चमम् । द्वात्रिंशदङ्गुलं जानु, तस्य पञ्चमभागेन त्रयोदशतिलाधिकषडङ्गुलेन कारयेत् । महाग्नेरिष्टकानामेवैतत् । महाग्नेः करणानि विधाय विधानात् ॥ ३४ ॥

**अर्धेन नाकसदा पञ्चचोडाना च ॥ ३५ ॥**

जानुपञ्चमार्धेन नाकसदा पञ्चचोडाना चोत्सेध सप्ततिलाधिकाङ्गुलित्रयोत्सेधेन कारयेत् ॥ ३५ ॥

**यत्पच्यमानानां प्रतिह्रसेत्पुरीषेण तत्संपूरयेत् ॥ ३६ ॥**

पच्यमानानामिष्टकानामुत्सेधतश्च परिमाणतश्च प्रतिह्रासो भवेत्तत्पुरीषेण पूरयेत् ॥ ३६ ॥

कुत इत्याह—

**अनियतपरिमाणत्वात्पुरीषस्य ॥ ३७ ॥**

नियतपरिमाणा इष्टका अनियतपरिमाणं पुरीषमिच्छेत्तत्पुरीषं प्रक्षेप्तव्यमिति नियमाभावात् । तेन च पूरयितव्यम् ॥ ३७ ॥

**उपधानेऽध्यर्धा दश पुरस्तात्प्रतीचीरात्मन्युपद्-**

दश पश्चात्प्राचीः ॥ ३९ ॥

प्राचीः प्रागायताः ॥ ३९ ॥

पञ्च पञ्च पक्षाग्रयोः पक्षाप्ययययोश्च विशयास्ता सामर्थेष्टकामात्राणि पक्षयोर्भवन्ति ॥ ४० ॥

पञ्च पञ्च पक्षाग्रयोः । दक्षिणायता उदगायताश्च विशयाश्च पञ्च णायताश्च । इष्टकाशब्देन पञ्चमभागीया एव गृह्यन्ते । नाध्यर्धा उपदध्यादिति लिङ्गात् ॥ ४० ॥

पञ्च पञ्च पुच्छपार्श्वयोर्दक्षिणाः । उदीचीश्च पुच्छे प्रादेशमुपधाय ॥ ४१ ॥

पुच्छे प्रादेशमुपधायाऽऽस्मसमीपे यदवशिष्टं तत्प्रादेशमात्रमर्धेष्टकामुपधाय मध्येऽमितः प्रादेशाः षट् । षट्सु वितस्त्या च वर्धनमुक्तम् । कथं प्रादेशमात्रमुपधायेत्युच्यते । यद्यपि वितस्त्या वर्धनमुक्तं तथाऽपि करणान्तरस्याविधानात्प्रादेशक्षेत्रमेवेष्टकाभिश्चेतव्यमिति यदङ्गुलिमात्रं परिगृहीतं तत्पुरीषेण पूरयितव्यम् । अमुमेवार्थं प्रदर्शयितुं प्रादेशमुपधायेत्युक्तं सूत्रकारेण ॥ ४१ ॥

सर्वमग्निं पञ्चमभागीयाभिः प्रच्छादयेत् ॥ ४२ ॥

पञ्चाशदध्यर्धाः सूत्रोक्ताः पुच्छेऽर्धेष्टकाद्वयं प्रादेशाः षडितरत्सर्वमग्निक्षेत्रं प्रथमकरणसंपादिताभिः प्रच्छादयेत् । दशोत्तरं शतं पञ्चमभागीयाः शेरते । पूर्वाभिः सहाष्टषष्ट्यधिकं शतम् ॥ ४२ ॥

पञ्चदशभागीयाभिः संख्यां पूरयेत् ॥ ४३ ॥

एकस्मिन्पञ्चमभागीयक्षेत्रे नव पञ्चदशभागीयाः शेरते । पतत्तः पञ्चभागीयाः । अथवा विभज्य यत्र क्वापि पञ्चदशभागीयाः क्षेप्तव्याः । तत्रापि मन्त्रोपधानसौकर्यार्थं प्रदेश उच्यते । आत्मनि द्वितीयायां नित्या, मध्ये द्वयमुपधायाष्टादशाष्टम्यां च नित्या अष्टादश । एवं द्विशतः प्रस्तारः ॥ ४३ ॥

अपरस्मिन्प्रस्तारेऽध्यर्धा दश दक्षिणत उदीचीरात्मन्युपदध्याद्दशोत्तरतो दक्षिणाः ॥ ४४ ॥

आत्मनि दक्षिणत उदीचीरुदगायता दशाध्यर्धा उपदधाति । आत्मन्येवोत्तरतो दशाध्यर्धा दक्षिणायताः ॥ ४४ ॥

यथा प्रथमे प्रस्तारे पक्षौ तथा पुच्छम् । यथा पुच्छं तथा पक्षौ । विपरीताऽप्यये ॥ ४५ ॥

पुच्छाग्रे पञ्चाप्यर्धाः प्रागायताः । दक्षिणे पक्षे पश्चात्पञ्च प्रागायताः पुरस्ताच्च पञ्च प्रत्यगायताः । उत्तरे पक्षे चैवं प्रागायताः प्रत्यगायताश्च । पुच्छाप्ययेऽप्यर्धाः पञ्च प्रागायताः । तासामर्धेष्टकामात्रा आत्मनि भवन्ति । एवं विपरीता अप्यये । तासां पुरस्तात्पञ्चार्धेष्टका उदीच्यः ॥ ४५ ॥

सर्वमग्निं पञ्चमभागीयाभिः प्रच्छादयेत् । पञ्चद-
शभागीयाभिः संख्यां पूरयेत् ॥ ४६ ॥

गतमेतत् । पूर्ववद्द्विशतः प्रस्तारः ॥ ४६ ॥

व्यत्यासं चिनुयाद्यावतः प्रस्ताराश्चिकीर्षेत् ॥ ४७ ॥

गतम् ॥ ४७ ॥

पञ्च चितयो भवन्ति पञ्चभिः पुरीषैरभ्यूहतीति
विज्ञायते । पुरीषान्ता चितिरर्थान्तरत्वात्पुरी-
षस्य ॥ ४८ ॥

'पञ्च चितयो भवन्ति पञ्चभिः पुरीषैरभ्यूहति' इत्यस्याः श्रुतेरयमर्थः । पुरीषान्ता चितिः, इति श्रुतिरर्थान्तरत्वात् पुरीषस्य । इष्टकासंधानार्थं पुरीषम् । तस्माच्चितिस्तदर्थत्वात्तद्ग्रहणेन गृह्यते ॥ ४८ ॥

जानुदघ्नं सहस्रं चिन्वीत प्रथमं चिन्वानः ॥ ४९ ॥

यः प्रथमं चिनोति स जानुदघ्नं चिनुयात् सहस्रसंख्यायुक्तं च । महाग्निमेवाधिकृत्य विधानान्न शालामुखीयधिष्णियानां सहस्रसंख्यायामन्तर्भावो नापि जानुदघ्नता ॥४९॥

नाभिदघ्नं द्विषाहस्रं द्वितीयम् ॥ ५० ॥

नाभिदघ्नमुत्सेधतो द्विषाहस्रं द्वितीयं चिन्वानः ॥ ५० ॥

आस्यदघ्नं त्रिषाहस्रं तृतीयम् ॥ ५१ ॥

आस्यप्रमाणं तृतीयं चिन्वानः । त्रिषाहस्रं च । ग्रीवदघ्नमित्यस्मदीया श्रुतिः॥५१॥

उत्तरमुत्तरं ज्यायाः्सं महान्तं बृहन्तमपरिमितं
स्वर्गकामश्चिन्वीतेति विज्ञायते ॥ ५२ ॥

उत्तरमुत्तरमाहारमाहरेत् । ज्यायान्विष्काम्भ्यासेन महानुत्सेधतो बृहत्परिमाणतः । अपरिमितं सहस्रादिभ्यः स्वर्गकामस्य । स्वर्गकाम इति वचनादग्निकल्पे वाजसनेयकमिति वचनाच्च विकल्पः ॥ ५२ ॥

द्विषाहस्रे द्विप्रस्ताराश्चितयो भवन्ति । त्रिषाहस्रे
त्रिप्रस्ताराः । चतुर्थप्रभृत्याहारेषु नित्यामिष्टका-
परिमाणम् ॥ ५३ ॥

इष्टकापरिमाणमिह त्रिषाहस्रमित्युच्यते । त्रिषाहस्रमेव नियतम् । यदीदं नोच्येत व्यनीकवदावृत्तिः स्यात् । अन्यत्र विधानात् ॥ ५३ ॥

अमुमेवार्थं दर्शयितुं श्रुतिं दर्शयति—

विज्ञायते च न ज्यायाᳬसं चित्वा कनीयाᳬसं चिन्वीतेति ॥ ५४ ॥ ( ख० ११ ) ॥

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चविंशप्रश्ने तृतीयः पटलः ॥

ज्यायांसं द्विसाहस्रं त्रिसाहस्रं वा चित्वा कनीयांसं सहस्रं न चिनुयादिति प्रतिषेधः ॥ ५४ ॥ ( ख० ११ ) ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां पञ्चविंशप्रश्ने तृतीयः पटलः ॥

---

अथ चतुर्थः पटलः ।

---

चतुरश्राभिरग्निं चिनुत इति विज्ञायते ॥ १ ॥

अस्याः श्रुतेरर्थस्तत्वर्थते—किं समानानां चतुरश्राणां दीर्घाणां चाविशेषग्रहणमाहोस्वित्समानानामेवेति । कुतः । विशेषाश्रवणात् । न कश्चिद्विशेषः श्रूयते ॥ १ ॥

तस्मादविशेषेणेति प्राप्ते—

समचतुरश्रा अनुपपदत्वाच्छब्दस्य ॥ २ ॥

समचतुरश्रा एव ग्राह्याः । कुतोऽनुपपदत्वाच्छब्दस्य । यत्रोपपदं न श्रूयते दीर्घो विषम इति वा तत्र समचतुरश्र एव । मुख्यत्वात् । मुख्येऽर्थे प्रथमं प्रत्ययो भवति । यतः प्रतीयते तस्यार्थो भवति । इतरत्र गौणः । तस्मात्समचतुरश्राभिरेवोपधातव्यः । नाध्यर्धाभिरिति स्थितम् ॥ २ ॥

पादमात्र्यो भवन्ति । अणूकमात्र्यो भवन्ति । ऊर्वस्थिमात्र्यो भवन्ति । अरत्निमात्र्यो भवन्ति । प्रादेशमात्र्यो भवन्तीति विज्ञायते ॥ ३ ॥

चतस्र एताः श्रुतयः ॥ ३ ॥

ताः स्वयमेव व्याचष्टे—

चतुर्भागीयाऽणूकं पञ्चमभागीयाऽरत्निस्तयोर्वेर्स्थि ॥ ४ ॥

अणूकशब्दः पुरुषचतुर्थस्य वाचकः । अरत्निः पञ्चमस्य । तथा तेनैव प्रकारेणोर्वस्थि षष्ठस्य । षड्भागीया इति शुल्बान्तरे ॥ ४ ॥

पादेष्टका पादमात्री । तत्र यायाकामी शब्दार्थस्य विशयित्वात् ॥ ५ ॥

चतुर्थभागीयः पाद इति संज्ञा विहिता शास्त्रान्तरे । पादशब्देन प्रमाणचतुर्थभागो गृह्यते क्षेत्रचतुर्थभागश्च । पादः प्रमाणमस्याः पादमात्री । पादशब्दस्य संबन्धिशब्दत्वात्पुरुषचतुर्भागोऽपि गृह्यते । अणूकादिचतुर्भागश्च संनिहितत्वात्तेषां पादेष्टकाभिरित्युक्तेः। पुरुषचतुर्भागोऽणूकादिचतुर्भागाश्च प्रतीयन्ते । कुतः। शब्दार्थस्य विशयित्वात् । वक्ष्यति चाणूकाः पञ्चदशभागीयानां स्थान इति । संख्यापूरणेऽणूकानां प्रवेशं दर्शयति—ऊर्वस्थ्यरत्न्योरेकार्थत्वं केचिदिच्छन्ति । तैः पञ्चदशभागीयाभिः संख्यापूरणं क्रियते । तेषां दर्शने प्रस्तारा न युज्यन्ते । सहस्रसंख्या तु पूर्यते । प्रतिप्रस्तारं पूरयेदिति वचनमनर्थकमापद्येत । ये प्रस्तारास्ते द्विशता इति वचनान्न युज्यन्ते। तस्मात्पूर्वोक्त एवार्थो ग्राह्यः । सर्ववचनानामर्थत्वाय ॥ ५ ॥

उपधानेऽष्टावष्टौ पादेष्टकाश्चतुर्भागीयानां पक्षाग्रयोर्निदध्यात् ॥ ६ ॥

उपधानकालेऽष्टावष्टौ चतुर्भागीयानां पादेष्टकाः पक्षाग्रयोरुपदध्यात् ॥ ६ ॥

संध्योश्च तद्वदात्मानं षडङ्गुलोपे(लावे)ताः ॥ ७ ॥

अष्टावष्टाविति ता विधेयाः। आत्मानं षडङ्गुलमात्रमवेता अवगता व्याप्ता इति यावत्। नवाङ्गुलमात्रं पक्षयोः ॥ ७ ॥

श्रोण्यंसेऽष्टौ प्राचीः प्रतीचीश्च ॥ ८ ॥

श्रोण्यंसयोश्चतस्रश्चतस्रः पादाः प्राचीः । श्रोण्यंसयोः प्रतीचीः। एवं चतुर्भागीयपादा अष्टाचत्वारिंशत् ॥ ८ ॥

संध्यन्तराले पञ्चमभागीयाः सपादाः ॥ ९ ॥

पक्षसंध्योरन्तराले पञ्चमभागीयाः पादसहिताः । मध्ये पादा दश प्रतीचीः । तासां दक्षिणतः पञ्चविंशतिः पञ्चमभागीया उत्तरतो विंशतिः । एवं संध्यन्तराले पञ्चपञ्चाशदिष्टका उपधेयाः ॥ ९ ॥

पुच्छे प्रादेशमुपधाय ॥ १० ॥

प्रादेशशब्देन। किं क्षेत्रमभिधीयते पुच्छे यत्प्रादेशमिति अथवेष्टकाः प्रादेशेन कारिताः । यदि क्षेत्रमभिधीयते, प्रादेशक्षेत्रे प्रादेशपङ्क्तिरेवोपधातव्या स्यात्। तथा सति भिद्येताग्निः । इतरस्मिन्पक्षे यथा न भिद्यते तथा प्रादेशेष्टका उपधातव्या भवेयुः । प्रादेशमिति जातावेकवचनम् । प्रादेशेष्टकाभिः सहाणूका न शेरते । ते तु पञ्चमभागीयास्ताभिः सह । अतश्चतस्रः श्रोण्यः। पादेष्टकास्त्रयोदश पञ्चमभागीयाः । पूर्वार्धेऽष्टावणूका एवमेकोनत्रिंशत्पुच्छे । अपरे तु पुनरेवं वर्णयन्ति—यस्य विनस्त्या वर्धनं कृतं तत्रापि चतुरश्रभुतिसामर्थ्यात्प्रादेशमित्येष्टकाभिर्व्याप्यत इति । एवमर्थं प्रादेशग्रहणमिति । तस्मिन्नपि पक्ष उक्त उपधानक्रमः ॥ १० ॥

सर्वमग्निं चतुर्भागीयाभिः प्रच्छादयेत् ॥ ११ ॥

पक्षयोर्द्वात्रिंशदष्टाविंशतिरात्मन्युक्ताः पुच्छपूर्वार्धेऽष्टौ ॥ ११ ॥

पादेष्टकाभिः संख्यां पूरयेत् ॥ १२ ॥

पञ्चदशभागीयाभिः संख्यां पूरयेत् । आत्मनि द्वितीयायां रीत्यां मध्यमां चतुर्भागीयां मध्यमे । द्विशतः प्रस्तारः ॥ १२ ॥

अपरस्मिन्प्रस्तारे पुच्छाप्यये पञ्चमभागीया विशयाः ॥१३॥

पुच्छाप्यये विशया उभयस्थाः पञ्चमभागीया उपधेयाः ॥ १३ ॥

ता आत्मनि चतुर्दशभिः पादैर्यथायोगं पर्युप- दध्यात् ॥ १४ ॥

तासामेव पादेष्टकाभिर्विशयाः संस्पृष्टाभिश्चतुर्दशभिरुपदध्यात् । आत्मनि यथा युज्यते । इह षड्भागीयानां करणमुक्तम् । उपधानं नोक्तम् । इह पूर्वत्रार्धेष्टकानामधस्तादुपधेयाः । पुच्छस्य पूर्वार्धे पार्श्वयोस्तिस्रस्तिस्रः षड्भागीया मध्ये चतस्रः शिष्टा द्वादश चतुर्भागीयाः ॥ १४ ॥

सर्वमग्निं पञ्चमभागीयाभिः प्रच्छादयेत्पादेष्टकाभिः संख्यां पूरयेत् ॥ १५ ॥

इह पादेष्टकाशब्देन पुरीषः पूरयितव्यः । चतुर्भागकारिता अणूका गृह्यन्ते । पञ्चमभागीयाश्च कुत उपधेया इति चेदुच्यते—द्वादश चतुर्भागीया आत्मनि प्रथमा रीतिः । पञ्चमभागीयानां द्वितीया रीतिः । चतुर्भागीयानां षष्ठी । प्रादेशानां नवमी । चतुर्भागीयानां शिष्टे पञ्चमभागीयाः । एष प्रस्तारो द्विशतः ।

अत्र केचन याज्ञिका अनुपासितगुरव आचार्याभिप्रायमजानन्त ऊनाभ्यधिकप्रस्तारं कुर्वन्ति । अस्य तु सूत्रकारस्य प्रतिप्रस्तारं पूरयेदिति वदतस्तदनभिमतमेव । यद्येवमपि तस्याभिमतमभविष्यत् सर्वत्र प्रतिप्रस्तारं पूरयेदिति नावक्ष्यत् । उक्तं च तस्माद्द्विशतः प्रस्तारः कर्तव्य इति । तत्र श्लोकाः—

अष्टौ श्रोण्यंसयोश्च स्युः पाश(दाः)सूत्रकृतेरिताः ।
तासां मध्ये ह्यर्धेष्टका (चतुर्थ्यः स्यु)श्चतुर्दश चतुर्दश ॥
संध्यन्तराले पञ्चम्यः पादैश्च दशभिः सह ।
तासां मध्ये दश प्रोक्ताः प्राच्यः स्युः शुल्बकर्मणि ॥
अष्टौ पुच्छस्य पूर्वार्धे चतुर्थ्यः शिष्ट एव तु ।
द्वितीया नवमी चैव चतुर्थीनामथाऽऽत्मनि ॥
उदीच्य एवं नित्यं स्युर्मध्याः पञ्चमपादकैः ।
कृताभिश्चतुरश्राभिरणूकोर्वस्थ्यरत्निभिः ॥
अस्या एव सपादाभिः प्रस्तारो द्विशतः कृतः, इति ॥ १६ ॥

व्यत्यासं चिनुयायावतः प्रस्ताराथ्यिकर्षेत् ॥ १६ ॥ (ख० १२ ) ॥

गतमेतत् ॥ १६ ॥ ( ख० १२ ) ॥

ऋत्वर्थेनोपादीयमानानामेकविधादीनामपक्षपुच्छत्वं प्रतिपादितम् । तथा तेषामुपधानविधिः कथं भवतीत्युच्यते —

एकविधप्रभृतीनां करणीं द्वादशेन त्रयोदशेन वेष्ट-
काः कारयेत् ॥ १७ ॥

करणानां द्वादशेन त्रयोदशेन कृतैः समचतुरश्रैरिष्टकाः कारयेत् । सर्वतो द्वादशेनैकं करणम् । सर्वतस्त्रयोदशेन द्वितीयम् ॥ १७ ॥

पादेष्टकाश्च ॥ १८ ॥

द्वादशविधास्त्रयोदशविधाश्चार्धेष्टकाश्चेति शुल्बान्तरम् । अस्माकमपि प्रउगेऽर्धेष्टकाः कार्याः । एकविधादिष्वपि यदि प्रथमप्रस्तारो द्वादशभिर्द्वितीयस्त्रयोदशभिरित्यस्मिन्पक्षेऽर्धेष्टकाः कार्याः । इतरथा संख्या न पूर्यत एव ।

द्विविधे मानिका रज्जुः सप्तत्या च शतेन च ।
अङ्गुलीनां मिता सा स्यादूनाऽष्टैर्दशभिस्तिलैः ॥
त्रिविधे मानिका रज्जुरष्टोत्तरशतद्वया ।
पङ्क्तिभिरेव तिलैरूना गणकैः परिकल्पिता ॥
विधस्यापि चतुर्थस्य मानिका रज्जुरुच्यते ।
मिता शतद्वयेनाथ चत्वारिंशाधिकेन च ॥
विधानां पञ्चमस्येयमष्टषष्टिः शतद्वयी ।
एकादशतिलैर्युक्तां मानिकां गणका विदुः ॥
चतुर्भिश्च नवत्या च शताभ्यां च मिता भवेत् ।
त्रिभिरेव तिलैरूना षड्विधस्य विधानिका ॥
उपधानेऽभितः पादास्तिस्रो रीत्योऽथ द्वादश ॥ इति ।
ततः पञ्च त्रयोदश्यस्तत्र एका त्रयोदशी ।

पादरीतिस्तयाऽभिधीयते । एका त्रयोदशी पादरीतिस्तत्र एका त्रयोदशी । तत-स्तिस्रोऽभितः पादाः । तिस्रो रीत्योऽथ द्वादश्यः ।

द्वितीयायां नित्यमेका नित्यमेका त्रयोदशी ।
द्वादशी च चतुर्थी च तेभ्योऽन्योऽष्टमी प्रस्तारः ॥

अपरस्मिन्प्रस्तारे द्वे रीत्यौ त्रयोदश्योरेका त्रयोदशी पादा । तत्र एका अभितः पादा त्रयोदशी । ततश्चतस्रो द्वादश्य इत्यादि । अथ मध्यमाः पादेष्टकाश्चतुर्भेदाः प्रस्तारो द्विशतः कृत इति भाष्यकृत् ॥ १८ ॥

व्यत्यासं चिनुयाद्यावतः प्रस्ताराश्चिकीर्षेत् ॥ १९ ॥

गतमेतत् ॥ १९ ॥

एकविधप्रभृतीनां प्रथमाहारेण द्वितीयेन तृतीयेन
यो युज्येत सर्वेषां यथाश्रुति संख्या तथोर्ध्वप्रमाणम् ॥ २० ॥

एकविधप्रभृतीनां सर्वेषां प्रथमाहारे द्वितीयाहारे च यथा संख्या श्रूयते। किमुक्तं भवति। यदि प्रथमाहारः सहस्रसंख्या जानुदघ्नता च। अथ द्वितीय एत एव ते धर्माः सप्तार्धस्वरूपयुक्ताः। तच्च वचनं सप्तार्धप्रकृतिज्ञापनार्थम् ॥ २० ॥

काम्या गुणविकारा गुणशास्त्रत्वात् ॥ २१ ॥

काम्याः प्रउगादयो गुणविकाराः। किमुक्तं भवति। गुणफलसिद्धिर्नाग्नेः। कुतः। गुणशास्त्रत्वात्। शास्तीति शास्त्रम्। गुणोऽत्र शिष्यते नाग्निः। तस्माद्गुणशास्त्रत्वाद्गोदोहनादिवद्गुणफलान्येतानि ॥ २१ ॥

प्रउगचितं चिन्वीत भ्रातृव्यवानिति विज्ञायते ॥ २२ ॥

प्रउगः शकटपूर्वभागः। तदाकारं चिन्वीत। भ्रातृव्यवान्। यस्य बहवो भ्रातृव्याः एवं चिन्वीत ॥ २२ ॥

शकटाकृतिर्भवति ॥ २३ ॥

गतः ॥ २३ ॥

यावानग्निः सारत्निप्रादेशो द्विस्तावतीं भूमिं चतुरश्रां कृत्वा ॥२४ ॥

एतच्च वचनं सप्तार्धप्रकृतित्वख्यापनार्थम्। पञ्चदशभिरङ्गुलिभिश्च तिलैरूना चतुष्पुरुषा रज्जुस्तावतीं भूमिं करोति। तया रज्ज्वा विहृत्य ॥ २४ ॥

पूर्वस्याः करण्या अर्धाच्छ्रोणी प्रत्यालिखेत्सा नित्या प्रउगम् ॥ २५ ॥

सूत्रोक्तेन मार्गेण श्रोणी परिलिखेत् ॥ २५ ॥

करणानि चयनमित्येकविधोक्तम् ॥ २६ ॥

करणानि च कारयेत्। द्वादशेन त्रयोदशेन सपादेन च। प्रउगाकार एव ॥ २६॥

प्रउगा इष्टकाः कारयेत् ॥ २७ ॥

चतुःपुरुषारत्निना च पञ्चदशभिरङ्गुलीभिस्तिलैरेकविंशत्या परिमिता अर्धाक्षसाक्षयोः प्रमाणम्। तस्या द्वादशेन च त्रयोदशेन च करणानि च कारयेत्। द्वादश्याः प्रथमे प्रस्तारे प्रउगमुख्या रज्जुरीषामात्री भवति। चतुःषष्टिः पादेष्टकाश्चतस्रश्चतस्रः श्रोण्योश्चतस्रोऽर्धेष्टकाः श्रोण्योरेव चतुर्भिर्द्वादशोत्तरं शतं द्वादश्यः। अन्यस्मिन्प्रस्तारे त्रयोदश्यः श्रोण्योः पादाश्चत्वारिंशद्द्वावर्ध्यावष्टपञ्चाशदधिकशतं त्रयोदश्यः। प्रस्तारो द्विशतः। एवं व्यत्यासं चिनुयात्। तत्र श्लोकः—

ऊनविंशत्यरत्निभिरङ्गुलीभिः सहाष्टभिः ।
तिलानां पञ्चविंशत्या मिता पश्चाद्विमानिका ॥
एकविंशत्यरत्निभिरङ्गुलीनां त्रिपञ्चकैः ।
तिलानामेकविंशत्या मिते श्रोके विमानिके ॥
कुर्वन्ति प्रउगमग्निमेतास्तिस्रः समीकृताः ।
आसामेव यथासूत्रं करणानि प्रकल्पयेत् ॥ २७ ॥

उभयतःप्रउगं चिन्वीत यः कामयेत सजातान्
भ्रातृव्यान्नुदेय प्रतिजनिष्यमाणानिति विज्ञायते ।
उभयतः शकटाकृतिर्भवति ॥ २८ ॥

उभयतः शकटमेव चिन्वीत यः कामयेतोरपन्नानुत्पत्स्यमानांश्च शत्रून्बाधेयेति ॥२८॥

यथा विमुखे शकटे तदेतदेव दीर्घचतुरश्रं विहृत्य
पूर्वापरयोः करण्योरर्धोत्यावति दक्षिणोत्तरयोर्नि-
पातयेत्सा नित्योभयतःप्रउगः ॥ २९ ॥

तावदेव सप्तार्धस्य द्विगुणम् । इह तु दीर्घचतुरश्रद्विगुणायाः प्रमाणविस्तारः पुरुषद्वयेन त्रिभिररत्निभिः षोडशभिरङ्गुलीभिः सार्धैकविंशत्या तिलैर्मिता तिर्यङ्मानी । द्विगुणा पार्श्वमानी । एवं दीर्घचतुरश्रं विहृत्य तिर्यङ्मानीमध्ये च शङ्कूनिहत्य शङ्कुषु रज्ज्वा वेष्टयित्वा बाह्यतस्त्यजेत् । सप्तषष्टिशतत्रयमङ्गुलीनां चतुर्दशभिस्तिलैः सार्धपादप्रमाणमासां द्वादशेन करणानि कारयेत् ॥ २९ ॥

प्रउगचितोक्त उभयतःप्रउगा इष्टकाः कारयेत् ॥ ३० ॥

उभयतः प्रउगाकारा इष्टकाः पादाश्चोभयतः प्रउगीभूताः । चयनविधिरुक्तः प्रउगे । तत्र श्लोकाः—

त्रिसप्तैस्तिलैर्युक्तां साष्टाविंशशतत्रयीम् ।
प्रउगस्योत्तरस्याग्नेस्तिर्यङ्मानीं विदुर्बुधाः ॥
तिर्यग्द्विगुणितायामे चतुरश्रे हविर्भुजः ।
शङ्कूनिहन्यान्मध्येषु करणेषु चतुर्ष्वपि ॥
रज्जुं शङ्कुषु संयुज्य श्रोण्योरंसान्परित्यजेत् ।
शिष्टं सप्तार्धमेव स्याच्छकटे विमुखे यथा ॥
चतुर्दशतिलैर्युक्तं सप्तषष्टिशतत्रयम् ।
प्रउगस्योत्तरस्यैतद्दीर्घामात्रं प्रकीर्तितम् ॥
ईषाद्वादशभागेन तथा भागोत्तरेण च ।
उभयतःप्रउगीभूताः सपादाः कारयेदिह ॥ इति ॥ ३० ॥

रथचक्रचितं चिन्वीत भ्रातृव्यवानिति विज्ञायते । परिमण्डलो भवति ॥ ३१ ॥

शुल्बान्तरे रथचयनमुक्तमनेनाऽऽचार्येणैकमेवोक्तम् ॥ ३१ ॥
तस्मात्तदेवोच्यते—

यावानाग्निः सारत्निमादेशस्तावतीं भूमिं परिमण्डलां कृत्वा ॥ ३२ ॥

उभयतःप्रउगस्य या तिर्यङ्मानी तया चतुरश्रकरणं कृत्वा तेनेष्टकाः कारयेत् । ताश्चतुरश्रे चतुश्चत्वारिंशदधिकशतमुपधाय ॥ ३२ ॥

तस्मिंश्चतुरश्रमवदध्याद्यावत्संभवेत् ॥ ३३ ॥

प्रधिकाश्चत्वारस्तेषु प्रउगेषु पडिष्टकाः ॥ ३३ ॥

तस्य करण्या द्वादशेनेष्टकाः कारयेत्तासां षट्-मधावुपधाय शेषमष्टधा विभजेत् ॥ ३४ ॥

द्वादशेन कारिता उपधाय शेषं प्रधिकमष्टधा विभजेत् । अष्टभिरुपदध्यात् । तासां करणं वक्ष्यामः—त्रयस्त्रिंशदङ्गुलमष्टभिस्तिलैरूनमेकमेकत्रिंशदङ्गुलं द्वादशभिस्तिलैरूनमेकमष्टाविंशत्यङ्गुलमेकमष्टाविंशत्यङ्गुलं तिलाभ्यां सहैकम् । एतैश्चतुर्भिः फलकैरेकं करणम् । तस्य चतुर्थं फलकं तक्षयेद्यथा चतुराकारं भवति । यथाशारमष्टादशतिलमात्रं भवति तथैकत्रिंशदङ्गुलं द्वादशभिस्तिलैरूनमेकम् । एकविंशत्यङ्गुलमेकादशभिस्तिलैरूनमेकम् । अष्टात्रिंशदङ्गुलं त्रिभिस्तिलैः सहैकम् । नवत्रिंशदङ्गुलं द्वादभिस्तिलैरूनमेकम् । एतैश्चतुर्भिर्द्वितीयं करणम् । अस्य चतुर्थं पूर्ववत्तक्षेत् । शारप्रमाणं तिलाभ्यां सहैकं भवति तथा तक्षेत् । द्वात्रिंशदङ्गुलं तिलेन सहैकम् । तिलाभ्यां सहैकम् । त्रिचत्वारिंशदङ्गुलं दशभिस्तिलैरूनमेकं त्रयस्त्रिंशदङ्गुलं दशभिस्तिलैरूनमेकम् । एतैश्चतुर्भिस्तृतीयं करणम् । द्वात्रिंशदङ्गुलं तिलेन सहैकं द्वात्रिंशदङ्गुलं द्वादशभिस्तिलैः सहैकम् । अष्टाविंशत्यङ्गुलमेकादशतिलैः सहैकम् । पञ्चपञ्चाशदङ्गुलं चतुर्भिस्तिलैरूनमेकम् । एतैश्चतुर्भिश्चतुर्थं करणम् । तस्य चतुर्थं तक्षेत् । पूर्ववत्प्रमाणं ज्ञेयम् । शारप्रमाणं द्व्यङ्गुलं त्रिभिस्तिलैरूनम् । तत्र श्लोकौ—

रज्जुः कृतान्यतःपाशा सप्ताशीतिशताङ्गुला ।
विमानं रथचक्रस्य करोत्येषा तु मण्डलम् ॥
चतुरश्रकरणी रज्जुश्चतुःषष्टिशतद्वयी ।
तिलैस्त्रयोदशैर्युक्ता रथचक्रे हविर्भुजे ॥ ३४ ॥

उपधाने चतुरश्रस्यावान्तरदेशान्प्रति स्रक्तीः संपा-
दयेत् । मध्यानीतरस्मिन्प्रस्तारे व्यत्यासं चिनु-
याद्यावतः प्रस्ताराश्चिकीर्षेत् ॥ ३५ ॥ (ख० १३) ॥

गतमेतत् ॥ ३५ ॥ (ख० १३) ॥

एष एव प्रकारो मण्डलैः श्मशाने द्रोणे च । तत्राऽऽह—

द्रोणचितं चिन्वीतान्नकाम इति विज्ञायते ॥ ३६ ॥

अन्नकामस्य द्रोणचितिरिति श्रुतिः ॥ ३६ ॥

सर्वस्या भूमेर्दशमं त्सरुः ॥ ३७ ॥

द्वादशचतुर्भागीया क्षेत्रमरत्निप्रादेशस्य दशमोंऽशः षष्ठचङ्गुलप्रमाणं तिर्यङ्मानी। तस्य द्विकरणी पार्श्वमानी । तस्याक्ष्णयारज्ज्वा कृते चतुरश्रे द्वादशचतुर्भागीया क्षेत्रं भवति। यत्त्सरोः प्रमाणं तयैव त्रिगुणीकृतया द्रोणः ॥ ३७ ॥

तस्य पुच्छेन निहास( निर्हार ) उक्तः ॥ ३८ ॥

पुच्छेनैव मानमार्गो व्याख्यातः ॥ ३८ ॥

तस्य करण्या द्वादशेनेष्टकाः कारयेत् ॥ ३९ ॥

तस्येति द्रोणः परामृश्यते । न त्सरुः । स न त्रिकोणः । समदेशेन चतुर्भागीयेने-त्यर्थः ॥ ३९ ॥

अध्यर्धाः पादेष्टकाश्च ॥ ४० ॥

अत्र विप्रतिपन्ना याज्ञिका अक्ष्णया पादमिच्छन्ति । केचिद्दीर्घपादमर्धेष्टकाः कर्तव्याः । ताभिर्विना संख्यापूरणस्याशक्यत्वात् । व्यक्तमुक्तं शुल्बान्तरे—अर्धेष्टकाश्चेति । इहापि चकारादर्धेष्टकाश्चेति । करणानि च षट्त्रिंशदङ्गुलं तिलोनमेकं करण-मेकतोऽध्यर्धं द्वितीयं प्रथमकरणमुभयतोऽक्ष्णया चतुर्वा दीर्घं तेन पादानां तृतीयं कर-णम् । तृतीयेनैव करणेन दीर्घेण वाऽर्धेष्टकानां करणं चतुर्थम् ॥ ४० ॥

उपधानेऽध्यर्धाः पुरस्तात् प्रतीचीरात्मन्युपदध्यात्।
त्सर्वेग्रे श्रोण्योश्च प्राचीः सर्वमग्निं चतुरश्राभिः
प्रच्छादयेत्। पादेष्टकाभिः संख्यां पूरयेत् । अपर-
स्मिन्प्रस्तारेऽध्यर्धा दश दक्षिणत उदीचीरात्मन्यु-
पदधाति । उत्तरतश्च दक्षिणा त्सरुपार्श्वयोर्दक्षिणा
उदीचीश्च सर्वमग्निं चतुरश्राभिः प्रच्छादयेत् ।

उपधाने यथासूत्रमध्यर्धा उपधाय पूर्वार्धे सप्तदशेष्टका अक्ष्णया भिन्द्यात्तावर्धां । यदि दीर्घार्धेत् पादावुत्तरस्यां रीत्यां नवेष्टका भिन्द्यात् । यथा प्राचीः प्रपादा तथा दक्षिणस्यामष्टौ तथैव प्रार्धारेका द्विवा । तत्र (तथैव) पूर्णः प्रस्तारः । अपरस्मिन्प्रस्तारे

**पादेष्टकाभिः संख्यां पूरयेत् । व्यत्यासं चिनुयाद्यावतः प्रस्ताराश्चिकीर्षेत् ॥ ४१ ॥**

पश्चादात्मन्यष्टादशेष्टकाः करणे भिन्द्यात् । द्वे द्वे इष्टके द्विधा करणेनैव । यदि दीर्घाः पादाः पूर्वस्यां रीत्यां नवेष्टका भिन्द्यात् । अथवा, उदीच्यः श्रोण्योर्द्वे द्वे त्सरोः । पश्चादेकाऽग्रतः । तामध्यर्धाः सप्त रीतयः । अध्यर्धाः पादात्सर्वा उदीच्यः । एवं प्रस्तारो द्विशतः । तत्र श्लोकाः—

मीत्वा त्रिभिस्तिलैरूनं चतुर्भिश्च शतेन च ।
द्रोणस्यैव त्सरोर्मात्रा तस्य त्रिगुणितेन सा ॥
पादा अर्धाश्च भेदाः स्युः करणानि विभावसौ ।
द्रोणाख्ये तु श्मशाने च चतुरश्रे हविर्भुजे ॥
प्रस्तारे प्रथमे पादा यत्र स्युस्तत्र नोत्तरे ।
द्वावर्धौ प्रथमस्तारे चतुर्थस्तूत्तरस्तरे ॥
निधाय चोत्तरे स्तारे अध्यर्धा अपि पूर्वके ।
अध्यर्धा यत्र तत्र स्युः पादा दीर्घा यदि त्वथ ॥
प्राच्यः स्युः प्रथमे स्तारे उदीच्यस्तूत्तरे स्तरे ।
अभितः पादमध्यर्धा रीतयः सप्त चोत्तरे ॥ इति ॥ ४१ ॥

**समूह्यं चिन्वीत पशुकाम इति विज्ञायते ॥ ४२ ॥**

समूह्यमित्युपधानप्रकारविशेषेण कृतिविशेषः । प्रकृतावयं विधिः । नाऽऽकृतिविकारेषु ॥ ४२ ॥

**समूहन्निवेष्टका उपदधाति ॥ ४३ ॥**

अग्निक्षेत्रस्य परित इष्टकाः स्थापयित्वा यथा समूहनं क्रियते तथोपदधाति । सर्वत उपादायोपदधातीति यावत् । स एवोपधानविधिः ॥ ४३ ॥

**दिक्षु चात्वालावटान्खात्वा तेभ्यः पुरीषमभ्यूहतीत्येकेषाम् ॥ ४४ ॥**

प्रतिदिशं चात्वाला भवन्तीत्यापस्तम्बः । 'बहिर्वेदि तेभ्यश्चात्वालेभ्यः पुरीषं पांसूनभ्यूहति' इति श्रुतिः ॥ ४४ ॥

**परिचाय्यं चिन्वीत ग्रामकाम इति विज्ञायते ॥ ४५ ॥**

अयमप्युपधानविधिः ॥ ४५ ॥

**मध्यमाः स्वयमातृण्णां प्रदक्षिणमिष्टकागणैः परिचिनोति स परिचाय्यः ॥ ४६ ॥**

तृतीयायां चितौ स्वयमातृण्णामुपधायेष्टकागणैः प्रदक्षिणं ताभिः स्वयमातृण्णां परित उपदधाति स परिचाय्यः ॥ ४६ ॥

उपचाय्यं चिन्वीत पशुकाम इति विज्ञायते ॥ ४७ ॥

पूर्ववत्परिचाय्यविधिवद्व्याख्यातः ॥ ४७ ॥

परिचाय्येनोक्तः श्मशानचितं चिन्वीत यः कामयेत पितृलोक ऋध्नुयामिति विज्ञायते ॥ ४८ ॥

श्रूयते ब्राह्मणेऽस्मच्छाखायाम् ॥ ४८ ॥

द्वयानि खलु श्मशानचितानि चतुरश्राणि परिमण्डलानि च तत्र याथाकामी शब्दार्थस्य च विप्रयित्वात् ॥ ४९ ॥

चतुरश्राकाराणि सन्ति श्मशानानि परिमण्डलाकाराणि च । तत्रोभयतः प्रवृत्तिः । शब्दस्योभयप्रवृत्तेः । यदि वर्तुलाकारो रथचक्रवत् ॥ ४९ ॥

चतुरश्रं वा यस्य गुणशास्त्रं च चतुरश्रः ॥ ५० ॥

गतमेतत् । यस्य गुणशास्त्रं पितृलोकसंबद्धम् । तच्चतुरश्रे श्मशाने न वर्तुले । बाला हि तत्र निक्षिप्यन्ते । येषु पैतृमेधिकक्रिया । तेषां पितॄणां संबन्धो बुद्ध्या च । तस्माच्चतुरश्र एव चेतव्यः ॥ ५० ॥

रसरुवर्जं द्रोणचितोक्तः ॥ ५१ ॥

यदि चतुरश्रस्तदा रसरुवर्जं द्रोणचितोक्तः । तत्सर्वं द्रोणचित्येव व्याख्यातम् ॥ ५१ ॥

छन्दश्चितं चिन्वीत पशुकाम इति विज्ञायते ॥ ५२ ॥

छन्दोभिरेव यत्रेष्टकाश्चीयन्ते तं छन्दश्चितं पशुकामश्चिनुयादित्यस्याः श्रुतेरर्थः॥५२॥

श्रुतिद्वयेन व्याचष्टे—

सर्वैश्छन्दोभिश्चिनुयादित्येकम् । प्राकृतैरित्यपरम् ॥ ५३ ॥ ( ख० १४ ) ॥

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चविंशप्रश्ने चतुर्थः पटलः ।

---

सर्वैश्छन्दोभिर्दाशतयीभिश्चेतव्या इत्येका श्रुतिः । प्राकृतैः प्रकृतौ यानि च्छन्दांस्यग्निर्मूर्धेत्यादीनि तैरेवेत्यपरा श्रुतिः ॥ ५३ ॥ (ख० १४ ) ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां पञ्चविंशप्रश्ने चतुर्थः पटलः ॥

अथ पञ्चमः पटलः ।

**श्येनचितं चिन्वीत स्वर्गकाम इति विज्ञायते ॥ १ ॥**

श्येन इव चेतव्यः श्येनचित् । तदाकारं चिन्वीत । आकृत्याः फलमाकारसंपादनं स्वयमेव वक्ष्यति ॥ १ ॥

**वक्रपक्षो व्यस्तपुच्छः श्येनाकृतिर्भवति ॥ २ ॥**

अनृजुपक्षो व्यस्तपुच्छोऽसंकोचितपुच्छः ॥ २ ॥

कथं वक्रता—

**पश्चात्प्राङुदूहति ॥ ३ ॥**

उन्नयति ॥ ३ ॥

**पुरस्तात्प्रत्यङुदूहति ॥ ४ ॥**

एवमेव वक्रौ पक्षौ यस्य स वक्रपक्षः ॥ ४ ॥

**एवमिव हि वयसां मध्ये पक्षिनिर्णामो भवतीति विज्ञायते ॥५॥**

हिशब्दः प्रसिद्धौ । एवमेव वयसामुत्पततां मध्ये पक्षिनिर्णामो नमनं भवतीति श्रुतिः ॥ ५ ॥

**यावानग्निः सारत्निप्रादेशः सप्तविधः संपद्यते ॥ ६ ॥**

अरत्निना प्रादेशेन च वर्धितोऽग्निः प्राकृतो यावान्संपद्यते ॥ ६ ॥

**प्रादेशश्चतुर्थमात्मनश्चतुर्भागीयाश्चाष्टौ ॥ ७ ॥**

गृह्णीयादिति शेषः । सारत्निप्रादेशाग्नौ यत्प्रादेशं पुच्छ आत्मनश्चतुर्थं पुरुषेऽत्र चतुर्भागीयाश्चाष्टौ शिष्टे पुरुषेऽष्टौ चतुर्भागीयाः क्षेत्रं च गृहीत्वा ॥ ७ ॥

**तासां तिस्रः शिरः ॥ ८ ॥**

तासां चतुर्भागीयाश्चतस्रश्चतुर्भागीयाः शिरसि निधातव्याः ॥ ८ ॥

**इतरत्पक्षयोर्विभजेत् ॥ ९ ॥**

विभज्य क्षिपेदित्यापस्तम्बः । षडङ्गुलमात्रं प्रादेशे षष्टचङ्गुलं पुरुषे चतुर्भागीयासु पञ्चसु पादोनं नवदशाङ्गुलमेतदेवैतस्मिन्पक्षे क्षिपेत् ॥ ९ ॥

**पञ्चारत्निः पुरुषः ॥ १० ॥**

एतत्पुरुषस्य प्रमाणम् ॥ १० ॥

**चतुररत्निर्व्यायामश्चतुर्विंशत्यङ्गुल्योऽरत्निः ॥ ११ ॥**

एतदरत्निप्रमाणम् ॥ ११ ॥

**तदर्धं प्रादेश इति क्लृप्तिः ॥ १२ ॥**

एवं कल्पना । इति शब्दः प्रकारे । अनेन मार्गेण कल्पयेदित्यर्थः । त्रिंशदङ्गुलं चतुर्भागीयम् ॥ १२ ॥

अप्ययान्प्रति श्रोण्यंसानपच्छिन्द्यात् ॥ २२ ॥ ( ख० १५ ) ॥

अप्ययशब्देन पक्षपुच्छशिरसा संधिरुक्तः । तान्प्रत्यपच्छिन्द्यात् । श्रोण्यंसांस्त्यजेत् । शिरसोऽप्ययाद्दारभ्य पक्षाप्ययं प्रति । एवं श्रोण्योरंसे च । एवं द्वे द्वे चतुर्भागीये निरस्ते भवतः । वक्ष्यति–' चत्वारिंशत्परिशिष्यन्ते ' इति ॥ २२ ॥ (ख०१५) ॥

एवमिव हि श्येनम् ॥ २३ ॥

प्रसिद्धं वक्ष्यति च—'यावदाम्नानसारूप्यम् ' इति ॥ २३ ॥

करणं पुरुषस्य पञ्चमायामं षष्ठं व्यासं कारये-
द्यथायोगनतं तत्प्रथमम् ॥ २४ ॥

पुरुषपञ्चमायामं पुरुषषष्ठव्यासमरत्निमात्री पार्श्वमानी षड्भागीया तिर्यङ्मानी यथा युज्यते तथा नतः । नतशब्देन प्रज( ह्म )म्भनमुच्यते । तथा प्रज( ह्म )म्भयेत् । एकामक्ष्णया दीर्घां कुर्याद्यथा युज्यत इति यथायोगः । तत्प्रथमं करणम् । प्रथममित्यस्य संज्ञा ॥ २४ ॥

ते द्वे प्राची संहिते तद्द्वितीयम् ॥ २५ ॥

ते द्वे विपर्यस्ते उपनुत्य मध्यमफलके संसृष्टे यथा तिष्ठतस्तथाविधं करणं द्वितीयम् ॥ २९ ॥

प्रथमस्य षड्भागमष्टभागेन वर्धयेद्यथायोगनतं
तत्तृतीयम् ॥ २६ ॥

प्रथमस्य षड्भागमष्टमभागेन वर्धयेद्दीर्घां कुर्यात् । मात्रा तमक्ष्णया भिन्द्यात् । भित्ता यथा युज्यते । नमनं यथा । तथा योगस्तथा पक्षनमनेऽर्धोऽर्धो युज्यते । तथा नतं वक्रं तृतीयं करणम् ॥ २६ ॥

चतुर्भागीयाऽध्यर्धा तस्याश्चतुर्भागीयामात्रमक्ष्णया
भिन्द्यात्तच्चतुर्थम् ॥ २७ ॥

चतुर्भागीयामध्यर्धां भूमावालिख्य चतुर्भागीयां च त्यजेत् । तथाभूतेष्टका येन करणेन क्रियते तच्चतुर्थं करणम् । षोडशी चतुर्भिरिति वक्ष्यति । तदेतत्करणम् ॥ २७ ॥

चतुर्भागीयार्धं पञ्चमम् ॥ २८ ॥

एकतस्त्रिंशदङ्गुलमन्यतः पञ्चदशाङ्गुलम् । तत्पञ्चमम् ॥ २८ ॥

तस्याक्ष्णया भेदः षष्ठम् ॥ २९ ॥

तस्य पञ्चमस्याक्ष्णया कर्णेन विभज्यत इति भेदः षष्ठम् ॥ २९ ॥

पुरुषस्य पञ्चमभागं दशभागं व्यासं प्रतीची-
नमायच्छेत् । तस्य दक्षिणतोऽन्यमुत्तरतश्च ताव-

अरत्निमात्रायामं प्रादेशव्यासं प्रतीचीनं प्रत्यगायतमायच्छेत् । भूमौ दक्षिणपार्श्वेऽन्यं तथाविधमुत्तरतश्चान्यं तथाविधं तावक्ष्णया कर्णेन दक्षिणापरयोः कोट्योरारभ्य

क्ष्णया दक्षिणापरयोः कोट्योरालिखेत्तत्सप्तमम् ॥ ३० ॥

सूच्यवदालिखेत् । तत्सप्तमम् ॥ ३० ॥

एवमन्यदुत्तरं ज्ञेयं तूत्तरस्याः कोट्या आलिखेत्तदष्टमम् ॥ ३१ ॥

एवमेव कृत्वोत्तरं चतुरश्रमुत्तरस्याः कोट्या आरभ्य दक्षिणा कोटिं प्रत्यालिखेत्स्रौववत्तदष्टमम् ॥ ३१ ॥

चतुर्भागीयाक्ष्णयोभयतो भेदो नवमम् ॥ ३२ ॥

अक्ष्णयोभयतः कर्णेन भेदेन खण्डनं तस्याश्चतुर्भागीयायास्तथाविधं नवमं करणम् । पादमात्रं पादेष्टका त्रिभिरिति वक्ष्यति ॥ ३२ ॥

उपधाने पष्टिः पष्टिः पक्षयोः प्रथमा उदीचीर्निदध्यात् ॥ ३३ ॥

उपदध्यात्त्रिंशत्रिंशद्विपर्यस्य कारिताः । एवमुत्तरपक्षे ॥ ३३ ॥

पुच्छपार्श्वयोरष्टावष्टौ पञ्चयः ॥ ३४ ॥ ( ख० १६ ) ॥

पुच्छस्य पार्श्वयोरुभयोः पञ्चयः । अष्टावेकस्मिन्पार्श्वेऽपरस्मिश्चाष्टौ ॥ ३४ ॥ (

कथमित्याह—

तिस्रोऽग्रे तत एकां ततस्तिस्रस्तत एकाम् ॥ ३५ ॥

एवमुत्तरस्मिन्पार्श्वे विपर्यस्य कारिताः ॥ ३५ ॥

पुच्छाप्यये चतुर्थ्यौ विशये ॥ ३६ ॥

पुच्छे चाऽऽत्मनि च स्थिते तिर्यक् ॥ ३६ ॥

तयोश्च पश्चात्पञ्चम्यावनीकसंहिते ॥ ३७ ॥

तयोः पश्चात्पुच्छेऽनीकसंहिते मेषयूथवत् ॥ ३७ ॥

शेषे दश चतुर्थ्यः ॥ ३८ ॥

पुच्छशेषे चतुर्थ्यो दश तिर्यगायताः ॥ ३८ ॥

श्रोण्यंसेष्वष्टौ प्राचीः प्रतीचीश्च ॥ ३९ ॥

श्रोण्योश्चतस्रः प्रागायता उत्तरस्या दक्षिणस्या च विपर्यस्य कारिताः । अंसयोश्चैवम् ॥ ३९ ॥

शेषे च षड्विंशतिरष्टौ पञ्चयश्चतस्रः पञ्चम्यः ॥ ४० ॥

आत्मनि शेषे शिष्टे देशे षड्विंशतिश्चतुर्थ्यः । अष्टौ पञ्चयः । चतस्रः पञ्चम्यः । तासामुपधानमार्गं उच्यते—विशायनात्मा तिर्यगात्मनि चतुर्दश चतुर्थ्यः । तासां पार्श्वयोर्द्वे द्वे प्राच्यौ प्रतीच्यौ च विपर्यस्य कारिते । एवं पुरस्ताद्द्वे द्वे विपर्यस्य कारिते । उत्तरे

पार्श्वे चतुर्दशानामेव पार्श्वयोर्मध्ये द्वे द्वे तिर्यक् । एताः षड्विंशतिश्चतुर्थ्य उपहिताश्चतस्रश्चतुर्भागीयाः कोणेषु स्थिताः । तासु चतस्रः पञ्चम्यास्तिर्यक् । षष्ठ्यश्चाष्टौ तिर्यगेव ॥ ४० ॥

शिरसि चतुर्थ्यौ विशये (तिर्यक्) तयोश्च पुरस्तात्प्राच्यौ ॥ ४१ ॥

तयोर्विशययोः पुरस्तात्प्राच्यौ चतुर्थ्यौ विपर्यस्य कारिता दक्षिणतः ॥ ४१ ॥

एष द्विशतः प्रस्तारः ॥ ४२ ॥

किमर्थमिदम् । यावता द्विशत एव पारिमाप्येयं योऽयं प्रस्तारो द्विशत इति परिमाप्यते । संख्यां पूरयेदित्युक्ते द्विशत एव पूरयेत् । इतरथा संख्या पूरयितव्येति न ज्ञायते । कस्येति सहस्रसंख्येति चेन्न । प्रतिप्रस्तारं पूरयेदिति वचनमनर्थ[कं वा]मापद्येत । तस्मात्पारिमाप्येयमिति ॥ ४२ ॥

अपरस्मिन्प्रस्तारे पक्षनिर्नामयोः पञ्च पञ्च द्वितीयाः ॥ ४३ ॥

द्वितीया वक्रभूता निर्नामो वक्रप्रदेशः । तस्मिन्प्रदेशे पञ्च पञ्च द्वितीयाः ॥ ४३ ॥

अप्ययोश्च तृतीया आत्मानमष्टभागायेताः ॥ ४४ ॥

पक्षाप्ययोस्तृतीया आत्मानमष्टमभागायेता व्यासाः । चतुर्भागीयेऽष्टमांशमात्मानि स्थिताः । पञ्च पञ्च विपर्यस्य कारिता उत्तरे पक्षाप्यये ॥ ४४ ॥

शेषे पञ्चचत्वारिंशतपञ्चचत्वारिंशतमेषमाः प्राचीर्निदध्यात् ॥ ४५ ॥

दक्षिणे पार्श्वे पञ्चविंशतिर्दक्षिणे पक्षे, उत्तरे पार्श्वे पञ्चविंशतिरुत्तरे पक्षे । विपर्यस्य कारिता दक्षिणे पक्षे विंशतिः ॥ ४५ ॥

पुच्छपार्श्वयोः पञ्च पञ्च सप्तम्योः ॥ ४६ ॥

उत्तरपार्श्वे विपर्यस्य कारिताः ॥ ४६ ॥

द्वितीयचतुर्थ्योश्चान्यतरतः प्रतिसंहितामेकैकाम् ॥ ४७ ॥

द्वितीयायां रीत्यां चतुर्थ्यां च रीत्यामन्यस्मिन्पार्श्व एकैका सप्तमी । एका दक्षिणे पार्श्वे विपर्यस्य कारिता । अपरा उत्तरे पार्श्वे ॥ ४७ ॥

शेषे त्रयोदशाष्टम्यः ॥ ४८ ॥

पुच्छदेशे त्रयोदशाष्टम्यः शेरते ॥ ४८ ॥

श्रोण्यंसेष्वष्टौ चतुर्थ्यौ दक्षिणा उदीचीश्च ॥ ४९ ॥

दक्षिणस्यां दक्षिणायते विपर्यस्य कारिते । उत्तरस्यां श्रोण्यामुदगायते । दक्षिणेंऽसे दक्षिणायिते । उत्तरेऽस उदगायते विपर्यस्य कारिते ॥ ४९ ॥

श्रेपे च त्रिंशतित्रिंशत्पञ्च्य एकां पञ्चमीम् ॥ ५० ॥

चकारेण चतुर्थ्योऽनुकृष्यन्ते । त्रिंशत्पञ्च्य एका च पञ्चमी । तासामुपधानदेश उच्यते—आत्मनो दक्षिणे पार्श्वे दश चतुर्थ्यः । पञ्च प्राचीः पञ्च प्रतीचीः । एवमुत्तरे पार्श्वे । मध्ये त्रिंशत्पञ्च्यः । एका च पञ्चमी । तासां पञ्चदश प्राचीः ॥ ९० ॥

शिरसि चतुर्थ्यौ तयोश्च पुरस्ताच्चतस्रो नवम्यः ॥ ५१ ॥

नवम्यश्चतस्रः पुरस्तात् ॥ ९१ ॥

एष द्विशतः प्रस्तारः ॥ ५२ ॥

गतमेतत् ॥ ९२ ॥

व्यत्यासं चिनुयाद्यावतः प्रस्ताराश्चिकीर्षेत् ॥ ५३ ॥ (ख० १७) ॥

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चविंशप्रश्ने पञ्चमः पटलः ॥

---

यदि व्यत्यासं यावतः प्रस्तारांश्चिकीर्षेत्कर्तुमिच्छेदित्यर्थः ॥ ९३ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां पञ्चविंशप्रश्ने पञ्चमः पटलः ।

---

अथ षष्ठः पटलः ।

श्येनचितं चिन्वीत स्वर्गकाम इति विज्ञायते ॥ १ ॥

गतः ॥ १ ॥

वक्रपक्षो व्यस्तपुच्छः श्येनाकृतिर्भवति ॥ २ ॥

अनृजुपक्षः । व्यस्तपुच्छोऽसंकोचितपुच्छः । व्याख्यातमिदम् ॥ २ ॥

पश्चात्प्राङुदूहति ॥ ३ ॥

उन्नयति ॥ ३ ॥

पुरस्तात्प्रत्यङुदूहति ॥ ४ ॥

गतार्थः ॥ ४ ॥

एवमिव हि वयसां मध्ये पक्षनिर्णामो भवतीति विज्ञायते ॥ ५ ॥

अस्याः श्रुतेरर्थः प्राग्व्याख्यातः ॥ ५ ॥

पुरुषस्य षोडशीभिर्विंशतिः सवत्सारत्निप्रादेशः सप्तविधः संपद्यते । तासां चत्वारिंशदात्मनि तिस्रः शिरसि पञ्चदश पुच्छ एकत्रिंशद्दक्षिणे पक्षे । तथोत्तरे ॥ ६ ॥

अरत्निना प्रादेशेन च वर्धितोऽग्निः प्राकृतो यावान्संपद्यते । स्पष्टमन्यत् ॥ ६ ॥

अध्यर्धपुरुषास्तिर्यग्द्वावायामत इति दीर्घचतुरश्रं विहृत्य श्रोण्यꣳसेभ्यो द्वे द्वे षोडश्यौ निरस्येत् ॥ ७ ॥

श्रोणीभ्यामंसाभ्यां च द्वे द्वे षोडश्यौ । प्रत्येकं निरस्येत्त्यजेत् । अक्ष्णयाऽप्ययान्प्रतीति । तथा श्रोण्यंसेषु चत्वारि चतुरश्राण्यर्धे पुरुषप्रमाणानि कृत्वाऽक्ष्णयाऽन्यार्धानि निरस्य शिष्टं चत्वारिंशदात्मा शिरस्यर्धपुरुषेण चतुरश्रं कृत्वा पूर्वस्याः करण्याः । अथानन्ताविति दक्षिणोत्तरयोर्निपातयेत् ॥ ७ ॥

तदेतत्सर्वं विशदयति—

चत्वारिꣳशत्परिशिष्यन्ते । स आत्मा शिरस्यर्धपुरुषेण चतुरश्रं कृत्वा पूर्वस्याः करण्या अर्धावति दक्षिणोत्तरयोर्निपातयेत् ॥ ८ ॥

[ स्पष्टम् ॥ ८ ॥

तिस्रः परिशिष्यन्ते तच्छिरः ॥ ९ ॥

गतमेतत् ॥ ९ ॥

किं तिस्रः शिष्टास्तच्छिर.—

पुरुषस्तिर्यग्द्वावायामतः षोडशभागश्च दक्षिणः पक्षः ॥ ९ ॥

द्विपुरुषमात्री तिर्यङ्मानी द्विपुरुषा पार्श्वमानी पुरुषषोडशभागश्चार्धाङ्गुलमात्रो दक्षिणपक्षायामः ॥ १० ॥

तथोत्तरः ( पक्षः ) पक्षाग्रे पुरुषचतुर्थेन चत्वारि चतुरश्राणि कृत्वा तान्यक्ष्णया व्यवलिख्याधानि निरस्येत् ॥ ११ ॥

पक्षयोरग्रे प्रत्येकं पुरुषचतुर्थप्रमाणेन चत्वारि चतुरश्राणि कृत्वा तान्यक्ष्णया कर्णेनाऽऽलिख्यार्धानि निरस्येत्त्यजेत् । सूच्यवद्दक्षिणपक्षाग्राणि सौववदुत्तरपक्षाग्राणि बहिर्भूतानि निरस्येत् ॥ ११ ॥

एकत्रिꣳशत्परिशिष्यन्ते ॥ १२ ॥

द्विपुरुषायामे द्वात्रिंशच्छोडश्यो भवन्ति षोडशभागेन चैका । तासु द्वयोरुत्यन्तयोरेकत्रिंशत्परिशिष्यन्ते ॥ १२ ॥

पक्षाग्रमुत्सृजन्मध्ये पक्षस्य प्राचीं लेखामालिखेत् ॥ १३ ॥

पक्षाग्रमिति पुरुषचतुर्थेन चतुरश्राणि लक्ष्यन्ते । पक्षायामे पुरुषचतुर्थार्धभागमुत्सृज्येत्यर्थः । मध्ये पक्षस्य प्रागायतां लेखामालिखेत् ॥ १३ ॥

पक्षाप्यये पुरुषं नियम्य लेखायां पुरुषान्ते
निर्तोदं कुर्यान्नितोदात् प्राचीनं पुरुषान्ते नितो-
दयोर्नानान्तावालिखेत्पक्षसंनमनम् ॥ १४ ॥

आत्मपक्षसंधौ पुरुषमात्रं वेणुं नियम्य लेखायामेव पुरुषस्यान्ते वेणोरन्ते लक्षणं कुर्यात् । तस्मान्नितोदात्प्राचीनं प्रागायतं वेणुं लेखायामेव निधायान्त्ये छिद्रे शङ्कुं लक्षणं वा निहत्य नितोदयोरन्तौ नाना आलिखेत् । अपरस्मान्नितोदादारभ्यापरान्तमालिखेत् । पूर्वस्मान्नितोदाच्चाऽऽरभ्य पूर्वमिति । तत्पक्षनमनं पक्षस्य वक्रता ॥ १४ ॥

एतेनोत्तरः पक्षो व्याख्यातः ॥ १५ ॥

उत्तरपक्षनमनेऽप्येवं कुर्यात् ॥ १६ ॥

द्विपुरुषं पश्चादर्धपुरुषं पुरस्ताच्चतुर्भागोनः पुरुष
आयामोऽष्टादश करण्यौ पार्श्वयोस्ताः पञ्चदश
परिगृह्णन्ति तत्पुच्छम् ॥ १६ ॥

पश्चात्तिर्यङ्मानी द्विपुरुषा पुरस्तादर्धपुरुषा पादोनपुरुषायामा पार्श्वयोरष्टादश षोडशी करोति । इत्यष्टादशकरणी सा पार्श्वयोस्ता एताः पञ्चदश षोडशीः परिगृह्णन्ति । कथमर्धपुरुषव्यासा पादोनपुरुषायामाः षट् करोति । तस्याभितो द्वे चतुरश्रे समे सर्वतः पादोनपुरुषमात्रे तावक्ष्णया लिखेत् । एकैकमर्धं त्यजेत् । शिष्टं प्रत्येकमर्धपञ्चमं करोति । अर्धपञ्चम (मर्धपञ्चमं) नव नवसु षट् क्षिपेत् (शे) पञ्च वा तत्पुच्छम् ॥१६॥

षोडशीं चतुर्भिः परिगृह्णीयात् ॥ १७ ॥ (ख० १८ ) ॥

पुरुषस्य षोडशभागे या तिष्ठति सा षोडशी । ता चतुर्भिः फलकैर्वक्ष्यमाणैः परिगृह्णीयात् । कारयेदिति यावत् ॥ १७ ॥

अष्टमेन त्रिभिरष्टमैश्चतुर्थेन चतुर्थम(स)विशेषेणेति ॥ १८ ॥

पुरुषस्याष्टमेन पञ्चदशाङ्गुलेन त्रिभिरष्टमैस्तेनैव त्रिगुणितेन पञ्चचत्वारिंशदङ्गुलेन चतुर्थेन पुरुषचतुर्भागेन त्रिंशदङ्गुलेन चतुर्थसविशेषेण पुरुषचतुर्भागसविशेषेण प्रमाणं, तृतीयेनेत्यादिना वर्धितेन द्विचत्वारिंशदङ्गुलेन चतुर्दशतिलयुक्तेन । एवमेतैश्चतुर्भिः कारिता षोडशी ॥ १८ ॥

अर्धेष्टकां त्रिभिः ॥ १९ ॥

परिगृह्णीयादिति सर्वत्र शेषः ॥ १९ ॥

द्वाभ्यां चतुर्थाभ्यां चतुर्थसविशेषेणेति ॥ २० ॥

त्रिंशदङ्गुलाभ्यां सविशेषेणोक्तप्रमाणेन । एतैस्त्रिभिः कारयेत् ॥ २० ॥

पादेष्टकां त्रिभिः ॥ २१ ॥

गतः ॥ २१ ॥

चतुर्थेनैकं चतुर्थसविशेषाभ्यां चेति ॥ २२ ॥

चतुर्थेनैकं चतुर्थस्य सविशेषश्चतुर्थसविशेषस्तस्यार्थाभ्यां च ॥ २२ ॥

पक्षेष्टकां चतुर्भिः ॥ २३ ॥

पक्षार्थमिष्टका पक्षेष्टका । तां चतुर्भिर्गृह्णीयात् ॥ २३ ॥

द्वाभ्यां चतुर्थ्यां सप्तमाभ्यां च ॥ २४ ॥

द्वाभ्यां चतुर्थ्यां पुरुषसप्तमाभ्यां च । अस्य नमनमुपरिष्टाद्वक्ष्यति ॥ २४ ॥

पक्षमध्यभ्यां( मध्यीयां )चतुर्भिः ॥ २५ ॥

गतः ॥ २५ ॥

द्वाभ्यां चतुर्थाभ्यां द्विसप्तमाभ्यां चेति ॥ २६ ॥

चतुर्थाभ्यां द्विसप्तमाभ्यां वक्रभूताभ्यामित्येतैश्चतुर्भिः पक्षमध्यीयां करोति ॥ २६ ॥

पक्षाग्रीयां त्रिभिः ॥ २७ ॥

गतम् ॥ २७ ॥

चतुर्थेनैकम् । चतुर्थसप्तमाभ्यामेकम् । चतुर्थसविशेषसप्तमाभ्यां चेति ॥ २८ ॥

वक्रीभूताभ्यामेव ॥ २८ ॥

पक्षकरण्याः सप्तमं तिर्यङ्मानी पुरुषचतुर्थं च पार्श्वमानी तस्याक्ष्णयारज्ज्वा करणं प्रजृम्भयेत् ॥ २९ ॥

क्रियतेऽनेनेति करणी । पक्षस्य करणी पक्षकरणी । इष्टका । तस्या उक्तं करणं पुरुषचतुर्थं च पार्श्वमानी पुरुषसप्तमं तिर्यङ्मानी विपक्षेष्टकां चतुर्भिरिति । तदेव दीर्घभूतं करणं प्रजृम्भयेत् । दीर्घं कुर्यात् । कथमेकयाऽक्ष्णयारज्ज्वाऽऽयतया दीर्घं कुर्यात्करणम् ॥ २९ ॥

पक्षनमन्याः सप्तमेन फलकानि नमयेत् ॥ ३० ॥

पक्षनमनीति नितोदः, लेखामूलयोरन्तरालम् । तत्सप्तधा विभज्यैकेन भागेन'। किमुक्तं भवति । यावता प्रज(जृ)म्भयेत(णेन) तस्याः सप्तमी तिर्यग्भवति तावत्प्रज(जृ)म्भयेदिति । एवं यथा भवति तथा फलकानि नमयेत् । ग(न)तं नमनं कुर्यात् । पक्षनमनी सा । पक्षाग्राणामप्येवमेव । तत्र श्लोकः—

तिलैः षोडशभिर्नूनं तिर्यक्स्यात् षोडशाङ्गुलम् ।
यथा तथा चतुर्थाभ्यां सप्तमाभ्यां च नामयेत् । इति ॥ ३० ॥

उपधाने चतस्रः पादेष्टकाः पुरस्ताच्छिरसि ॥ ३१ ॥

उपदध्यादिति शेषः । पुरस्ताच्छिरसि भूषणाकारैका तस्याः पश्चात्तिस्रः ॥ ३१ ॥

अपरेण शिरोप्ययं पञ्च ॥ ३२ ॥

कर्णाभरणवत्पादेष्टका एव ॥ ३२ ॥

पूर्वेण पक्षाप्ययावेकादशापरेण ॥ ३३ ॥

पक्षाप्ययोः पुरस्तात् ॥ ३३ ॥

एकादश पूर्वेण ॥ ३४ ॥

तावेव ॥ ३४ ॥

पुच्छाप्ययं पञ्चापरेण पञ्च ॥ ३५ ॥

पुच्छस्याप्ययस्य पुरस्तात्पञ्च पश्चाच्च पञ्च ॥ ३५ ॥

पञ्चदश पुच्छाग्रे ॥ ३६ ॥

पुच्छाग्रे पञ्चदश ता एव । एताः षट्पञ्चाशत्पादेष्टकाः ॥ ३६ ॥

चतस्रश्चतस्रः पक्षाग्रीयाः पक्षाग्रयोः ॥ ३७ ॥

विपर्यस्य कारिते( ता ) उत्तरे पक्षे ॥ ३७ ॥

पक्षाप्यययोश्च विशयाः ॥ ३८॥

चतस्रश्चतस्रो विशयाः पक्षसंध्योः । दक्षिणपक्षाप्यये विपर्यस्य कारिते । उत्तरे पक्षेष्टकामात्रम् । पक्षयोरात्मन्यर्धेष्टकामात्रम् । ता इति विशया प्रत्यवस्थ्यन्ते ॥ ३८ ॥

आत्मनि चतसृभिश्चतसृभिः षोडशभिर्यथायोगं पर्युपदध्यात् ॥ ३९ ॥

तथा चतसृभिरुत्तरपक्षाप्ययस्याः । प्रतीत्यस्मिन्नर्थे परिशब्दः ॥ ३९ ॥

चतस्रश्चतस्रः पक्षमध्यीयाः ॥ ४० ॥

पक्षमध्ये भवाः । वक्रभूताश्चतस्रो दक्षिणे पक्षमध्ये । चतस्र एवमुत्तरपक्षमध्ये ॥ ४० ॥

पक्षमध्ययोः पक्षेष्टकाभिः प्राचीभिः पक्षौ प्रच्छादयेत् ॥ ४१ ॥

पक्षेष्टका उक्तलक्षणास्ताभिः प्रागायताभिः पक्षौ प्रच्छादयेत् । पक्षयोरुपदध्यात् । विपर्यस्य कारिताश्चत्वारिंशत् ॥ ४१ ॥

अवशिष्टं षोडशभिः प्रच्छादयेत् ॥ ४२ ॥

शिष्टमात्मक्षेत्रं षोडशिभिरुपदध्यात् ॥ ४२ ॥

अन्त्या बाह्या विशेषाः ॥ ४३ ॥

अन्ते भवा अन्त्याः । अन्त्यन्त्यास्ता बाह्यविशेषा बाह्यतः सविशेषाः ॥ ४३ ॥

अन्यत्र शिरसः ॥ ४४ ॥

शिरो वर्जयित्वाऽऽत्मनि मध्ये षट् प्राच्यः षट् प्रतीच्यः । आत्मनि रीतिद्वयमवशिष्टं पुच्छे च तासु यदि षोडशीभिरेवोपधीयन्ते संख्या पूर्यते । किंतु भिद्यते चतुर्ष्वपि रीतिषु भेदश्च वर्जनीयः । तस्मादन्याश्चोपधेयाः । कथमनूच्य(नुच्य)माना उपधीयन्ते । नानू(नु)च्यमाना उक्ता एव । यच्चतुरश्रां(श्रं) श्यशिरा(श्रि वा)संपद्येतार्धेष्टकाभिः पादेष्टकाभिर्वा प्रच्छादयेदित्यवदत् ।

ननु यदाऽन्याश्चोपधीयन्तेऽतिरिच्यते संख्या । नैष दोषः । लङ्घनाधिकः प्रस्तार इत्युक्तम् । पूर्वस्मिन्पटले पुच्छे रीतिद्वयं तिस्रस्तिस्रोऽर्धेष्टका उपधाय षोडश्यः । पुनश्चोत्तरे पार्श्वे एकैकोऽर्ध एवमात्मनि द्वयो रीत्योर्दक्षिणतस्तिस्रोऽर्धेष्टकाः । ततो द्वे षोडश्यौ । एकैकोऽर्धः शिरसि तिर्यग्द्वे षोडश्यौ । एवमष्टोत्तरं शतद्वयम् ॥ ४४ ॥

अपरस्मिन्प्रस्तारे पुरस्ताच्छिरसि द्वे षोडश्यौ बाह्यविशेष उपदध्यात् ॥ ४५ ॥

शिरसः पूर्वभागे द्वे षोडश्यौ बाह्यतः सविशेषे श्रोणा(टा)कारे उपदध्यात् । विपर्यस्य कारिता दक्षिणतः ॥ ४५ ॥

ते अपरेण द्वे विशये ॥ ( ख० १९ ) ॥

अभ्यन्तरविशेषे ॥ ४६ ॥

नाभ्या पश्चादात्मन्यर्धेष्टकामात्रं शेषं शिरसि ॥(ख० १९) ॥ ४६ ॥

द्वाभ्यामर्धेष्टकाभ्यां यथायोगं पर्युपदध्यात् ॥ ४७ ॥

समितो युज्यते यथा (भवति) तथोपदध्याच्चतस्र एता विशयाः ॥ ४७ ॥

बाह्य(ह्य)विशेषाभ्यां परिगृह्णीयात् ॥ ४८ ॥

उभयत्र प्रतीय(प्रत्यर्थकपरीति)पदश्रवणाद्विध्यन्तरमेतन्न पूर्वयोर्विशेषणम् । चशब्दोऽध्याहर्तव्यः । बाह्यविशेषाभ्यां चेति बाह्यविशेषाभ्यां चार्धेष्टकाभ्यां परिगृह्णीयात् । शिरसि न विकारत्वादात्मन्येव ॥ ४८ ॥

आत्मकरणीनां संधिषु षोडश्यो बाह्यविशेषा उपदध्यात् ॥ ४९ ॥

आत्मनः करण्य आत्मकरण्यः । तासां संधिषु श्रोण्यंसेषु चतु षोडश्यो बाह्यविशेषाः ॥ ४९ ॥

चतस्रश्चतस्रोऽर्धेष्टकाः पक्षाग्रयोः ॥ ५० ॥

नखाकारेष्वर्धेष्टकाश्चोपधेयाश्चतस्रश्चतस्रः ॥ ५० ॥

पक्षेष्टकाभिरुदीचीभिः पक्षौ प्रच्छादयेत् ॥ ५१ ॥

उदगायताभिः पक्षयोरुपदध्यात् । षट्पञ्चाशद्विपर्यस्य कारितास्तिस्रस्तिस्रोऽर्धेष्टकाः पुच्छपार्श्वयोः ॥ ५१ ॥

तिस्रस्तिस्रोऽर्धेष्टकाः पुच्छपार्श्वयोः ॥ ५२ ॥

भाष्यविशेषः ॥ ५२ ॥

अवशिष्टꣳ षोडशीभिः प्रच्छादयेत् ॥ ५३ ॥

अवशिष्टमग्निक्षेत्रं षोडशीभिः प्रच्छादयेत् ॥ ५३ ॥

अन्त्या बाह्यसेषा अन्यत्र पुच्छात् ॥ ५४ ॥

गतमेतत् ॥ ५४ ॥

पुच्छं वर्जयित्वा यत् तत्राऽऽह—

यच्चतुरश्रं त्र्यश्रि वा संपद्येतार्धेष्टकाभिः पादेष्टकाभिर्वा तत्प्रच्छादयेत् ॥ ५५ ॥

सर्वत्र षोडश्य एव शेरते । यदि तथा क्षिपेरन् । भिद्येत सर्वत्र । अतो भेदपरिहाराय यत्र क्रियमाणं त्रिकोणं चतुरश्रं वा प्रकारद्वयं वा संपद्यते । पूर्वस्मिन्प्रस्तारे चतुरश्रं संपद्यते त्रिकोणं चेह त्रिकोणमेव । तत्रार्धेष्टकाभिः पादेष्टकाभिर्वा प्रच्छादयेदुपदध्यात् ॥ ५५ ॥

पादेष्टकाभिः संख्यां पूरयेत् ॥ ५६ ॥

गतः । पुच्छाप्यये चतस्रः षोडश्यो विशयाः । प्राच्यौ द्वे प्रतीच्यौ द्वे । तासां पश्चाद्दश षोडश्यः । तिर्यक्पुच्छः । विशयानामभितो द्वावर्धौ द्वावात्मनि । तासां पुरस्ताच्चतस्रः षोडश्यः प्राच्यश्चतुर्थ्यः प्रत्यर्पितास्तासां पुरस्तादष्टादश षोडश्यो दक्षिणायता उदगायताश्च विपर्यस्ताः षडुत्तरे पार्श्वे । तासां पुरस्ताच्चतस्रोऽर्धेष्टकास्तासां पुरस्ताच्चतस्रः षोडश्यः प्रतीच्यः । ताभिः प्रत्यर्पिताः । तासां पुरस्ताद्द्वे षोडश्यौ नानाग्रे प्राच्यौ । तयोर्मध्ये द्वावर्धौ आत्मन्यर्धपादेष्टकामात्रे आत्मनि द्वावर्धौ विशयावभितोऽर्धषोडश्यौ सहितौ । एवं द्वादशोनं शतद्वयम् ।

इह केचिद्दीर्घायुपसूत्रमेतदनादृत्य स्वमनीषिकया करणां कारणान्तरमुत्पाद्य संख्यापूरणमेव कुर्वन्ति । किं नाम तेषां शनयम् । वयं तु सूत्रकारमतानुसारिणोऽनुक्तं न गृह्णीमः ॥ ५६ ॥

अणूकाः पञ्चदश भागीयानां स्थाने ॥ ५७ ॥

स्थानशब्दः प्रयोगवाची । अणूकाश्चतुर्भागीयाः संख्यापूरणे चोदिताः । पञ्चदशभागीयाश्चतुर्भागीयाश्च । संख्यापूरणे चोदिता इति यावत् । अस्मिन्प्रस्तारे संख्या न पूरिता सूत्रकारेण । तत्र ताभिः संख्या पूरयितव्या यदि ताभिः पूर्यते । अस्मिन्नग्नौ तावता न शक्यतेऽणूकादिभिः संख्यापूरणम् । शक्यते अपि तु प्रकृतौ । तस्मात्प्रकृत्यर्थो योगः । तत्र शक्यते द्वितीये प्रस्तारे ताभिः पूरयितुम् । तत्र द्विशतपूरणमवश्यं कर्त-

व्यम् । 'प्रतिप्रस्था(स्ता)रं पूरयेत्' इति वचनादिह तु सहस्रसंख्यैव पूरयितव्येत्युक्तं पूर्वस्मिन्पटले । तस्मात्प्रकृत्यर्थो योगः । तत्र श्लोकाः—

पक्षेष्टकानां करणं विपर्यस्यार्धमिष्यते ।
पक्षाग्रीयास्तथैवार्धं विपर्यस्यैव कारयेत् ॥
विपर्यस्यैव कर्तव्याः षोडश्यः षोडशीद्वयम् ।
सहस्रे वा द्विषाहस्रे पञ्चषष्टिं विदुर्बुधाः ॥
उपधाने यथासूत्रं यथा वाऽऽत्मनि पक्षयोः ।
पुच्छे शिरसि शिष्टे च षोडशीनां विदुर्बुधाः ॥
षट् प्राच्यः षट् प्रतीच्यश्चाऽऽत्मनि द्वादश क्षिपेत् ।
शीर्ष्णेद्वयं क्षिपेत्तिर्यगुक्ता एताश्चतुर्दश ॥
शिष्टं रीतिद्वयं पुच्छे तथा चाऽऽत्मन्यपि द्वयम् ।
षोडशार्धेष्टकास्तास्तु क्षिपेच्च त्रिषु रीतिषु ॥
एकैकमुत्तरे पार्श्वे पार्श्वे तिस्रस्तु दक्षिणे ।
शिष्टे तिर्यग्दशैव स्यादष्टोत्तरशतद्वयम् ॥
पुच्छाप्यये तु विशयाश्चतस्रः षोडशीः क्षिपेत् ।
षोडश्यावप्यये प्राच्यौ ते चाग्रेणोरसि क्षिपेत् ॥
मध्ये तयोश्च द्वावर्धौ चतस्रो विशयाः क्षिपेत् ।
आत्मनः शेषे द्वावर्धौ षोडश्यौ शिरसि क्षिपेत् ॥
अन्यत्सर्वं यथासूत्रं द्वादशोनं शतद्वयम् ।
आत्मनो दक्षिणे पार्श्वे चतस्रो दक्षिणायताः ॥
द्वितीये चोत्तरे पार्श्वे षड्द्वे श्रोण्यंसयोरपि ।
शिरसश्चाप्यये चैका शिरसाऽपि च दक्षिणा ॥
एता निधेयाः षोडश्यो विपर्यस्ताः स्तरे द्वये ॥ इति ॥ ५७ ॥

व्यत्यासं चिनुयाद्यावतः प्रस्तारान्चिकीर्षेत् ॥ ५८ ॥

गतः ॥ ५८ ॥

कङ्कचिदलजचिदिति श्येनचिता व्याख्यातौ ॥ ५९ ॥

कङ्कः पक्षिविशेषः । अलजश्च । कङ्क इव चेतव्यः कङ्कचित् । अलज इव चेतव्योऽलजचित् । केन श्येनेन व्याख्यातौ । पूर्वेण श्येनेन व्याख्यातौ । मुख्यत्वाद्द्विशतप्रस्तारत्वाच्च । तस्यैवाऽऽकृतिः । तान्येव करणानि । स एवोपधानमार्गः । संकल्प एव भेदः—श्येनोऽलजः कङ्क इति ॥ ५९ ॥

एवमिव श्येनस्य वर्षीयाꣳसौ पक्षौ पुच्छाद्वक्रौ
संनतं पुच्छं दीर्घ आत्माऽमण्डलः शिरश्च ॥ ६० ॥

चशब्दः प्रसिद्धौ । श्येनोऽप्येवमेव । वर्षीयांसौ बृहन्तौ पक्षौ । कस्मात्पुच्छाद्दीर्घौ न केवलं बृहन्तौ । किंतु तौ वक्रौ संनतौ सम्यङ्नतौ । आत्मसमीपे च यदग्रे व्यस्तपृथुलमुच्यते तत्संनत इति दीर्घ आत्मा न चतुरश्रः । न मण्डलः । नापि दीर्घचतुरश्रः । अमण्डलमिव दीर्घचतुरश्रभूतं शिरः । एवं प्रकारो लोके श्येन एवमेव कङ्कालजो लोके ।

तस्माच्छ्रुतिसामर्थ्यात् ॥ ६१ ॥

तस्मात्तदाकारावेव कङ्कालजौ तेनैव व्याख्यातौ । श्रुतिसामर्थ्यात् । सामर्थ्यमभिधानशक्तिः । एतावदेव श्रुत्याऽभिधीयते । अशक्यत्वात्सर्वसंपादनस्य न प्रशङ्कनीयमर्थम् ॥ ६१ ॥

अशिरस्को वा ॥ ६२ ॥

वाशब्दः पक्षव्यावृत्तौ । अशिरस्क एव चेतव्यः ॥ ६२ ॥

कुत इत्याह—

अनाम्नानात् ॥ ६३ ॥

नहि शिर आम्नायते ॥ ६३ ॥

तस्य कथमनाम्नानमित्यत्राऽऽह—

विज्ञायते च कङ्कचितं शीर्षण्वन्तं चिन्वीत । यः
कामयेत सशीर्षोऽमुष्मिँल्लोके संभवेयमिति विद्य-
माने कथं ब्रूयात् ॥ ६४ ॥

यदि शिरस आम्नानमस्ति शीर्षण्वन्तं चिन्वीतेति कथं ब्रूयादेवेत्यर्थः । यदि शिरस आम्नानं नास्ति तदा युज्यत एवैतद्विशेषणम् । इतरथा विशेषणमनर्थकमेव स्यात् । तस्मादशिरस्क एव चेतव्यः ॥ ६४ ॥

यद्यशिरस्कः किमाकारः स इत्याह—

प्राकृतौ वक्रौ पक्षौ संनतं पुच्छं विकारश्रवणात् ॥ ६५ ॥

प्रकृत्यां भवौ प्राकृतौ । तावेव पक्षौ वक्रौ कर्तव्यौ । कुतः—विकारश्रवणात् । संनतं पुच्छं पुच्छं च संनतं कर्तव्यम् । वक्रपक्षो व्यस्तपुच्छ इति विकारः श्रूयते । पक्षपुच्छानां वक्रता व्यस्तता च प्रकृतौ नास्ति । तस्माद्विकारत्वं पक्षपुच्छानाम् ॥ ६५ ॥

यथाप्रकृत्यात्माऽविकारात् ॥ ६६ ॥

यथाप्रकृत्यात्मा । कुतः । अविकारात् । न हि तत्र विकारः श्रूयते । तस्मात्प्रकृतिवदेवाऽऽत्मा चतुःपुरुषः समचतुरश्रश्च । अरत्निनाऽथप्रादेशेन वा पक्षौ विवर्धयेत् । द्विपुरुषां रज्जुमित्यादि श्येनवत् ।

ननु प्रकृतावरत्निना वर्धयेदित्युक्तं किमिदमुच्यते–अरत्निनाऽर्धप्रादेशेन वेत्युच्यते। अरत्निनाऽध्यर्धविकारत्वप्रतिपादनपरं न पक्षपुच्छानाम्। तावन्मात्रमायाममापादयितुमात्मनश्चतुर्थं चतुर्भागीयाष्टावित्युपादातव्यमिति। श्येनप्रतिपादितं न कर्तव्यम्। यथाप्रकृत्यात्मा कर्तव्यः। किं च प्राकृतं पुच्छमिति वचनाच्च। उपधानविधिश्च न घटते। श्येन इव चेतव्य इति। एवं क्रियमाणे प्रथमद्वितीयानामेव विकारो नेतरेषाम्। इतरथा चतुर्थादयोऽपि विकृतौ भवेयुः। तथाभूताश्च कर्तव्या भवेयुः। तस्माच्च कारणानुप्रवेशेन चेतव्य इत्युक्तं श्येनवदेव।

पुच्छं करणान्युच्यन्ते–चतुर्थपष्ठाभ्यां यथायोगं न तत्प्र(नतं प्र)थमं ते द्वे पूर्ववत्संहिते द्वितीयमित्यादि। अथोपधानविधिः। अष्टाचत्वारिंशत्प्रथमा उदीचीः पक्षयोः श्येनवत्पुच्छमात्मनः श्रोण्योरितस्तिस्रः पञ्चमी उदीचीः ( पञ्चम्य उदीच्यः )। ततः सप्तसु रीतिषु पट्पञ्चाशच्चतुर्थ्यो दक्षिणायता उदगायताश्च तासां पुरस्तादष्टौ पञ्चम्य उदगायताः श्रोण्योश्चतस्रः पञ्चम्योऽक्ष्णया भिन्द्यात्। अष्टौ षष्ठः संपद्यते। एवं द्विशतः प्रस्तारः। अपरस्मिन्प्रस्तारे चतस्रश्चतस्रो द्वितीया निर्माण(र्णाम)योरप्ययोश्च विशयास्तृतीयाश्चतस्रश्चतस्रः पूर्ववदष्टमागावेताः पक्षेष्टकाभिः पक्षाः प्रच्छादयेद्वा सप्तभिः पुच्छे श्येनवत्सप्तभिः श्रोण्यंसेषु द्वे द्वे पञ्चम्यौ प्राचीः प्रतीचीश्च। प्राच्यः सप्त रीतयः। चतुर्भिस्तृतीयापञ्चम्यो रीत्योर्मध्ये त्रिंशत्षष्ठ्य एका च पञ्चमी। एकत्र षोडशापरत्र चतुर्दश। एवं द्विशतः प्रस्तारः। अथवा स एव न पुच्छमर्धपुरुषव्यासं तं प्रादेशं पुरुषं प्रतीचीनमायच्छेत्तस्य दक्षिणतोऽन्यमित्यादिना श्येनवत्पुच्छः कुर्यात्। पक्षौ प्राकृतौ द्विपुरुषायामौ। करणानि वक्ष्यामः–द्वादशाङ्गुलं यथा भवति तथा तिर्यक्चतुर्थपष्ठाभ्यां नमयेत्। प्रथमं तत्र ते एव संहिते यथा तिष्ठतस्तथा कारयेद्द्वितीयं तृतीयमपि षत्षड्भागेनाष्टमभागेन वा वर्धयेदिति। ते एव वा पुच्छे चतुर्थं त्रयस्त्रिंशदङ्गुलविस्तारं पञ्चचत्वारिंशदङ्गुलायामं चतुर्दशतिलैरूनं सविशेषं पञ्चममर्धसप्तदशाङ्गुलव्यासं षट्पार्श्वं त्रयस्त्रिंशत्कर्णं षट्त्रिंशदङ्गुलमष्टभिस्तिलैः सह सप्तमाष्टमयोः पार्श्वं, एकोनत्रिंशदायामं तु षट्त्रिंशदङ्गुलं चतुर्दशतिलैः सह पुच्छाप्यये विशययोरष्टादशाङ्गुलं पुच्छे पञ्चदशाङ्गुलमेव। आत्मनि चतुष्पादादयो वैकृताः। पुच्छे तु प्राकृता एवाऽऽत्मन्युपधानविधिः स एव। तत्र श्लोकाः—

अर्धं त्रयोदशव्यासमाशिरस्के हविर्भुजे।
तथा चतुर्थषष्ठाभ्यां नमयेत्प्रथमं तु तत्॥
ते द्वे तु संहिते प्राचीं द्वितीयं करणं भवेत्।
तृतीयमपि षड्भागमष्टभागेन वर्ध्यताम्॥

पक्षेष्टकाश्चतुर्थ्यः स्युः पुच्छे पुच्छवदुच्यते ।
षट्पञ्चाशच्चतुर्थ्यः स्युस्तिर्यगष्टोदगायताः ॥
अष्टौ पुरस्तात्तिर्यक् च श्रोण्योः षट्पञ्चमीः क्षिपेत् ।
श्रोण्योश्चतस्रः पञ्चम्यो मेदद्विशतप्रस्तरे ॥
श्येनवत्पक्षपुच्छेषु निधायाऽऽत्मन्यपि क्षिपेत् ।
प्राच्यैश्चैव प्रतीच्यैश्च त्रिंशदेका च पञ्चमी ॥
तासामेवोत्तरे पार्श्वे चतुर्थ्यः षोडश द्वयम् ।
प्राच्याश्चैव प्रतीच्यश्च तथा षोडश दक्षिणे ॥
प्राचीश्चैव प्रतीचीश्च शिष्टे[तु] पञ्चमीं क्षिपेत् ।
करणस्य विपर्यस्य चतुर्थस्यैव नेष्यते ॥
स प्रादेशेऽपि वा पुच्छे विस्तारो द्वादशो भवेत् ।
तथा चतुर्थपञ्चाभ्यां नमयेत् प्रथमं तु तत् ॥
ते द्वे तु संहिते प्राची द्वितीयं करणं हि तत् ।
तृतीयमपि षड्भागमष्टभागेन वर्धितम् ॥
द्वाविंशतिद्विगुणितं तिलानां चापि विंशतिः ।
सविशेषश्चतुर्थस्य तिर्यक्सप्त(प्ता)धिकं भवेत् ॥
पञ्चमं प्राकृतं विद्यात्षष्ठस्य विकृतास्त्रयः ।
षष्ठस्य पार्श्वे त्र्यधिकं कर्णे षट्त्रिंशदष्टभिः ॥
सप्तमाष्टमयोः पार्श्वमूनं तन्त्रमिहेष्यते ।
आयामश्चापि षट्त्रिंशच्चतुर्दशतिलैः सह ॥
चतुर्थ्यायास्तु [वै] पुच्छे चैवाऽऽत्मनि क्षिपेत् ।
अष्टादशाङ्गुलं पुच्छे शययोरन्यदात्मनि, इति ॥ ६६ ॥

**यथो एतच्छ्येनचितिं चिन्वीतेति यावदाम्नानसारूप्यं तद्व्याख्यातम् ॥ ६७ ॥**

तत्र यावदाम्नानमेव सारूप्यं ग्राह्यं जातिवाचकानां शब्दानां किमपि सामान्यमेव प्रवृत्तिनिमित्तं दृश्यते । यथा—गौर्वाहीक इति । एवमत्रापि यावदाम्नानमेव सारूप्यं गृहीत्वा श्येनशब्दो वर्तते । तत्तु सारूप्यं व्याख्यातम् । चक्रपक्ष इत्यादिना ॥ ६७ ॥

**त्रिस्तावोऽग्निर्भवतीत्यश्वमेधे विज्ञायते। तत्र सर्वोभ्यासोऽविशेषात् ॥ ६८ ॥**

तत्र सारत्निप्रादेशस्य सप्तविधस्याभ्यासः । कुतोऽविशेषात् । न हि कश्चिद्विशेषोऽत्राऽऽम्नायते । तस्मात्सर्वस्याऽऽवृत्तिः । दीर्घचतुरश्रेणां समासेन पक्षपुच्छानां समास उक्तः ॥ ६८ ॥

दीर्घचतुरश्राणां समासेन पक्षपुच्छानां समास उक्तः ॥ ६९ ॥

यदन्यत्सप्तम्य इत्यादिना विधिसमकरणीमित्यादिना वा वेणुत्रिकरण्या हरेत् ॥६९॥

एकविंशोऽग्निर्भवतीत्यश्वमेधे विज्ञायते ॥ ७० ॥

गतमेतत् ॥ ७० ॥

तत्र पुरुषाभ्यासो नारत्निप्रादेशानां संख्यासंयोगात्संख्यासंयोगात् ॥ ७१ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चविंशप्रश्ने षष्ठः पटलः प्रश्नश्च ।

तत्र पुरुषाभ्यासो नारत्निप्रादेशानाम् । कुतः । संख्यासंयोगात् । एकविंश इति । ननु–सप्तविध इत्यत्रापि संख्यैव विधीयते वाक्यान्तरेण । तत्रारत्निप्रादेशा निविशन्ते न तत्र सप्तसंख्यायां निविशन्ते । तस्मात्संख्यासंयोगात्पुरुषाभ्यास एव नारत्निप्रादेशानाम् । तत्र श्लोकः—

त्रिविधेन नरं प्रोक्तं त्रिस्तावति विभावसौ । एकविंशं ततो न्यूनं तिलानां चैव सप्तभिः । इति ॥

द्विरुक्तिर्मङ्गलार्था ॥ १ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां पञ्चविंशप्रश्ने षष्ठः पटलः ।

संक्षिप्य नानाविषयाऽल्पशब्दैः सूत्रैः समर्थैरतिगूहिताशयः ।
न्यायाननेकांस्तु वितन्वता जडोऽप्यहं स्वसूत्रार्थविवेचकः कृतः ॥
नमोऽस्तु तस्मै हिरण्यकेशिने दुर्गाह्यवेदाम्बुधिपारदृश्वने ।
स मे स्वसूत्रार्थगतिं कृपाम्बुधिर्दिशत्वमलं जडतां प्रणोदयन् ॥
प्रयोगवैजयन्त्यास्तु मालायाः सूत्रसंस्थितेः ।
शुल्वसूत्रस्येह कृतो निर्णयः कौस्तुभो मणिः ॥
मध्यगो यज्ञवपुषस्तुष्टयेऽस्तु मयार्पितः ।
गृह्णाति हि किमप्येषं भक्तैर्यद्यत्ततः कृतम् ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवदीक्षितहविर्यज्ञयाजिसोमयाजि महाग्निचित्सार्वपृष्ठाप्तोर्यामयाजिकृतायां प्रयो· पञ्चविंशप्रश्नः समाप्तः ॥ २९ ॥

---

ॐ तत्सद्ब्रह्मणे नमः ।

## अथ चयनोपयोगिकारिकाः ।

---

एकैकहोमे दारिद्र्यं धनिकत्वं समुच्चये ।
ऋचं यद्यन्तिमां कुर्याच्छन्दोगामि फलं भवेत् ॥ १ ॥
अतोऽन्तिमं यजुः कुर्याद्यज्वगामिफलाप्तये ।
खादिरी वैणवी वाऽभ्रिः कल्माषी सुषिरा न वा ॥ २ ॥
क्ष्णुता चोभयतो वाऽन्यतरतो ब्रह्मवृक्षजा ।
अर्कोदुम्बरशम्युत्था वाऽन्याफलतरूद्भवा ॥ ३ ॥
व्याममात्री मुष्टिमात्री बाहुमात्री यथापि वा ।
अरत्निमात्री प्रादेशमात्री वा ह्यमिताऽपि वा ॥ ४ ॥
पिष्टान्यर्मकपालानां वेण्वङ्गारोद्भवान्यपि ।
तुषा व्रीहिसमुत्पन्नाः पलाशजकषायकः ॥ ५ ॥
शर्कराः सूक्ष्मपिष्टास्तु लोमानि मृगचर्मणः ।
अजलोमान्यपि तथा ये चान्ये दृढहेतुकाः ॥ ६ ॥
एते संमर्जनीयास्तु प्रवर्ग्योखेष्टकादिषु ।
शून्यग्रामस्थमृद्भाण्डखण्डं त्वर्मकपालकम् ॥ ७ ॥
प्रादेशोचाऽरत्निमिता तिर्यग्व्यायामसंमिता ।
समन्तपरिमाणेन वाऽमिता चतुरश्रिका ॥ ८ ॥
समान्तरालाऽष्टाश्रिर्वा बौधायनमतानुगा ।
परिमण्डलका वाऽभिचारादौ तु नवाश्रिका ॥ ९ ॥
मध्यदेशे तु रास्ना वा बिलदेशसमीपतः ।
द्वौ यदा प्राग्दिशि स्यातां चत्वारो दिक्चतुष्टये ॥ १० ॥
पञ्चदा दिग्द्वये द्वौ द्वावेवैकः शिष्टदिग्द्वये ।
अष्टौ यदा चतुर्दिक्षु द्वौ द्वावेवं स्तनस्थितिः ॥ ११ ॥
* रास्नाश्रिसंधावष्टौ स्युस्तनास्त्वष्टाश्रिपक्षके ।
रास्नाश्रिसंधावष्टौ स्युर्द्विचतुःषट् च वा स्तनाः ॥ १२ ॥

---

* अश्रीणां रास्नायाश्च संधाविलर्थः ।

संवत्सरं द्वादशाहं षडहं वा त्र्यहं तु वा ।
दीक्षाकल्पाः क्रतोः साग्नेर्ब्राह्मणे नित्यवच्छ्रुताः ॥ १३ ॥
तत्रैकदीक्षापक्षोऽपि स्थितो वाजसनेयके ।
अपरे श्येनसंज्ञेऽग्नौ करण्योऽष्टौ भवन्ति च ॥ १४ ॥
षोडश्यर्ध्या तथा पाद्या पक्षजा पक्षमध्यिका ।
पक्षाद्या द्वे अणूके च सूत्रक्लृप्ताः षडेव वा ॥ १५ ॥
षोडश्या दक्षिणं पार्श्वमत्र पञ्चदशाङ्गुलम् ।
त्रिंशत्तु पश्चिमं चोदक्चत्वारिंशच्च पञ्च च ॥ १६ ॥
द्विचत्वारिंशदङ्गुल्यथार्धपञ्चदशास्तिलाः ।
अक्ष्णयामानमेतैस्तु चतुर्भिश्चतुरश्रिका ॥ १७ ॥
पूर्वश्येने चतुर्थी या सा परे षोडशी मता ।
अर्ध्या तु स्यात्त्रिफलका द्वे स्यातां त्रिंशदङ्गुले ॥ १८ ॥
द्विचत्वारिंशदङ्गुल्यथार्धपञ्चदशास्तिलाः ।
तृतीयफलकस्येदं मानमेवं त्रिकोणका ॥ १९ ॥
पाद्या त्रिफलका प्रोक्ता तत्रैकं त्रिंशदङ्गुलम् ।
सपादतिलसप्तैकविंशत्यङ्गुलके परे ॥ २० ॥
त्रिंशत्तु पार्श्वफलके तिर्यक्सप्तदशाङ्गुले ।
तिलपञ्चकसंयुक्त एषा पक्षेष्टका मता ॥ २१ ॥
चत्वारिंशत्कर्ण एकस्तिलैर्द्वादशभिर्युतः ।
सप्तविंशतिरन्यस्तु तिलविंशतिसंयुतः ॥ २२ ॥
पक्षेष्टके महत्पार्श्वसंश्लिष्टे स्यात्षडश्रिका ।
पक्षमध्या तु सा षड्भिः फलकैर्मध्यमोज्झिता ॥ २३ ॥
पक्षेष्टकोत्तरे पार्श्वे त्वर्ध्यापार्श्वे नियोजिते ।
पञ्चभिः फलकैः पञ्चकोणाग्रीयोदगग्रका ॥ २४ ॥
अस्या दक्षिणपार्श्वस्थं फलकं त्रिंशदङ्गुलम् ।
तिर्यक्पार्श्वे पञ्चतिलैर्युक्ते सप्तदशाङ्गुले ॥ २५ ॥
अर्ध्यापश्चिमपार्श्वं तु त्रिंशदङ्गुलसंमितम् ।
वायव्याग्नेयगं पार्श्वं द्विचत्वारिंशदङ्गुलम् ॥ २६ ॥
सार्धैश्चतुर्दशतिलैर्युक्तमेषेष्टकाकृतिः ।
अर्ध्यामहत्पार्श्वमिते द्वे पार्श्वे संगताग्रके ॥ २७ ॥

षट्चत्वङ्गुलं तृतीयं स्यादणूकाऽऽद्या त्रिकोणका।
द्वे पार्श्वे पूर्ववज्ज्ञेये तिरश्च्यौ त्रिंशदङ्गुले ॥ २८ ॥
पक्षेष्टकाकृतिश्चैषाऽणूकाऽन्या चतुराश्रिका।
अस्या एकाक्ष्णयारज्जुस्त्रिंशदङ्गुलसंमिता ॥ २९ ॥
सप्तपष्ट्यङ्गुलाऽन्या स्यादत्यष्टिविंतितिलैर्युता।
षोडशीपक्षजाणूकापक्षाग्रीयाग्रर्धीष्टकाः ॥ ३० ॥
अग्रदीर्घादिकाश्चान्या एतासां द्विविधा कृतिः।
न्युब्जोत्तानैस्तु करणैरिष्टसंख्यानुरूपतः ॥ ३१ ॥
षोडश्यस्तु शतं सार्धमर्ध्याश्चाब्धियुतं शतम्।
पाद्यास्तु शतसंख्याका एकसप्ततिसंयुताः ॥ ३२ ॥
पक्षेष्टकास्तु षट्षष्टियुक्तं शतचतुष्टयम्।
चतुर्विंशतिसंख्याकाः पक्षमध्येष्टका इह ॥ ३३ ॥
चत्वारिंशत्तया चाष्टौ पक्षाग्रीयेष्टका मताः।
नवाणूकास्त्रिकोणाः स्युस्त्रयस्त्रिंशत्तथाऽपराः ॥ ३४ ॥
अणूकानामभावे तु तत्संख्याः षोडशीष्टकाः।
चोडान्विताः पञ्चयुतं सहस्रं प्रथमे मताः ॥ ३५ ॥
षट्पाद्या नाकसच्चोडाश्चतस्रः पक्षसंज्ञिकाः।
सार्धसप्तविधस्याग्नेरेतन्मानं मपश्चितम् ॥ ३६ ॥
विधान्यत्वे तु पुरुषं साधयेच्छुल्बमार्गतः।
प्रक्रमादिप्रमाणानि तस्यैव पुरुषस्य हि ॥ ३७ ॥
षडङ्गुलयः किंचिदूनचतुर्दश तिला अपि।
ऊर्ध्वप्रमाणं सर्वासामिष्टकानां भवेदिह ॥ ३८ ॥
दश चोडा नाकसदस्तदर्धोत्सेधका मताः।
गार्हपत्यस्य तु चितेः करणं वक्ष्यतेऽधुना ॥ ३९ ॥
तत्र द्वात्रिंशदङ्गुल्यो द्वयोः फलकयोर्मितिः।
अन्ययोस्तु द्वयोर्मानमङ्गुलानि त्रयोदश ॥ ४० ॥
सहपादतिलोपेतचतुर्विंशतिकैस्तिलैः।
एवं चतुर्भिः फलकैस्तद्दीर्घचतुरस्रकम् ॥ ४१ ॥
करणेनेष्टकाः कार्यास्तेन पञ्चोत्तरं शतम्।
नैर्ऋत्याख्येष्टकास्तिस्र एतेन करणेन हि ॥ ४२ ॥

परिमण्डलपक्षे तु व्यायामार्धेन मण्डलम् ।
तन्मध्ये परिधिं स्पष्टं चतुरश्रं समं लिखेत् ॥ ४३ ॥
चतुर्भिस्तु तिलैर्हीनमष्टपष्ट्यङ्गुलं च तत् ।
त्रेधा सम विभज्याथ प्राक्प्रत्यग्दक्षिणोत्तरम् ॥ ४४ ॥
जाता नवेष्टकास्तत्र दिक्स्थं चापचतुष्टयम् ।
प्रत्येकं तु त्रिधा कृत्वा तत्र द्वादश चेष्टकाः ॥ ४५ ॥
द्वाविंशत्यङ्गुलं चैकविंशत्या च तिलैर्युतम् ।
नवानां चतुरश्राणां करणं त्वेकमेव हि ॥ ४६ ॥
प्रधिमध्यं द्वितीयं स्याच्चतुर्भिः फलकैर्युतम् ।
प्रध्यन्तं तु तृतीयं च त्रिकोणं फलकैस्त्रिभिः ॥ ४७ ॥
प्रधिमध्यीयपार्श्वे द्वे दीर्घे प्राग्वदथापरे ।
तिलैर्दशभिरूने द्वे त्र्यधिके च दशाङ्गुले ॥ ४८ ॥
तन्मध्ये दीर्घफलकं तक्षेद्धनुरिवात्र च ।
यथा सूर्यतिलोपेतमङ्गुलं तु शरो भवेत् ॥ ४९ ॥
प्रध्यन्तस्यैकपार्श्वं तु चतुरश्रवदेव हि ।
त्रयोदशाङ्गुलं त्वन्यत्तिलैर्दशभिरूनितम् ॥ ५० ॥
बाह्यपार्श्वं तिलद्व्यूनं षड्विंशत्यङ्गुलं च तत् ।
तक्षेत्सप्ततिलोने द्वे अङ्गुले स्याद्यथा शरः ॥ ५१ ॥
विदिक्षु विषमे कोणाः समे दिक्षु भवन्ति च ।
एवं मण्डलपक्षेऽत्र मानमेतत्प्रपञ्चितम् ॥ ५२ ॥
धिष्ण्यानां प्रमाणं तु पिशीलं सूत्रचोदितम् ।
तच्च षोढा वदन्त्यार्या बाह्वोरन्तरमादिमम् ॥ ५३ ॥
रत्निस्तथाऽरत्निमितं द्वात्रिंशदङ्गुलं त्विह ।
षट्त्रिंशदङ्गुलं चैव षष्ठं प्रादेशसंमितम् ॥ ५४ ॥
अष्टाङ्गुलैस्तु फलकैश्चतुर्भिश्चतुरश्रकम् ।
एतेनैकोनषष्टिः स्युराग्नीध्रीयेष्टका इह ॥ ५५ ॥
अष्टाङ्गुले द्वे फलके द्वे चान्ये तु षडङ्गुले ।
एतेन करणेनात्र होत्रीयाख्यास्तु विंशतिः ॥ ५६ ॥
अष्टाङ्गुले द्वे फलके द्वे चान्ये द्वादशाङ्गुले ।
एवं करणमेतेन द्वाविंशतिरिहेष्टका ॥ ५७ ॥

धिष्ण्येष्टकास्त्वेकशतं करणैः स्युस्त्रिभिः पृथक् ।
एतासामुपधानं तु यथा रत्निमितं समम् ॥ ५८ ॥
धिष्ण्येष्टकासु सर्वासु गार्हपत्येष्टकासु च ।
अण्वाद्यङ्गुलतो मानं न त्विहाऽग्निकमङ्गुलम् ॥ ५९ ।
ऊर्ध्वमानेऽपि सर्वासामिष्टकानामयं विधिः ।

---

अथ प्राग्वंशकरणम्—

यज्ञं चिकीर्षुरादौ तु गणपत्यादिपूजनम् ॥ ६० ॥
कृत्वाऽथ देवयजनयोग्यां भूमिं प्रकल्पयेत् ।
पृष्ठ्यासूत्रं तत्र दद्यात्प्राञ्चं त्रिशाधिकं स्थिरम् ॥ ६१ ॥
अत्र साधारणं वक्ष्ये पुरुषादिप्रमाणकम् ।
समस्थितो वा पादाग्रस्थितो वा यजमानकः ॥ ६२ ॥
ऊर्ध्वबाहुः स पुरुषः पञ्चारत्निः प्रकीर्तितः ।
तस्य विंशाधिकशततमो भागोऽङ्गुलं स्मृतम् ॥ ६३ ॥
अङ्गुलस्य चतुस्त्रिंशो भागस्तु तिलसंज्ञकः ।
अग्निमानेऽङ्गुलमिदं विहारादिषु तूच्यते ॥ ६४ ॥
चतुर्दशाणुभिर्वाऽथ कोशस्थाव्यग्निभिस्तिलैः ।
अष्टभिर्वा यवैः प्रोक्तं चतुर्थं लौकिकाङ्गुलम् ॥ ६५ ॥
प्रादेशश्च वितस्तिश्च द्वादशाङ्गुलमानतः ।
जिनाङ्गुलस्त्वरत्निः स्याद्रत्निर्व्यष्टधंश्च ईरितः ॥ ६६ ॥
चतुर्विंशाङ्गुलो हस्तः शम्या षट्त्रिंशदङ्गुला ।
द्वात्रिंशदङ्गुलो जानुर्बाहुस्तु द्विपदः स्मृतः ॥ ६७ ॥
अष्टाशीतिशतं स्त्रीषा तिर्यगक्षश्चतुःशतम् ।
षडशीतियुगं प्रोक्तं त्रिविधं पदमीरितम् ॥ ६८ ॥
तत्र तिथ्यङ्गुलं मुख्यं तथा च द्वादशाङ्गुलं ।
दशाङ्गुलमपि क्षुद्रं लौकिकं वा क्वचिद्भवेत् ॥ ६९ ॥
पदेनैकेनैकपदः प्रक्रमः परिकीर्तितः ।
द्वाभ्यां तु द्विपदः प्रोक्तस्त्रिभिश्च त्रिपदः स्मृतः ॥ ७० ॥
प्रक्रमाङ्गुलयः पञ्चचत्वारिंशत्परोऽवधिः ।

द्विपदः क्षुद्रमानेन विधैकत्वे नखाङ्गुलः ॥ ७१ ॥
चतुर्षु द्विविधाद्येषु चतुर्विंशतिरङ्गुलः ।
त्रिंशदङ्गुलमात्रस्तु षड्विधादिषु सप्तसु ॥ ७२ ॥
त्रिपदस्त्वत ऊर्ध्वं स्याच्चित्यर्काङ्गुलमानतः ।
साग्निचित्ये क्रतावग्निसमावेशो यथा भवेत् ॥ ७३ ॥
तथा प्रक्रमक्लृप्तिः स्याद्यावत्प्रक्रमकल्पना ।
ऊर्ध्वं बौधायनप्रोक्तं मानदण्डाविवर्धनम् ॥ ७४ ॥
अथवाऽऽदित एव स्यादग्न्यावेशानुरूपतः ।
अत्रार्धाष्टमके ह्यग्नौ प्रक्रमस्त्रिंशदङ्गुलः ॥ ७५ ॥
अनेन च त्रिपञ्चाशत्प्रक्रमां मापयेद्ध्रुवम् ।
प्राञ्चं तथैव चोदञ्चं षट्त्रिंशत्प्रक्रमाधिकाम् ॥ ७६ ॥
प्रान्त्यशङ्कू ततो दत्त्वा विहारं साधयेत्सुधीः ।
द्विप्रक्रमा पश्चिमान्ते पत्नीशालाऽऽदितो भवेत् ॥ ७७ ॥
ततः प्राग्द्वादशायामा दशविस्तृतिसंयुता ।
प्राग्वंशादिस्वतीकाशा मध्योच्चा पार्श्वनिम्नगा ॥ ७८ ॥
पुरस्तादुन्नता कार्या पश्चान्नीचा परिश्रिता ।
गवाक्षपञ्चकवती शाला तोरणमण्डिता ॥ ७९ ॥
तस्याः पश्चिमशङ्कोस्तु प्रावसार्धप्रक्रमद्वये ।
शङ्कुः स संचरान्त्यः स्यात्ततः प्राक्धिष्ण्यमेखला ॥ ८० ॥
षडङ्गुला ततः प्राक्स्याद्गार्हपत्यस्य धिष्ण्यम् ।
सप्तविंशत्यङ्गुलं स्यात्ततः क्रमचतुष्टयम् ॥ ८१ ॥
तन्मध्ये प्राकृती वेदिः शर्करोच्छ्रायणादि च ।
ततः प्राग्गार्हपत्यस्य चितिक्षेत्रं समन्ततः ॥ ८२ ॥
षण्णवत्यङ्गुलं तस्माच्छर्करार्थं षडङ्गुलम् ॥
तस्मात्प्रक्रममात्रस्तु शालान्तः संचरः स्मृतः ॥ ८३ ॥
द्वादशप्रक्रमाणं च विभाग इति कीर्तितः ।
अन्तरालं पञ्चधा वा षोढा वेत्यादिकल्पतः ॥ ८४ ॥
दक्षिणाग्नेरायतनं यज्वस्थानादिक भवेत् ।
ऐशान्यां खरमुच्छिष्टमुदङ्निम्नं प्रसाधयेत् ॥ ८५ ॥
द्विपदो द्वारविस्तारोऽरत्निमात्रोऽपि वा भवेत् ।
पार्श्वनिम्नत्वमेवापि नाभिमात्रमुदाहृतम् ॥ ८६ ॥

अदीक्षितस्योपरिष्टाद्वायव्यस्य पशोः कृतिः ।
इष्टकानां भवेत्त्र्यादिदीक्षाकल्पेष्वियं स्थितिः ॥ ८७ ॥
मासादिदीक्षाकल्पेषु दीक्षितस्यैव सा भवेत् ।
मृन्मय्यस्त्विष्टकाः कार्या यथाकाले भवन्ति ताः ॥ ८८ ॥
मण्डला ऋषभा चेति चिह्नयेदिष्टकासु च ।
गोशकृद्विक्षपत्राद्यैस्तुषैराम्रादिपर्णकैः ॥ ८९ ॥
पचन्ति लोहिनीः सर्वास्त्विष्टकाः स्युर्दृढा यथा ।
छिन्नैकदेशा खण्डा स्यात्किंचित्कृष्णाऽपि कृष्णका ॥ ९० ॥
[स्यात्तु] लोहान्यवर्णा वा लक्ष्मणा सा प्रकीर्तिता ।
भिन्ना तु स्फुटिता ज्ञेया नोपदध्याद्विरोपिता ॥ ९१ ॥
अमृन्मयैः पुष्कराद्यैर्नेष्टसंख्यां प्रपूरयेत् ।
आद्यं चिन्वानाश्चिन्वीत साहस्रमिति वै श्रुतिः ॥ ९२ ॥
द्वितीयं तु द्विसाहस्रं त्रिसाहस्रं तृतीयकम् ।
ज्यायांसमत ऊर्ध्वं तु चिन्वीतोत्तरमुत्तमम् ॥ ९३ ॥
पञ्चचितीकमेकैके प्रस्तारे द्विशतं मतम् ।
संख्येयकार्योच्चचोडाभिर्लोकसद्भिश्च पञ्चभिः ॥ ९४ ॥
साहस्रं जानुदघ्नं स्यान्नाभिदघ्नं द्वितीयकम् ।
आस्यदघ्नं त्रिसाहस्रमत ऊर्ध्वं त्रिधोदितम् ॥ ९५ ॥
महान्तं च बृहन्तं च ह्यमितं काम्यमीरितम् ।
महान्तं तु त्रिसाहस्रादुच्चत्वेन निरूपितम् ॥ ९६ ॥
बृहन्तं च त्रिसाहस्राद्द्वैयाधिक्यं प्रकीर्तितम् ।
तथाऽपरिमितं त्रिभ्यः साहस्रेभ्यस्त्वसंख्यकम् ॥ ९७ ॥

---

अथ गार्हपत्यचितीष्टकोपधानम् —

शुल्वमन्त्रोपधानं तु चतुरश्रस्य कथ्यते ।
प्रागायतानां सप्तानां रीतिराद्यचिताविह ॥ ९८ ॥
एवमेवापरे एता द्वितीये तूदगायताः ।
एकविंशतिसंख्याभिश्चितिरेवं तु पञ्च ताः ॥ ९९ ॥
मध्यरीतौ द्वितीयाद्याश्चतस्र उदगन्तकाः ।
पूर्वस्यामपरस्यां च चतुर्थीपञ्चमीद्वयम् ॥ १०० ॥

एवमष्टौ मन्त्रवत्यस्त्ववशिष्टास्त्रयोदश ।
लोकंपृणा अथैतासां प्रादक्षिण्यक्रमात्स्थितिः ॥ १०१ ॥
अपरस्मिन् द्वितीयाद्याश्चतस्रः पूर्वसंस्थकाः ।
उत्तरस्यां दक्षिणस्यां चतुर्थीपञ्चमीद्वयम् ॥ १०२ ॥
एवमष्टौ मन्त्रवत्यः शिष्टा लोकंपृणाः क्रमात् ।

---

अथ महावेदिसदोहविर्धानाग्नीध्रीयमार्जा-
लीयोपरवधिष्ण्यादिमानान्युच्यन्ते—
प्राग्वंशपूर्वशङ्कोस्तु पुरस्तात्प्रक्रमत्रये ॥ १०३ ॥
वेदिपाश्चात्यशङ्कुः स्यादयमेवात्र संचरः ।
पूर्वोक्तः प्रक्रमस्त्वत्र वेदिमानं भवेदिति ॥ १०४ ॥
सदआदीनि मानानि सोमवत्स्युररत्निना ।
पाश्चात्यशङ्कुतः प्राक्स्यात्पृष्ठ्यायां प्रक्रमत्रये ॥ १०५ ॥
सदःपश्चिमगः शङ्कुस्तस्मात्प्राक्चतुष्टये ।
प्रादेशोने तथा शङ्कुः स सदोमध्यगः स्मृतः ॥ १०६ ॥
तस्माद्दक्षिणतोऽरत्नावौदुम्बर्यवटो भवेत् ।
मध्यात्प्राक्स्याद्द्विके शङ्कुर्धिष्ण्यानां पश्चिमावधिः ॥ १०७ ॥
षडङ्गुलोने चैकस्मिन्धिष्ण्यपूर्वावधिस्ततः ।
प्रमाणमन्तरालं च धिष्ण्यानां स्यादरत्निना ॥ १०८ ॥
अरत्निमात्रे सदसः पूर्वान्तस्तु ततः पुरः ।
सत्र्यङ्गुले द्विके शङ्कुर्हविर्धानापरावधिः ॥ १०९ ॥
सूत्रे प्रमाणानुक्तत्वादवशिष्टोऽत्र संचरः ।
ततः पुरस्ताच्छङ्कुः स्यात्त्रिके साष्टादशाङ्गुले ॥ ११० ॥
मार्जाल्याग्नीध्रमध्यीयः पाश्चात्योपरवावधिः ।
स षडङ्गुल एकस्मिन्पौरस्त्योपरवान्तकः ॥ १११ ॥
सप्रादेशे द्विके शङ्कुर्हविर्धानपुरोवधिः ।
ततः प्राक् स्यात्त्रिके शङ्कुः पुच्छाग्रीयः स ईरितः ॥ ११२ ॥
अग्निक्षेत्रं ततः प्राक्स्यादपरे श्येनकेऽत्र तु ।
त्रयोदशस्तु मूर्ध्नोऽन्तः पदार्धे संचरः पुरः ॥ ११३ ॥
तस्माद्यूपावटीयस्तु पदार्धे पूर्वरोपितः ।
वेद्यायामप्रमाणं हि त्रिंशदङ्गुलमानतः ॥ ११४ ॥

अङ्गुलानां सहस्रं तु जातमेवमशीतियुक् ।
हविर्धानस्य दक्षार्धे प्राच्यं सूत्रं तु मध्यतः ॥ ११५ ॥
दत्त्वा चोपरवाङ्क्योर्मध्ये सूत्रमुदग्गतम् ।
संपातेऽरत्निमात्रं तु चतुरश्रं समं लिखेत् ॥ ११६ ॥
विदिक्कोणस्थशङ्कुभ्यः प्रादेशार्धेन मण्डले ।
कृते भवन्त्युपरवाः प्रादेशस्यान्तरालकाः ॥ ११७ ॥
नवारत्निस्तु विस्तारः सदसः सूत्रचोदितः ।
सप्तविंशतिरायामः पृष्ठ्योदीचीह मध्यगा ॥ ११८ ॥
मातृदत्तस्त्विदं मानं दर्शपेयादिषूक्तवान् ।
अथवाऽष्टादशायामं पदमाने पठारमध्यम् ॥ ११९ ॥
मध्ये त्वौदुम्बरीस्थानं तस्मादुभयतः समम् ।
औदुम्बरीमितोच्चत्वं पार्श्वयोर्नाभिसंमितम् ॥ १२० ॥
पूर्वापरद्वारयुक्तमाच्छाद्यं नवभिः कटैः ।
नवारत्नि हविर्धानमिह कॢप्तं दशाथवा ॥ १२१ ॥
पूर्वापरद्वारयुक्तं समं छाद्यं त्रिभिः कटैः ।
अथ वेद्या उत्तरासादुदक्प्रक्रममात्रके ॥ १२२ ॥
चात्वालयाम्यपार्श्वस्य तत्र मध्यस्ततो गुदक् ।
स भवेत्तु चतुष्कोणः शम्यामात्रः समन्ततः ॥ १२३ ॥
वेद्यंसाद्दक्षिणे पश्चादुदगेकं निधाय च ।
तस्मादुदक्चतुष्कोणो द्विपदो ह्यत्र चोत्करः ॥ १२४ ॥
चात्वालोदक्प्रक्रमान्ते शामित्र यावदर्थकम् ।
तत्पूर्वार्धे तु वह्निष्ण्यमिष्टकाभिः प्रकल्पयेत् ॥ १२५ ॥
कातीये तूत्तरात्सौम्याश्रुवध्यं रथमात्रके ।
उदक्स्यात्प्रात्र शामित्रं रथमात्रे भवेदिति ॥ १२६ ॥
वेद्यंसोत्करयोर्मध्ये यादृक्पोदग्संमिते ।
शामित्रस्य भवेद्धिष्ण्यमित्यापस्तम्बकं स्फुटम् ॥ १२७ ॥
मार्जालयाग्नीध्रध्यौयादुदक्सूत्रे प्रसाधिते ।
वेदिपार्श्वगसूत्रेऽस्य संपातो यत्र वै भवेत् ॥ १२८ ॥
तस्माद्द्व्यरत्नि. परितो ह्याग्नीध्रस्य मण्डपः ।
षडरत्निश्चतुष्कोणो याम्यद्वारः परिश्रितः ॥ १२९ ॥

द्वारमानं तु बाधूलेऽरत्निर्वा षोडशाङ्गुलम् ।
तद्विवपरिश्रयाभावात्सर्वं द्वारमितीतरे ॥ १३० ॥
तस्मिन्नुदङ्मध्यसूत्रे धिष्णियं स्यादरत्निना ।
यथान्तर्वेदिधिष्ण्योदक्संचरोऽत्र पदार्थकः ॥ १३१ ॥
मार्जालीयोऽप्येवमेव स तूदग्द्वारवानिह ।
धिष्ण्ययाम्यां संचरः स्याद्यथान्तर्वेदि पूर्ववत् ॥ १३२ ॥
तस्मिन्दक्षिणभागे तु प्रक्षालनखरो भवेत् ।
मण्डपौ वेदिबद्धौ ह्यथवा शुद्धादिग्गतौ ॥ १३३ ॥
मध्ये वेदेरित्युक्तत्वान्मध्यत्र्यंशेऽनयोः स्थितिः ।
उत्तरांसे महावेद्यामास्तावः परिकीर्तितः ॥ १३४ ॥
अच्छावाकस्य धिष्ण्यं तु ह्यधिकं चतुरङ्गुलैः ।
औदुम्बरी निखातोर्ध्वं यजमानेन संमिता ॥ १३५ ॥
तयोपरवपूर्वस्यां पात्रपर्यासकः खरः ।
तस्मात्पुरोऽवशिष्टोऽत्र मण्डपान्तस्तु संचरः ॥ १३६ ॥
पूर्वग्रन्थानुसारोऽयं विहारः परिकल्पितः ।

अथ शुल्बोक्तप्रकारेणाग्निं विमिमीते—

अपरस्य श्येनचितो वक्ष्ये पुंमानतोऽङ्कनम् ॥ १३७ ॥
यूपावटापरमान्तात्पदार्थं संचरं त्यजेत् ।
अग्निक्षेत्रं ततः पश्चात्सपादपुरुषत्रयम् ॥ १३८ ॥
तत्राऽऽद्यचिह्नं पृष्ठ्यायां ततः प्राक्पादहीनके ।
पादद्वयेऽ६०थ पुरुषे१२० त्वर्धे६० पादे च३० पादके३० ॥१३९॥
आद्यात्सप्तसु चिह्नेषु न्यन्त्येपूदक्प्रसाधयेत् ।
तत्राङ्कनं चिह्नदेशाद्दक्षिणोत्तरपार्श्वयोः ॥ १४० ॥
प्रथमात्पुरुषे शङ्कुर्द्वितीयात्पादसंमिते ।
शङ्कुत्रयं तृतीयात्स्यात्त्रिपादे प्रथमस्ततः ॥ १४१ ॥
पुरुषार्धंशत्रितयविहीने पुरुषद्वये ।
नितोद्जनकावेतौ ततः पादे तृतीयकः ॥ १४२ ॥
एवमेव चतुर्थात्स्यात्पञ्चमात्पादमानके ।
षष्ठादपि चतुर्थांशे मूर्ध्नोऽन्तः सप्तमेऽङ्कके ॥ १४३ ॥
भित्तूर्ध्वसूत्रयोर्मध्ये पक्षाग्राणां स्थितिर्भवेत् ।
पुरुषस्य चतुर्थेन चतुरश्रचतुष्टयम् ॥ १४४ ॥

कृत्वाऽक्ष्णया द्विधा कुर्यादग्रीशार्धानि संत्यजेत् ।
सार्धाष्टयशाविहीने तु पुरुषे मध्यसूत्रकम् ॥ १४५ ॥
पक्षसंनमनार्थं हि दद्यात्प्रागपरायतम् ।
तस्मिञ्जनकशङ्कुभ्या पुरुषायामदण्डयोः ॥ १४६ ॥
मेलन यत्र जायेत त नितोद प्रकल्पयेत् ।
तस्मात्प्राक्पुरुषेऽन्य हि नितोद पूर्ववत्त्विह ॥ १४७ ॥
नितोदपक्षमूलाग्रान्त्येषु शङ्कून्प्ररोपयेत् ।
मूर्धान्तारसर्वशः शङ्कून्सूत्रेण परिवेष्टयेत् ॥ १४८ ॥
श्येनाकृतिर्थिरपक्षो व्यस्तपुच्छश्चतुर्दलः ।
अन्तः सप्तविधो ह्यग्निः प्रादेशारत्नियुग्भवेत् ॥ १४९ ॥
पुच्छं त्रिभक्तमायाममात्माऽष्टौ द्विमित शिरः ।
पत्वारः पक्षविस्तारः साष्ट्यष्टौ दीर्घता मता ॥ १५० ॥
शिरोऽन्त्ये चाऽऽत्मकण्ठासश्रोणिमूलास्तु पादिकाः ।
पुच्छमूलाग्रगे चान्या रीतय प्रत्रमात्मकाः ॥ १५१ ॥
अङ्कनावसरे त्वेषु स्थानेष्वङ्कप्रसाधयेत् ।
पश्चादङ्कुटकाश्लिष्टमूर्ध्वमुद्योजन तु तत् ॥ १५२ ॥
अन्तर्याम स्वङ्कुटास्य सूक्ष्माग्र वक्रकाष्ठजम् ।
प्राश्व काष्ठ चाङ्कुटस्पृग्दीर्घमीषेति सञ्ज्ञितम् ॥ १५३ ॥
उद्योजनोर्ध्वभागस्थ. काष्ठकीलः स्वगल्पकम् ।
फालाङ्कुटकयोगार्थं लोहज वलयं शफम् ॥ १५४ ॥
लोहफालः कर्षसहो शष्प्र(ष्ठ)पदनिरूपितः ।
ईषाग्राधःस्थित दारु रज्जुप्रोत तु ताल्कम् ॥ १५५ ॥
सीरेषावेष्टकारज्जुर्वरत्रास्याऽश्च चर्मजा ।
गलशृङ्गादिरज्जूना समुदाय शणादिजम् ॥ १५६ ॥
एतत्सर्वं प्रतीनाहवान्य द्वित्व गणद्वयात् ।
युगप्रान्तगते शम्ये मण्डूक्यौ ते प्रकीर्तिते ॥ १५७ ॥
बलीवर्दौ युजौ मोक्तौ द्वौ द्वौ प्रतियुग त्विह ।
वृषस्कन्धोपरिस्थ तु तिर्यक्काष्ठ युग मतम् ॥ १५८ ॥
एतद्गुणविशिष्टं तु लाङ्गल समसाधयेत् ।
धूर्तभाष्याद्यपादेवमुक्त लाङ्गललक्षणम् ॥ १५९ ॥
कीनाशाः कर्षकाः मोक्ता बलीवर्दा वृषाः स्मृताः ।

सीतान्तरालं सपरः सीता लाङ्गलपद्धतिः ॥ १६० ॥
बहुदर्भमयो मुष्टिर्मुष्टिरिति कथ्यते ।

अथ प्रथमायाश्चितेः शुल्वोपधानम्—

प्रस्तारस्याऽऽदिमस्याथ वक्ष्ये शुल्वोपधानकम् ॥ १६१ ॥
पुच्छाग्ररीतौ संसक्ताः पाद्याः स्युर्दश पञ्च च ।
षोडश्यः षड्द्वितीयस्यां तृतीयस्यां चतुष्टयम् ॥ १६२ ॥
पाद्याश्चतुर्थ्यां पञ्चैवं पुच्छे स्युस्त्रिंशदिष्टकाः ।
आत्ममूलाख्यपञ्चम्यां संसक्ताः पञ्च पादिकाः ॥ १६३ ॥
षष्ठ्यां चतस्रः षोडश्यः सप्तम्यां रुद्रपादिकाः ।
अष्टम्यादिचतुष्के तु षोडश्यः पञ्च पञ्च च ॥ १६४ ॥
अन्त्या बाह्यविशेषाः स्युरग्नीशानाग्रगाश्च ताः ।
अग्राणामपरप्रान्तश्चाप्ययाग्रमपूरकः ॥ १६५ ॥
यथायोगं तु मध्यस्था द्वादश्यां रुद्रपादिकाः ।
त्रयोदश्यां चतस्रः स्युः षोडश्यस्तु ततः पुरः ॥ १६६ ॥
चतुर्दश्यां पञ्च पाद्या एवं षष्टिरिहाऽऽत्मनि ।
षोडश्यौ द्वे पञ्चदश्यां षोडश्यां पादिकात्रयम् ॥ १६७ ॥
ततः शिरोग्रवार्धका शिरस्येवं षडिष्टकाः ।
अष्टम्यादिचतुष्कस्य पार्श्वयोः पक्षसंस्थितिः ॥ १६८ ॥
चतस्रो रीतयः पक्ष एकैकस्यां त्रयोदश ।
पक्षाप्ययास्तु मूलस्थाः पक्षमध्यास्तु मध्यतः ॥ १६९ ॥
पक्षाग्रीयाः प्रान्त्यसंस्था अन्याः पक्षेष्टकाः स्मृताः ।
एकैकस्मिंस्तु पक्षे ता द्विपञ्चाशदिहेष्टकाः ॥ १७० ॥
पुच्छात्मशीर्षपक्षाणां मिलित्वा तु शतद्वयम् ।
प्रस्तारेऽस्मिन्सप्तपञ्चाशतस्रः पुच्छरीतयः ॥ १७१ ॥
दश चाऽऽत्मनि शीर्षे द्वे एवं षोडशसंख्यकाः ।
विषमे ता उदीच्यः स्युरेतद्भिन्ना शिरोग्रगा ॥ १७२ ॥
पक्षयो रीतयस्तद्वच्चतस्र उदगायताः ।
तत्र मन्त्रोपधानादि पूर्ववत्स्पष्टमग्रध्यते ॥ १७३ ॥

त्र्यालिखितां मध्ये—

यस्यां तु सरला लेखा सर्जुलेखा प्रकीर्तिता ।
प्रदक्षिणवृता लेखा दक्षिणावृदिह स्मृता ॥ १७४ ॥

यस्यां सव्यावृता लेखा सव्यावृदिति सेष्टका ।
ऊर्ध्वलेखास्तु तिस्रः स्युर्यस्यां त्र्यालिखिता मता ॥ १७५ ॥
ऋजुलेखाः पुरः पश्चान्मध्ये त्र्यालिखिताः स्मृताः ।
उदक्संस्थावृतो ज्ञेया दक्षिणा दक्षिणावृतः ॥ १७६ ॥
प्राचीरुपदधातीति प्रतीचीर्यत्र वा श्रुतिः ।
गुणेषु रीतिवादोऽयमुपधानविधौ विधिः ॥ १७७ ॥
प्राचीं प्रतीचीं कर्तुस्तु गुणवाद इतीरितः ।
पुरस्तात्तु प्रतीचीश्च पश्चात्प्राचीरिति श्रुतिः ॥ १७८ ॥
तत्रापवर्गवादः स्यात्सर्वत्रैवं विचारयेत् ।
पुच्छाग्रमध्याऽऽक्रमणी पाद्या स्यात्प्रत्यगग्रगा ॥ १७९ ॥
दर्भस्तम्बं तु मध्येऽग्नेरवटं तत्समन्ततः ।
खात्वा तत्र स्रुवादीनामुपधानं भवेच्च तत् ॥ १८० ॥
येन भूमिविघातः स्यात्तत्सर्वमवटे क्षिपेत् ।
प्राणाद्वायोर्वहिर्भावस्त्वनुप्राणनमुच्यते ॥ १८१ ॥
अवेदवित्त्वविद्वान्स्याद्यज्वद्र्याद्दूरं ददेत् ।
हिरण्यशकलं त्वेवाग्नेष्टकाशब्दितं विदुः ॥ १८२ ॥
पुच्छमूले तु मध्यस्था पादिका मण्डलेष्टका ।
मण्डलोदक्पादिके द्वे अन्वारोहे प्रकीर्तिते ॥ १८३ ॥
आत्मतृतीयरीतौ तु वामभृत्स्याद्द्वितीयका ।
वामभृत्पूर्वरीत्यां तु रेतःसिक्पञ्चमी भवेत् ॥ १८४ ॥
तत्पूर्वा षोडशी चान्या तृतीया तु तदुत्तरा ।
द्वे वा तदोत्तरा काले साऽपि लोकंपृणा भवेत् ॥ १८५ ॥
आत्ममूलस्थपाद्यानां विश्वज्योतिर्द्वितीयका ।
आत्मोपांसमध्यस्थौ तु संयान्याद्या तृतीयका ॥ १८६ ॥
तत्पूर्वरीत्यां संयानी चतुर्थी पादिकाऽपरा ।
अपांशरोऽवका प्रोक्ता वाप्यादौ सेह दृश्यते ॥ १८७ ॥
शीर्ष्ण्युदक्षोडशीपार्श्वे संश्लिष्टे द्वे ऋतव्यके ।
रेतःसिचः पुरस्तात्तु पर्णाग्न्या चाऽऽत्मपार्श्वगा ॥ १८८ ॥
आत्ममूलस्थपाद्यानां तृतीयाऽऽपादिका मता ।
प्रस्रग्यामात्मपार्श्वेऽन्या षोडशी तु शुल्यापिनी ॥ १८९ ॥
ग्रीवाग्रपाद्या तत्पश्चात्षोडशी दक्षिणाग्रगा ।
तत्पश्चात्पादिकापङ्क्तौ द्वितीया च तृतीयका ॥ १९० ॥

आत्मदक्षिणपार्श्वस्थाश्चतस्रः स्युरुपादिमाः ।
तत्पश्चात्पादिकापङ्क्तौ तृतीया च चतुर्थिका ॥ १९१ ॥
तत्पश्चात्षोडशी चाऽऽद्या तत्पश्चान्मूलपादिका ।
आद्यान्तौ द्वादशैताः पुरुषाख्यचितीष्टकाः ॥ १९२ ॥
आत्माष्टम्यां चतस्रः स्युः पञ्चम्याद्यास्तु पादिकाः ।
मध्यस्थषोडशीनां तु या च प्रागपराऽऽवलिः ॥ १९३ ॥
तत्पश्चात्पादिकापङ्क्तौ पञ्चम्यादि चतुष्टयम् ।
एता द्वितीये चाभ्यासे पुंचितौ द्वादशेष्टकाः ॥ १९४ ॥
ग्रीवागतोत्तरा पाद्या पश्चात्षोडशिकाऽन्तिमा ।
तत्पश्चात्पादिकापङ्क्तौ नवमी दशमी तथा ॥ १९५ ॥
एतत्स्तूत्तरे पार्श्वे षोडश्यः स्युरुपोत्तमाः ।
तत्पश्चात्पादिकारीत्यां नवमी दशमी ततः ॥ १९६ ॥
अन्तिमा षोडशी पश्चान्मूलगोचरपादिका ।
एतास्तृतीयकेऽभ्यासे पुंचितौ द्वादशेष्टकाः ॥ १९७ ॥
शीर्ष्ण्युपोत्तमपङ्क्त्यां तु दक्षिणा पादिका ततः ।
पाश्चात्यषोडशीशिष्टं ग्रीवास्थं पादिकाद्वयम् ॥ १९८ ॥
तत्पश्चात्षोडशी शिष्टा पञ्चापस्यास्तु पूर्वगाः ।
अथ दक्षिणपक्षे तु पक्षाग्रीया तु पूर्वगा ॥ १९९ ॥
तामारभ्योत्तरासंस्थाः पञ्चापस्यास्तु दक्षिणाः ।
पुच्छे तु श्रोणिगे पाद्ये तिस्रोऽन्त्या याम्यपार्श्वगाः ॥ २०० ।
पञ्चापस्याः पश्चिमायामेताः प्रागपवर्गगाः ।
उत्तरे त्वथ पक्षे तु पक्षाग्रीया तु पूर्वगा ॥ २०१ ॥
तामारभ्यैव पञ्च स्युर्याम्यसंस्था अपस्यकाः ।
एवं विंशतिसंख्याका अपस्या दिक्चतुष्टये ॥ २०२ ॥
शिरोऽग्रा दक्षिणे पक्षे पूर्वा स्याद्द्व्यपयेष्टका ।
तद्वदुत्तरपक्षस्था चाऽऽत्माष्टम्यां चतुर्थिका ॥ २०३ ॥
तथाऽऽत्मनस्तृतीयस्यां रीत्यामाद्यान्तपादिके ।
अष्टम्यामपि चाऽऽद्यान्ते पुच्छोदक्श्रोणिपादिका ॥ २०४ ॥
यथोक्तावयवस्थानानिष्टका नव ईरिताः ।
भिष्टकासुपधानं तु नवस्थानेषु मन्त्रवित् ॥ २०५ ॥

